न्यायविशारदन्यायाचार्यश्रीमद्यशोविजयोपाध्यायविरचि

# सटीका द्वात्रिंशद्द्वात्रिंशिका.

विविधविषय संग्रह.

कच्छअबडासा निवासी शा वीरपाळ पासुनां पुत्री सुश्राविका
देवबाईनां आर्थिक सहायथी
छपावी प्रसिद्ध करनार
श्रीजैनधर्मप्रसारक सभा.

वीर संवत् २४३६ भावनगर. विक्रम संवत् १९६९.

मुंबई—निर्णयसागर प्रेसमां बाळकृष्ण रामचंद्र घाणेकरने प्रसिद्ध करनारके लीये छापी

आ ग्रंथ सुश्राविका देवलीबाइ तरफथी परमार्थ प्राप्तिना हेतुए उपावेल होवाथी सर्वे साधु मुनिराजने, साध्वीओने तेमज संस्कृतना अभ्यासी सुश्रावकोने, जैनशाला, कन्याशाला, श्राविकाशाला, संस्कृत पाठशाला विगेरे संस्थाओने तेमज जैनपुस्तकालय तथा लाइब्रेरीने भेट दाखल आपवामां आवशे.

## प्रस्तावना.

# प्रस्तावना.

नत्वामरेन्द्रनागेन्द्रकिरीटांश्चर्चितक्रमम् । जिनं द्वात्रिंशिकापीठं प्रस्ताव्यते यथामति ॥ १ ॥

निखिलनिगमागमनिपुणनररत्ननिवाससकलमहीमहिलाललामतिलकायमानश्रीकाशीनिवासिनिःशेषनिस्तुषशेमुषीतिरस्कृतवाचस्पतिवाग्विजयवित्तपरिषद्विजयाधिगतन्यायविशारदपदपरस्परविरोधगन्धानाघ्रातविश्रान्तसुखनिधानसदालोकप्रमोदावहग्रन्थशतकरणचित्तहारिमाहात्म्यातिगमाहात्म्यचमत्कृतान्तःकरणवितीर्णन्यायाचार्यपदालङ्कृतवन्तः श्रीमद्यशोविजयोपाध्यायाः कदा कतमं भूमिमण्डलं मण्डयामासुः ? । कस्मिंश्च पावने कुलेऽवापुः प्रसूतिं कल्याणप्रसूतिं ? । का च रत्नकुक्षिर्दधार गर्भे तान् जगन्मान्यान् जगन्नमस्या ? । कथं च प्रापुरपारसंसारपारावारपारप्रापणपटु वैराग्यं, तत्फलभूतां निर्वाणनगरप्रस्थानपद्धतीं निखिलागिनिःसीमसातवितरणनिपुणां प्रव्रज्यां चाधिगतवन्तः ? । के च तत्रभवतः तादृक्षमुदारमतानिबन्धनविधायेदनिबन्धनव्याकरणछन्दोऽलङ्कृतितर्काम्नायागमश्रेणिमध्यापिपन् ? । के चास्थिमज्जानुरक्तजिनधर्मतयावगतसात्त्विकतत्त्वातत्त्वविवेकप्रगुणानन्तगुणवत्त्वनिर्णीतसार्वज्ञ्यश्रीमत्कलङ्कप्रवचनपरमार्थाक्षुण्णप्रतिमं सान्निध्यकं ? । के च प्रतिज्ञाप्राग्भारतिरस्कृतसरस्वतीसुरगुरुयुगलसरस्वत्ययधारणपटवस्तच्चरणकमलमकरन्दस्वादलम्पटमधुपाला अन्तेवासिप्रवराः ? इति नैव निश्चीयतेऽस्माभिरुत्कटम्लेच्छनृपतितत्समेतरनृपत्यादिकृतविघ्नजाततत्कृतिविर-

लकालोत्पन्नैः। तथापि दलयतः कणमिव सूरूयतस्तृणमिवाकूपारं पिबतोऽगस्तेर्बिन्दुमिव क्षिप्रचटीस्थाट्यां कंकडुकमिवै-दंयुगीनमनुजानणुपुण्यप्रज्ञावदरीदृश्यमानशेषतत्कृत्याऽवबुध्यते बुधैरेतावत् यदुत वैक्रमीयाष्टादशशत्यामद्भुतस्मारितश्रुत केवलिनां सत्ता। यतस्तदीयकरकमलपूतलेखनीलिपीकृता लक्ष्यन्ते वैक्रमीया अष्टत्रिंशदधिकसप्तदशशतीया ग्रन्थाः। यद्यपि नावगम्यन्तेऽनेकलक्षास्तोकश्लोकस्थानश्लोकप्रमाणग्रन्थास्तदीयाः पूर्वप्रतिपादितनिबन्धनात्, तथाप्युपलभ्यन्त एते—

## लभ्यग्रंथाः

१ अध्यात्मसारः २ अध्यात्मोपनिषद् ३ अध्यात्मिकमतखंडनं सटीकं ४ अध्यात्ममतपरीक्षा सटीका ५ नयरहस्यं ६ नयप्रदीपः ७ नयोपदेशः नयामृततरंगिणीटीकासहितः ८ न्यायालोकः ९ जैनतर्कपरिभाषा १० ज्ञानबिंदुः ११ न्यायखंडखाद्यं (महावीरस्तवनप्रकरणं) १२ मार्गपरिशुद्धिः १३ उपदेशरहस्यं सटीकं १४ वैराग्यकल्पलता १५ द्वात्रिंशद्वात्रिंशिका सटीका १६ ज्ञानसारः (अष्टकं) १७ देवधर्मपरीक्षा १८ यतिलक्षणसमुच्चयः १९ गुरुतत्त्वनिर्णयः सटीकः २० सामाचारी प्रकरणं सटीकं २१ प्रतिमाशतकं सटीकं २२ भाषारहस्यं.

### एतेषु अष्टग्रन्थी स्वोपज्ञटीकावत्यस्ति।

### पूर्वाचार्यकृतग्रन्थोपरि स्वकृतटीकाः॥

१ शास्त्रवार्तासमुच्चयटीका, २ कर्मप्रकृति (कम्मपयडी) टीका ३ षोडशकवृत्तिः ४ अष्टसहस्रीविवरणं.

## अलभ्य–दुर्लभ्यग्रंथाः ।

१ अध्यात्मोपदेशः २ स्याद्वादरहस्यं ३ प्रमाणरहस्यं ४ सिद्धान्ततर्कपरिष्कारः ५ अनेकांतमतव्यवस्था ६ पातंजलयोगशास्त्रचतुर्थपादवृत्तिः ७ आत्मज्योतिः ८ ज्ञानार्णवः ९ विचारबिन्दुः १० त्रिसूत्र्यालोकविधिः ११ मंगलवादः १२ शठप्रकरणं १३ योगविंशिकावृत्तिः ।

अलिखिताश्चात्रान्ये गुर्जरभाषीयगद्यपद्यात्मकरासस्वाध्यायस्तवनचतुर्विंशिकाविंशिकाद्यापदादयो बहुशः सन्ति ॥

इत्याद्याः शेपीभूता अपि तत्रभवन्माहात्म्यख्यापका रत्नमञ्जूष इव ग्रन्थाः । निर्धार्यते च ततोऽपि भट्टारकाणां वचनगोचरातीता कविकुलपरिवासिना सतोषयित्री निरतिशयोपकारविरचनविचक्षणा सैषाप्यवशिष्टा ग्रन्थततिरित्यवलोक्य प्रेरिता गृहमेधिनः सभा च जैनधर्मप्रसारिका दुर्लभप्रतिककालतया झटिति पुस्तकप्रसारणपटीयसी मुद्रणकलेति विज्ञाप्य मुद्रणायानन्दाब्धिगणेशेनानुयोगाधिपेन । स्वीकृतं च तैस्तैस्तद्ग्रन्थानां मुद्रणं । व्ययितं च केषुचित्केषुचित् केश्चित् केश्चित् किंचित् किंचिद्द्रविणं ज्ञानप्रसार सकलकल्याणकल्पवल्लीवितानकन्दभूत मन्यमानैर्धन्यतमैः ।

अधुना चोपक्रान्तं द्वात्रिंशद्द्वात्रिंशिकाप्रकरणं मुद्रणाय कच्छदेशान्तर्वर्तिजखौग्रामनिवासिसुश्रावकवीरपालपासुवीरा श्रीदेवलीबाईसंज्ञया सुश्राविकया श्रीजैनधर्मप्रसारकसमितिद्वारा । तत्र प्रतिप्रकरणं द्वात्रिंशच्छ्लोकानां चरीकृतीति इत्यभिधाऽस्य द्वात्रिंशिकेति । यतोऽस्मादि शब्दानुशासनादिचतुर्विद्याविधानब्रह्मप्रतिमातिगमहिमभिः श्रीहैमशब्दानुशासने श्रीहेमसूरिपादैः–'डिन् (७-१-१४७)' शन्षष्टिंशतेरित्यनुवृत्तेर्डिनि स्त्रीत्वविवक्षायां स्वार्थिके के आपि च निष्पद्यते सा । ताश्च

द्वात्रिंशदिति प्रकरणस्यास्य संपूर्णस्याभिधा द्वात्रिंशद्वात्रिंशिकेति । यद्यप्यत्र विवृता अर्था वेविद्यन्तेऽन्यत्र, परं नैते एवंविधाः संक्षिप्ताः न च निराकृतवादिव्यूहा इति नूलशेमुषीपोषजुषामर्हमेवैतत् कुमततमस्ततिपरिकलिते कालेऽस्मिन्निति फलेग्रहिरेवायासः श्रीमतां तत्रभवतां । प्रकरणानि चात्र यानिद्वात्रिंशत्सूचितानि तानीमानि सार्थाधिकाराणि ।

आद्यं तावच्छ्रीमद्देद्यं दानद्वात्रिंशिकाप्रकरणं । तत्रानुकंपासुपात्रदाने उपक्रम्य, निरूप्य चाद्यं पुण्यबन्धहेतुकत्वेन तत्परिहार्यताशयापेक्ष्या निराकृता । निराकृतं च सुपात्रदानीयमशुद्धपिंडादिविषयमारेकणमल्पबहुनिर्जरादर्शकपारमर्षोज्ज्वं सूत्रकृतीयाहाकम्माइं इति स्याद्वादसत्तत्त्वरमणीयसूत्रयाथार्थ्यार्थव्याख्यानेन । निर्णीतश्चातुरलुब्धकदृष्टान्तेनात्रभवद्भिः स्याद्वादः सकलागमोपनिषद्भूतः ॥ १ ॥

द्वितीयं च देशनाद्वात्रिंशिकाख्यं । तत्र देशनायोग्यं पुरुषं श्रोतृभेदान् श्रुतचिन्ताभावनाज्ञानानि बालादियोग्यदेशनास्तत्क्रमं च यथार्हमादिष्टवन्तो विज्ञाः ॥ २ ॥

तृतीये च मार्गाख्ये आगम आचरणा चेति द्विविधमाख्याय मार्ग, आचरणायाः प्रशस्येतरत्वं प्रख्याप्य धार्मिकाभासयत्यादिचेष्टास्तत्फलं संविग्नपाक्षिकस्वरूपं परमपदार्थदीक्षणानुमतिं साधुश्राद्धसंवेग्याख्यं पथ्यत्रितयं च सिद्धान्तितवन्तः ॥ ३ ॥

तुरीये जिनमहत्त्वे चौदयिकापेक्ष्या नापेक्ष्यं तत्, किं तु क्षायिकज्ञानादिगुणगणरत्नरत्नाकरतया, नित्यनिर्दोषता-

---

१ वाटः पथश्च मार्गश्चेति त्रिकाण्डशेषः ।

कर्तृताऽसंस्यदातृतादावृता उपकल्पिताः परैर्महत्त्वघातुकतया तस्य निरस्यौचित्यवत्त्वयथार्थकुशलमनस्त्वे चास्थाय
जिनमहिमान निजगदुः ॥ ४ ॥
पञ्चमे च द्रव्यस्तवभक्त्यां महीशुद्धिः । अप्रीतिपरिहारः, इष्टकादिमद्विधिः, स्वाशयवृद्धिः, चैत्यविधौ
जक्त्याख्ये
बिम्बविधौ च यथोचितमूल्यार्पण, तत्प्रतिष्ठाऽसजवेऽप्यर्हदागमनस्य देवव्यक्तिमहात्म्या पूजाविधिः स्नानादिदुष्टतानि-
राकृतिरधिकारी चेति स्पष्ट स्पष्टयाञ्चक्रुः पूज्यपादाः स्पष्टशेमुषीकाः ॥ ५ ॥
षष्ठे च साधुसामग्र्ये विषयप्रतिभासतथात्मपरिणतिमत्तत्त्वसंवेदनाभिधानं ज्ञानत्रयं, तल्लिङ्गानि, भिक्षात्रैविध्यं सर्वसं-
पत्करीपौरुषघ्नीवृत्त्याख्यं, पिण्डशुद्धिमकृताकारितासंकल्पितैः, दुःखमोहज्ञानगर्भाभिधं वैराग्यत्रितय, भावशुद्धिस्वरूपं,
मालिन्यपरिहारायस्वकृता च यथार्थमाविष्कृता कृतकृत्यवर्यैः ॥ ६ ॥
धर्मव्यवस्थामये सप्तमे च भक्ष्याभक्ष्ये मांसस्य भक्ष्यता स्वतंत्रसाधनप्रसंगसाधनाभ्यां निर्लोठ्य श्रमणानामभक्ष्यमांसा-
शितासिद्धिः, स्वागमविरुद्धवादिता चाविर्भाव्य तेषां 'न मांसभक्षणे' इत्यादिस्मृतिदुष्टतामफटनं मद्यदुष्टता, मैथुना-
चरणे दोषबहुलता, तपसः स्वरूपं, असदायतनपरिहारश्चाख्यायि तत्त्वाख्यानधुर्यैः ॥ ७ ॥
वादाभिधाने चाष्टमे वादत्रैविध्यं शुष्कवादविवादधर्मवादभेदेन, कार्याकार्यविभागः, तेषां परिहारेण प्रामाण्यादेर्लक्ष-
णादेरहिंसादिपरीक्षणं नित्यानित्यत्वादिके चात्मधर्मेऽभ्युपगते घटनाऽहिंसादेर्नान्यथेति निरूपितं निगमनिष्णातैः ॥ ८ ॥
नवमे च कथाख्य । तत्र चार्थकामधर्ममिश्राभिधकथाचातुर्विध्यं । तृतीयस्या आक्षेपण्याद्या भिदाः, तासामवान्तरभे-

दाश्चाचारव्यवहारप्रज्ञप्तिदृष्टिवादाख्याः, क्रमोत्क्रमाभ्यां स्वपरश्रुतमिथ्येतरवादाभिधानाः स्वापरदेहेहामुत्रविषयसंज्ञा, ऐहिकामुष्मिकचतुर्भंग्याश्रिताश्च क्रमशः, कथारसो दानविधिः, एतासामेव प्रज्ञापकान् मिथ्यादृष्टिज्ञानिप्रमत्तरूपानाश्रित्या-कथाकथाविकथात्वं, सूत्रानिश्चये विध्याद्यैः कथकस्यानर्हतां, उपदेशे विधिप्राधान्यं चाचख्युः श्रुतचक्षुष्काग्रेसराः ॥ ए ॥

योगाह्वये दशमे च तल्लक्षणं, भवाभिनन्दिलोकपंक्तिस्वरूपं, फलहेतुभूताश्च क्रियायाः प्रणिधानप्रवृत्तिविघ्नजयसिद्धिविनियोगा आशयाः । तद्युक्तायाः (क्रियायाः) भावधर्मत्वं । (तस्याः) पातेऽप्यन्वयित्वमुदीरितवन्त उदीर्णाप्रतिमप्रतिभाः ॥ १० ॥

एकादशे पातञ्जलयोगाभिधे योगस्य चित्तस्य च लक्षणं, प्रमाणभ्रमविकल्पनिद्रास्मृतिरूपपञ्चतयीलक्षणानि, तद्धेतू अभ्यासवैराग्ये, परिणामरहितत्वेनात्मनस्तदघटना, चित्तस्य ज्ञानाङ्गत्व आत्मानर्थक्यं तच्छायासंक्रान्तेः । न च तत्स्वाभासं विषयव्यवहारश्चिच्छक्तिद्वैविध्यं भोगोपपत्तिरानुलोम्यप्रातिलोम्यशक्तिद्वितययुक्ता प्रकृतिः प्रकृतेरेव मोक्षो नात्मनः पञ्चविंशतीत्याद्यानर्थक्यं न चात्मनि मानमेवं कूटस्थत्वमपि नाधिष्ठातृत्वे प्रधानभेदाङ्गीकारे चार्हतमतप्रवेश इत्यादिना पूर्वपक्षयित्वोत्तरितं, दर्शिता च वाक्कायारोधा व्याप्तिश्चोत्तमयोगपरिणतात्मभिः ॥ ११ ॥

द्वादशे योगपूर्वसेवाभिधे गुरुदेवादिपूजासदाचारतपोमुक्त्यद्वेषभेदाच्चतुर्धा गुर्वादिपूजादिभेदाश्च दर्शिता दृष्टपरमागमरहस्यैः ॥ १२ ॥

त्रयोदशे मुक्त्यद्वेषप्राधान्याह्वये मुक्तितदुपायतत्प्रवृत्तेष्वद्वेषिणामेव न्याय्यं गुर्वादिसपर्यादि, विषगराननुष्ठानानां

निष्फलत्वं, तद्धेत्वमृतयोश्च श्रद्धायुक्तत्वारसाफल्यं, फलाशा च विघातिनी, दर्शिता तु मुग्धाना मार्गावताराय, श्रद्धया वीर्योल्लासाच्च मुक्त्यवाप्तिरिति निर्णीतं निर्णयनदीष्णातैः ॥ १३ ॥

चतुर्दश्यां चापुनर्बन्धकद्वात्रिंशिकायामेव्यन्तकामीदृशीमाश्रित्यैव प्रकृतिं व्यवहारः शान्तोदात्तचित्ततया जनस्य मोक्षस्य च बीजं स्वरूप फलं चोह्यते इति योगरूपविपयारसानुबन्धानुष्ठानानि चानूचाना ऊचिरे ॥ १४ ॥

सम्यग्दृष्टिद्वात्रिंशिकाया च पञ्चदश्यां शुश्रूषाधर्मरागौ, यथाप्रवृत्त्यपूर्वानिवृत्त्याख्यकरणत्रयं, पातेऽपि भूयोऽबन्धः, परोदीरितलक्षणजात्यत्वं, शिष्टत्वनिर्णयोऽस्य, परलक्षणनिराकृतिश्चाचचक्षे विचक्षणैः ॥ १५ ॥

षोडश्यां महेशानुग्रहाख्यायां परमतेनाख्याय महेशलक्षणं, अपाकृत्याज्ञापालनरूपं तदनुग्रहं, व्याध्यादीन् प्रसूदान्, जपफलं, माध्यस्थ्याय च शाब्दस्य सूक्ष्मस्पर्शसमतां, गुणरागपूर्वकमनुष्ठानं महेशानुग्रहं चान्ते सिद्धान्तितवन्तो विद्वत्सौरेयाः ॥ १६ ॥

सप्तदश्यां दैवपुरुषकाराख्यानायां निश्चयेन स्वातन्त्र्यं व्यवहारेण सापेक्ष्यं चानयोश्चरमावर्ते च दैवं बाधते यत्नः, सम्यग्दृष्टेरनन्तरं यथादौचित्यवृत्त्या च पल्योपमपृथक्त्वातिक्रमे चारित्रं, मार्गानुसारिताश्रद्धाप्रज्ञापनाविरतिगुणरागशक्त्यारम्भा इति चास्य लिङ्गान्युदाजह्रिरे सदाहरणकुशलैः ॥ १७ ॥

अष्टादश्यां योगभेदद्वात्रिंशिकायामध्यात्मभावनाध्यानसमतावृत्तिसंक्षयभेदैः पञ्चधा, मैत्र्यादियुक्तौचित्यप्रवृत्तस्य तत्त्वचिन्तनमध्यात्ममिति निरूप्याध्यात्म, उपकारिस्वजनस्वप्रतिपन्नासिद्धविषयिका मैत्री, मोहासुखसंवेगान्यहितयुता इति-

करुणा, आपातरम्यसङ्क्लेत्वनुबन्धयुतपरमपदसुखेषु मुदिता, करुणानुबन्धनिर्वेदतत्त्वचिन्तनेभ्योऽहिताकालासारसुखसर्वेपूपेक्षा, ज्ञानदर्शनचारित्रतपोवैराग्यभेदाद्भावना, ध्यानं तद्दोषान् खेदोद्वेगादीन् वशितादि तत्फलं, समतालक्षणं, ध्यानसाम्ययोरन्योऽन्यकारणता, समताफलं, वृत्तिरोधस्य योगत्वे प्रवृत्तिस्थिरताभ्यां मनोगुप्तेस्त्रिभेदत्वेन वृत्तिद्वयोऽन्तर्भावनीयोऽन्तिमायां, आद्ययोस्तु चत्वारोऽध्यात्माद्या अन्याः समितिगुप्तयोऽत्रैवान्तर्भाव्या यथायथं इति प्रोचिवांसो विद्वत्कुलावतंसाः ॥ १८ ॥

एकोनविंश्यां च योगविवेकाभिधायां योगत्रैविध्यमिच्छाशास्त्रसामर्थ्यभेदात् क्रमशः प्रमत्तेतरातिक्रान्तानां, त्रिधा चान्तिमो धर्मयोगसंन्यासभेदात्, आद्यो द्वितीयापूर्वकरणे, द्वितीय आयोज्यादूर्ध्वं, तात्त्विकोऽपुनर्बन्धकस्य, उत्तरस्य च व्यवहारनिश्चयाभ्यामनुमतः, सकृदावर्तादीनां चान्यथा, साश्रवः सापाय इति बहुजन्मान्तरकरः, इतरस्त्वेकजन्मा । गोत्रयोगिनिष्पन्नयोगानां शास्त्रयोगातिगत्वं, कुलप्रवृत्तचक्राणां तत्त्वं लक्षणं । तयोराद्यावञ्चकप्राप्तिरूपं कारणं । इच्छाप्रवृत्तिस्थैर्यसिद्धियमानां लक्षणानि, योगावञ्चकादीनां च जगज्जगदेकबान्धवाः ॥ १९ ॥

विंश्यां च योगावताराह्वयायां प्रथमं तावत् संप्रज्ञातं वितर्कविचारानन्दसास्मिताभेदैश्चित्रं, ततः समापत्तिं, शब्दार्थज्ञानविकल्पां सवितर्कां, ऋतंभराजनिकां निर्विचारां चासंप्रज्ञातसमाधिं च लक्षयित्वा, इतराभिप्रायेण संप्रज्ञातं ध्यानेऽन्तर्भाव्य, बाह्यान्तरपरमात्मस्वरूपं सर्वथाऽकरणनियमं चासंप्रज्ञाताभिधं योगं तद्भेदकारणं दृष्टयस्तासु बोधं आद्यानां चतसृणां सापायत्वेऽपि मिथ्यात्वमन्दतया मार्गाभिमुखत्वं मुकुलीकृतवन्तोऽमुकुलभावाः ॥ २० ॥

एकविंश्यां मित्रायां तल्लक्षण यमलक्षणं सप्तविंशतिर्वितर्काः योगबीजानि तथाभव्य मलास्पीनाय एवेस्याद्यातत्मायतिसुखकरैः ॥ २१ ॥

द्वाविंश्या ताराद्वात्रिंशिकायां तारालक्षण नियमास्तत्फलं, पखालक्षण, प्रणिधानशुश्रूषास्वरूपं, दीप्रास्वरूपं, प्राणायामत्रैविध्य, न चास्येन्द्रियरोधः इत्ते प्राणायाम तस्यैवासौ, बाह्यभावरेकः अन्तर्भावपूरणं निश्चितार्थकुम्भन (च) भावप्राणायामः । अनेन (भावप्राणायामेन) प्राणैरपि निर्वहति धर्म । चतसृष्वासु (मित्रादिषु) न वेद्यबोधो मोहगर्भं वैराग्यं चेत्यादि नोदितयन्तो नोदनपराः ॥ २२ ॥

कुतर्कग्रहनिवृत्तौ त्रयोविंश्या कुतर्कस्वरूपं, तत्त्वाप्रतिपत्तिः शास्त्रैक्यं, सांसारिकेतरफलक्रियोग्यता, स्तोपलब्धितज्ञान तथाविधबोधत्रैविध्य, करण आदरः, प्रीतिरविघ्नः संपदागमश्च, जिज्ञासा, तज्ज्ञसेवा चेति, सदनुष्ठानलक्षण, कालादिना नयादिना देशनाभेदः सर्वज्ञानां शास्त्रप्रधाना च दृष्टिः परमपदायेति निर्णीतं तत्त्वनिर्णयनिधेः ॥ २३ ॥

सद्दृष्टौ चतुर्विंश्यां सद्दृष्टिस्वरूपं, प्रत्याहारादिमत्त्वं, कान्ताधारणास्वरूपं, स्थिराया धर्मफलभोगानामपि हेयता, प्रभायामसङ्गानुष्ठानं निर्वृत्तिलाभश्च लक्षितो लक्षितलक्ष्यैः ॥ २४ ॥

क्लेशहानोपायद्वात्रिंशिकायां पञ्चविंश्यां ज्ञानक्रियासाध्या क्लेशहानिः, अन्ये तु नैरात्म्यदर्शनाद्विवेकख्यातेश्वरमद्दुःखनाशाच्च क्लेशक्षय इत्याचख्युस्तन्निराकृतम् ॥ २५ ॥

षड्विंश्यां योगमाहात्म्यद्वात्रिंशिकायां च धारणाध्यानसमाधिरूपात् संयमादतीतानागतशब्दार्थधीविज्ञानसर्वभूतरुतज्ञानं

पूर्वजातिस्मृतिपरचेतोधीतिरोधानानि, कायसंयमात् कर्मभेदारिष्टोद्भवमृतिधीर्मैत्र्या बलं, सूर्ये भुवनानां, चन्द्रे ताराव्यूहस्य, ध्रुवे तद्गतेः नाभिचक्रे कायव्यूहस्य चावगमः, कंठे क्षुत्तृड्नाशः, कूर्मनाड्यां स्थैर्यं, मूर्धज्योतिषि सिद्धदर्शनं, प्रातिभात्सर्वं हृदये चित्तसंवित्, परार्थाद्भिन्ने पुंसि ज्ञानं, प्रतिभाद्याः समाधेर्व्युत्थानस्य च विघ्नाः सिद्धयश्च, योगिनः परपुरप्रवेशकारणानीत्यादि परोदितमुक्त्वा ज्ञानं विनात्मनो विलूनशीर्णतां प्रतिपादयन्तः सदसत्प्रवृत्तिनिवृत्तिमयमेवोपपादितवन्तः संयमं । प्राग्जन्मापायशोधनं निकाचिताशुभशोषणं दृढप्रहारिमुखानां हस्तावलंबनं परमपदसोपानपद्धतिश्चायमेवेति चर्चयामासुश्चर्चाचतुराः ॥ २६ ॥

सप्तविंश्यां भिक्षुभावाभिधानायां चेतःसमाधानाद्या गुणा, भिक्षुशब्दान्वर्थता, पर्यायव्युत्पत्तयः षट्कायमर्दनादिप्रवृत्तानां भिक्षुत्वं नोचितं, द्रव्यभिक्षुता, तद्भेदाश्चेत्याचचक्षिरे पूज्यैः ॥ २७ ॥

अष्टाविंश्यां दीक्षासंज्ञायां दीक्षानिरुक्तिव्युत्पत्तिदानविधयो, वचनधर्मक्षान्तियुग्मं, वचनादसंगानुष्ठानं च, अर्वाग्वचनात् स्थूलाः तत्र सूक्ष्मा धर्मे च न लेशतोऽप्यतिचाराः, शुभशुद्धोपयोगयोः फलैक्यं, बकुशादिविचित्रत्वं चास्यां आख्यायि ख्यातकीर्तिभिः ॥ २८ ॥

एकोनत्रिंश्यां विनयाह्वयायां ज्ञानदर्शनचारित्रतपउपचारतः पञ्चधा प्रभिद्य विनयं, प्रतिरूपानाशातनारूपं भित्त्वाऽष्टविधं कायिकं, चतुर्धा वाचिकं, द्विधा मानसिकं निश्चिक्युर्व्याख्याचणाः । आद्यं द्वितीयं चार्हदादीनां भक्तिबहु

मानमर्षनानाशातनाभिक्षयोदशाना द्विपञ्चाशद्भेदं, पर्यायहीनस्यापि पाठकस्य धन्यतां, विनयफलं च विविधं व्याचकृर्व्याकरणपटवः ॥ २९ ॥

द्वात्रिंशिकायां त्रिंशत्तमायां सर्वदोषविगमादिनोपस्थापिता कवलाहारासिद्धिर्निर्भाटैः, क्षुधो नवोपमादिकर्मप्रजयताविज्ञापनादिना निरस्तेच्छायियुक्तापि देशनादिवत्तुक्तिप्रवृत्तिः, करणं सूदीरणाभिध प्रमादर्व्यंगयं यसश तन्नगवतां मतिबंधाजाधावप्रमत्तयतेरियाहारो न प्रमाद इत्यादिना सुस्थीकृतं सत्यं तत्त्ववेदिभिः ॥ ३० ॥

एकत्रिंशत्तमायां च मुक्त्यभिधायां चूर्णीकृताखर्गाचतुर्भिर्दुःखध्वंसः, परमात्मनि जीवात्मलयः, आलयविज्ञानसन्तिः, स्वातंत्र्यं, स्वरूपावस्थानं, पूर्वचित्तनिवृत्तिरित्याद्याः मुक्तिपक्षाः ॥ ३१ ॥

सज्जनस्तुत्याख्यायामन्तिमायां सज्जनदुर्जनयोर्गुणागुणौ, खलोक्तिनिरासः, सज्जनकार्यं, श्रीमद्विजयदेवसूरितः प्रशस्तिः काशीगमनपाठनादिप्यतुलोपकारकृद्गुरुस्मृतिः, पद्मविजयाख्यबन्धुस्मृतिः, सज्जनकृपाकाङ्क्षा, जैनशासननन्दिश्चातेनिरेऽत्तनुभजावैः ॥ ३२ ॥

इत्येवमतिनिरूढमतिभिर्न्यायविशारदादिपदस्थैर्गुम्फितं प्रकरणानां द्वात्रिंशं । अत्र च विवरणमपि दुर्गमपदार्थसौधसोपानभजं तन्नजयद्भिर्विहितमेव । अंकश्च पूज्यपादैर्य इह सूत्रवृत्त्योरैन्द्रैंकारशब्दाज्यां स्वकीयः सूचितः । यतोऽत्रापि सुधीर्णतपश्चाग्जारैर्वाराणस्यामुपगंगमैंकारजापमन्त्रः साधितश्च, । सम्यग्वांछासुरद्रूपमो वितीर्णवान् कवित्वविस्त्याख्येऽनुत्तमे फले । यदाहुः श्रीमत्पादा महावीरस्तुतौ–"ऐंकारजापवरमाप्य कवित्वमित्त्ववाठमसुरद्रुमुपगंगमजगरंगमिति" । द्वात्रिं-

शिकायामन्त्यायां च निजपाठविधिमुपकारिस्मरणं चोचिवांसः काशीविद्वृन्दविजयादि तु प्रपञ्चितमन्यत्र पूज्यैः समित्या चैतयेति विरम्यतेऽस्मात् । अत्र चातिगूढाभिप्रायेणातिगूढाभिप्रायैः प्रतिद्वात्रिंशिकप्रान्ते परमानन्दशब्दं स्पष्टं स्पष्टयद्भिरेकोनत्रिंश्यां च संकेतेनानुल्लेख्यमानेन केनाप्युल्लिखद्भिरर्पणादिकोऽभिप्रेतो भविष्यत्यभिप्राय इत्यनुमीयते नचानिरीक्षणाट्टीकायामपि लक्ष्यते यथालक्ष्यमूह्यं तदेतदूहविद्भिः स्वयमवबोधनीया च तज्जिज्ञासुरियं पत्रप्रेषणादिना संसदिति, दृढमाशासे । विशेषतश्च किंवदन्त्यादि तत्रभवद्विषयकं मुद्रिताध्यात्मसारादिग्रन्थावलिप्रस्तावनातो विभावनीयं विभावद्भिः क्षुणत्वाच्च न प्रयत्यते तत्र यदत्र क्षुण्णं तत्प्रमादकारितं तत्प्रचुरत्वादस्मादृश इति क्षन्तव्यं क्षमाधर्मधुराधौरेयैराधायाणौ कृपां रुचिरामिति शमस्तु सर्वसत्त्वेभ्यः ॥

अस्य ग्रन्थस्य मुद्रापणव्ययार्थमुपदेष्ट्रा पं० श्रीकेशरविजयगणिनोपकृतेयं संसदिति हर्षास्पदम् । इतिशम् ।

| | |
|---|---|
| श्रावणशुक्लपूर्णिमा<br>सं. १९६६ | प्रकटयित्री.<br>**श्रीजैनधर्म प्रसारिका सभा.**<br>भावनगर. |

## अस्य ग्रन्थस्यानुक्रमणिका.





॥ ८ ॥

सुश्राविका बाई वेवली बाई तरफथी विद्यार्थी ज्ञानदासने भेट

। न्यायविशारदन्यायाचार्यश्रीमद्यशोविजयोपाध्यायविरचिता ।

# । सटीका द्वात्रिंशद्द्वात्रिंशिका ।

## । दानद्वात्रिंशिका ॥ १ ॥

ऐन्द्रवृन्दविनताङ्घ्रियामलं यामलं जिनपतिं समाश्रिताम्। योगिनोऽपि विनमन्ति भारतीं भारती मम ददातु सा सदा ॥१॥

श्रेयोभूतानेकशास्त्रार्थसंग्रहं मनसिकृत्य द्वात्रिंशिकाप्रकरणमारभमाणो ग्रन्थकारो दानधर्मस्य प्राधान्येन परममंगलरूपत्वादादौ तद्द्वात्रिंशिकामाह–

**ऐन्द्रशर्मप्रदं दानमनुकम्पासमन्वितम् । भक्त्या सुपात्रदानं तु मोक्षदं देशितं जिनैः ॥ १ ॥**

ऐन्द्रेति–अनुकंपासमन्वितमनुकम्पापूर्वकं दानं । इन्द्रस्य संबन्ध्यैन्द्रं यच्छर्म तत्प्रदं । सांसारिकसुखान्तरप्रदानोपलक्षणमेतत् स्वेष्टबीजप्रतिधानार्थं चेत्थमुपन्यासः । भक्त्या सुपात्रदानं तु जिनैर्भगवद्भिर्मोक्षदं देशितं, तस्य बोधिप्राप्तिद्वारा जगघत्यां मोक्षफलकस्याभिधानात् ॥ १ ॥

**अनुकंपाऽनुकंप्ये स्याद्भक्तिः पात्रे तु संगता । अन्यथाधीस्तु दातृणामतिचारप्रसञ्जिका ॥ २ ॥**

अनुकंपेति–अनुकंपाऽनुकंप्ये विषये । भक्तिस्तु पात्रे साध्वादौ संगता स्यात् समुचितफलदा स्यात् । अन्यथाधीस्तु अनुकंप्ये सुपात्रत्वस्य सुपात्रे चानुकंप्यत्वस्य बुद्धिस्तु दातृणामतिचारप्रसंजिकाऽतिचारापादिका । अत्र यद्यपि सुपात्रत्वधियोऽनुकंप्येऽसंयतादौ मिथ्यारूपतयाऽतिचारापादकत्वं युज्यते, सुपात्रेऽनुकंप्यत्वधियस्तु न कथंचित्, तत्र ग्लानत्वादिदशायामन्यदाऽपि च स्वेष्टोद्धारप्रतियोगिदुःखाश्रयत्वरूपानुकंप्यत्वधियः प्रमात्वात्, तथापि स्वापेक्षया हीनत्वे सति स्वेष्टोद्धारप्रतियोगिदुःखाश्रयत्वरूपमनुकंप्यत्वं तत्राप्रामाणिकमेवेति न दोषः । अपरे त्वाहुः–तत्र प्रागुक्तं निर्विशेषणमनुकंप्यत्वं प्रतीयमानं साहचर्यादिदोषेण यदा हीनत्वबुद्धिं जनयति तदैवातिचारापादकं नान्यदा, अन्यथाधियो हीनोत्कृष्टयोरुत्कर्षापकर्षबुद्ध्याधानद्वारैव दोषत्वात् । अत एव न चानुकंपादानं साधुषु न संभवति, "आयरियअणुकंपाए गच्छो अणुकंपिओ महाभागो" इति वचनादित्यष्टकवृत्त्यनुसारेणाचार्यादिष्वप्युत्कृष्टत्वधियोऽप्रतिरोधेऽनुकंपाऽव्याहतेति । एतन्नये च सुपात्रदानमपि ग्रहीतृदुःखोद्धारोपायत्वेनेष्यमाणमनुकंपादानमेव,साक्षात्स्वेष्टोपायत्वेनेष्यमाणं चान्यथेति बोध्यम् २

**तत्राद्या दुःखिनां दुःखोद्दिधीर्षाल्पासुखश्रमात् । पृथिव्यादौ जिनार्चादौ यथा तदनुकंपिनाम् ॥३॥**

तत्रेति–तत्र भक्त्यनुकंपयोर्मध्ये आद्याऽनुकंपा दुःखिनां दुःखार्तानां पुंसां दुःखोद्दिधीर्षा दुःखोद्धारेच्छा । अल्पानामसुखं यस्मादेतादृशो यः श्रमस्तस्मात् । इत्थं च वस्तुगत्या बलवदनिष्टाननुबन्धी यो दुःखिदुःखोद्धारस्तद्विषयिणी स्वस्येच्छा-

ऽनुकंपेति कथितम् । उदाहरति–यथा जिनार्चादौ कार्ये पृथिव्यादौ विषये तदनुकंपिनामित्थंभूतजगवत्पूजादर्शनादिना प्रतिबुद्धाः सन्तः षट्कायान् रक्षन्त्विति परिणामवतामित्यर्थः । यद्यपि जिनार्चादिकं भक्त्यनुष्ठानमेव, तथापि तस्य सम्यक्त्वशुद्ध्यर्थत्वात्तस्य चानुकंपालिंगकत्वात्तदर्थकत्वमप्यविरुद्धमेवेति पंचविंशत्यादावित्थं व्यवस्थितेरस्माभिरप्येवमुक्तम् ॥३॥

अस्यासुसथमादित्यस्य कृत्यमाह–

स्तोकानामुपकारः स्यादारंभाद्यत्र भूयसाम् । तत्रानुकंपा न मता यथेष्टापूर्त्तकर्मसु ॥४॥

स्तोकानामिति–स्पष्टः । नवरमिष्टापूर्तस्वरूपमेतत्-"ऋत्विग्भिर्मंत्रसंस्कारैर्ब्राह्मणानां समक्षतः । अन्तर्वेद्यां हि यद्दत्तमिष्टं तदभिधीयते ॥ १ ॥ वापीकूपतडागानि देवतायतनानि च । अन्नप्रदानमेतत्तु पूर्तं तत्त्वविदो विदुः ॥ २ ॥ इति ॥ ४ ॥

नन्वेवं कारणिकदानशालादिकर्मणोऽप्युक्तेवापत्तिरित्यत आह–

पुष्टालंबनमाश्रित्य दानशालादिकर्म यत् । तत्तु प्रवचनोन्नत्या बीजाधानादिभावतः ॥५॥

पुष्टालंबनमिति–पुष्टालंबनं सदुपकारमाश्रित्य यद्दानशालादिकर्म प्रदेशिसंप्रतिराजादीनां । तत्तु प्रवचनस्य प्रशंसादिनोन्नत्या बीजाधानादीनां भावतः सिद्धेर्लोकानाम् ॥ ५ ॥

बहूनामुपकारेण नानुकंपानिमित्ततम् । अतिक्रामति तेनात्र मुख्यो हेतुः शुभाशयः ॥६॥

बहूनामिति–ततो निर्वृत्तिसिद्धेर्बहूनामुपकारेणानुकंपानिमित्तता नातिक्रामति । तेन कारणेनात्रानुकंपोचितफले मुख्यः

शुभाशयो हेतुः दानं तु गौणमेव वेद्यसंवेद्यपदस्थ एव तादृगाशयपात्रं तादृगाशयानुगम एव च निश्चयतोऽनुकंपेति फलितम् ॥ ६ ॥

एतदेव नयप्रदर्शनपूर्वं प्रपंचयति–

**क्षेत्रादिव्यवहारेण दृश्यते फलसाधनम्। निश्चयेन पुनर्भावः केवलः फलभेदकृत् ॥ ७ ॥**

क्षेत्रादीति–व्यवहारेण पात्रादिभेदात् फलभेदो, निश्चयेन तु भाववैचित्र्यादेवेति तत्त्वम् ॥ ७ ॥

कालालंबनस्य पुष्टत्वं स्पष्टयितुमाह–

**कालेऽल्पमपि लाभाय नाकाले कर्म बह्वपि। वृष्टौ वृद्धिः कणस्यापि कणकोटिर्वृथाऽन्यथा ॥८॥**

काल इति–स्पष्टः ॥ ८ ॥

अवसरानुगुण्येनानुकंपादानस्य प्राधान्यं भगवद्दृष्टान्तेन समर्थयितुमाह–

**धर्मांगत्वं स्फुटीकर्तुं दानस्य भगवानपि। अत एव व्रतं गृह्णन् ददौ संवत्सरं वसु ॥ ९ ॥**

धर्मांगत्वमिति–अत एव कालेऽल्पस्यापि लाभार्थत्वादेव दानस्यानुकंपादानस्य धर्मांगत्वं स्फुटीकर्तुं भगवानपि व्रतं गृह्णन् संवत्सरं वसु ददौ। ततश्च महता धर्मावसरेऽनुष्ठितं सर्वस्याप्यवस्थौचित्ययोगेन धर्मांगमिति स्पष्टीभवतीति भावः। तदाह–"धर्मांगख्यापनार्थं च दानस्यापि महामतिः। अवस्थौचित्ययोगेन सर्वस्यैवानुकंपया ॥ १ ॥" इति ॥ ९ ॥

नन्वेवं साधोरप्येतदापत्तिरित्यत आह–

साधुनापि दशाभेदं प्राप्यैतदनुकंपया। दत्तं ज्ञाताद्भगवतो रंकस्येव सुहस्तिना ॥ १० ॥

साधुनापीति–साधुनापि महाव्रतधारिणापि दशाभेदं प्राप्य पुष्टालंबनमाश्रित्यैतद्दानमनुकंपया दत्तं सुहस्तिनेव रंकस्य तदाह "श्रूयते चागमे आर्यसुहस्त्याचार्यस्य रंकदानमिति"। कुत इत्याह–भगवतः श्रीवर्धमानस्वामिनो ज्ञातात्। तदुक्तम्–"ज्ञापकं चात्र भगवान्निष्क्रान्तोऽपि द्विजन्मने। देवदूष्यं ददद्धीमाननुकंपाविशेषतः ॥ १ ॥" इति। प्रयोगश्चात्र–दशाविशेषे यतेरसंयताय दानमदुष्टं, अनुकंपानिमित्तत्वात्, भगवद्द्विजन्मदानवदित्याहुः ॥ १० ॥

न चाधिकरणं ह्येतद्विशुद्धाशयतो मतम्। अपि त्वन्यद्गुणस्थानं गुणान्तरनिबन्धनम् ॥ ११ ॥

न चेति–न चैतत्कारणिकं यतिदानमधिकरणं मतं। अधिक्रियते आत्माऽनेनासंयतसामर्थ्यपोषणत इत्यधिकरणं। कुत इत्याह–विशुद्धाशयतोऽस्यौचित्येनाशयविशुद्धेः। नायभेदेन कर्मभेदात्। अनर्थासंजयमुक्त्वाऽर्थमाक्षिपन्नाह 'अपि त्विति' अभ्युच्चये। अन्यदधिकृतगुणस्थानकान्मिथ्यादृष्ट्यादेरपरमविरतसम्यग्दृष्ट्यादिकं गुणानां ज्ञानादीनां स्थानं मतं गुणान्तरस्य सर्वविरत्यादेर्निबन्धनम् ॥ ११ ॥

नन्वेवं "गिहिणो वेयावडियं न कुज्जा" इत्याद्यागमविरोधः? इत्यत आह–

वैयावृत्त्ये गृहस्थानां निषेधः श्रूयते तु यः। स औत्सर्गिकतां बिभ्रदेतस्यार्थस्य बाधकः ॥ १२ ॥

वैयावृत्त्य इति–गृहस्थानां वैयावृत्ये तु साधोर्यो निषेधः श्रूयते, स औत्सर्गिकतां बिभ्रन्नैतस्यापवादिकस्यार्थस्य बाधकः। अपवादो ह्युत्सर्गं बाधते न तूत्सर्गोऽपवादमिति ॥ १२ ॥

सूत्रान्तरं समाधत्ते–

**ये तु दानं प्रशंसन्तीत्यादिसूत्रेऽपि संगतः। विहाय विषयो मृग्यो दशाच्छेदं विपश्चिता ॥ १३ ॥**

ये त्विति–ये तु दानं प्रशंसन्तीत्यादिसूत्रेऽपि "जे उ दाणं पसंसंति वहमिच्छंति पाणिणं। जे अ णं पडिसेहंति वित्तिच्छेअं करंति ते ॥ १ ॥" इति सूत्रकृतसूत्रेऽपि दशाच्छेदं विहाय संगतो युक्तो विषयो विपश्चिता मृग्यः ऐदंपर्यशुद्ध्या विचारणीयः। न तु पदार्थमात्रे मूढतया ग्राह्यं, अपुष्टालंबनविषयतयैवास्योपपादनात्। आह च–"ये तु दानं प्रशंसन्तीत्यादि सूत्रं तु यत्स्मृतं। अवस्थाच्छेदविषयं द्रष्टव्यं तन्महात्मभिः ॥ १ ॥" इति ॥ १३ ॥

पुनः शंकते–

**नन्वेवं पुण्यबन्धः स्यात्साधोर्न च स इष्यते। पुण्यबन्धान्यपीभ्यां ह्यन्नं भुंक्ते यतो यतिः ॥१४॥**

नन्विति–नन्वेवमपवादतोऽपि साधोरनुकंपादानेऽभ्युपगम्यमाने पुण्यबन्धः स्यात्, अनुकंपायाः सातबन्धहेतुत्वात्। न च स पुण्यबन्ध इष्यते साधोः। यतो यस्माद्यतिः पुण्यबन्धान्यपीभ्यां ह्यन्नं भुंक्ते ॥ १४ ॥

एतदेव स्पष्टयति–

दीनादिदाने पुण्यं स्यात्तददाने च पीडनम् । शक्तौ पीडाप्रतीकारे शास्त्रार्थस्य च बाधनम् ॥ १५ ॥

दीनादीति–प्रकटं भोजने दीनादीनां याचमानानां दाने पुण्यं स्यात् । न चानुकम्पावांस्तेषामदत्त्वा कदापि भोक्तुं शक्तः । अतिधाष्ट्यमवलम्ब्य कथंचित्तेषामदाने च पीडनं स्यात्तेषां तदानीमप्रीतिरूपं शासनद्वेषात्परत्र च कुगतिसंगतिरूपं । तदप्रीतिदानपरिणामाभावाच्च दोषो भविष्यतीत्याशंक्याह–शक्तौ सत्यां पीडायाः परदुःखस्याप्रतीकारेऽनुद्धारे च शास्त्रार्थस्य परामीतिपरिहारप्रयत्नप्रतिपादनरूपस्य बाधनं, रागद्वेषयोरिव शक्तिनिगूहनस्यापि चारित्रप्रतिपक्षत्वात् । प्रसिद्धोऽयमर्थः सप्तमाष्टके ॥ १५ ॥

किं च दानेन भोगाप्तिस्ततो भवपरंपरा । धर्माधर्मक्षयान्मुक्तिर्मुमुक्षोर्नेष्टमित्यदः ॥१६॥

किं चेति–किं च दानेन हेतुना भोगाप्तिर्भवति ततो भवपरंपरा मोक्षबाधावृद्धेः । तथा धर्माधर्मयोः पुण्यपापयोः क्षयान्मुक्तिः, इति हेतोरदोऽनुकम्पादानं मुमुक्षोर्नेष्टम् ॥ १६ ॥

सिद्धान्तयति–

नैवं यत्पुण्यबन्धोऽपि धर्महेतुः शुभोदयः । वह्नेर्दाह्यं विनाश्यैव नश्वरत्वात्स्वतो मतः ॥ १७ ॥

नैवमिति–नैव यथा प्रागुक्तं । यद्यस्मात्पुण्यबन्धोऽपि शुभोदयः सद्विपाको धर्महेतुर्मतः । तद्धेतुरेव दशाविशेषेऽनु-

पंगः पुण्यानुबन्धिपुण्यबन्धसंभवात् प्राणातिपातविरमणादौ तथाऽवधारणात्। न चायं मुक्तिपरिपंथी, दाह्यं विनाश्य वह्नेरिव तस्य पापं विनाश्य स्वतो नाशशीलत्वात्। शास्त्रार्थाबाधेन निर्जराप्रतिबन्धकपुण्यबन्धाभावान्नात्र दोष इति गर्भार्थः ॥ १७ ॥

**भोगाप्तिरपि नैतस्मादभोगपरिणामतः। मंत्रितं श्रद्धया पुंसां जलमप्यमृतायते ॥ १८ ॥**

भोगाप्तिरिति–भोगप्राप्तिरपि नैतस्मादापवादिकादनुकंपादानात्। अभोगपरिणामतो भोगानुभवोपनायकाध्यवसायाभावात्। दृष्टान्तमाह–मंत्रितं जलमपि पुंसां श्रद्धया भक्त्या अमृतायतेऽमृतकार्यकारि भवति। एवं हि भोगहेतोरप्यत्राध्यवसायविशेषाद्भोगानुपनतिरुपपद्यत इति भावः ॥ १८ ॥

नन्विदं हरिभद्रसंमत्या भवद्भिर्व्यवस्थाप्यते तेनैव चाभिनिविश्योक्तमित्याशंक्याह–

**न च स्वदानपोषार्थमुक्तमेतदपेशलम्। हरिभद्रो ह्यदोऽभाणीद्यतः संविग्नपाक्षिकः ॥ १९ ॥**

न चेति–न च स्वदानस्य स्वीयासंयतदानस्य पोषार्थं समर्थनार्थं उक्तमेतदपेशलमसुन्दरम्। यतो यस्मात् संविग्नपाक्षिको हरिभद्रोऽदः प्रागुक्तं हि निश्चितमभाणीत्। न हि संविग्नपाक्षिकोऽनृतं ब्रूते। तदुक्तं सप्तविंशतितमाष्टकविवरणे–"स्वकीयासंयतदानसमर्थनागर्भार्थकमिदं प्रकरणं सूरिणा कृतमिति केचित्कल्पयन्ति। हरिभद्राचार्यो हि भोजनकाले शंखवादनपूर्वकमर्थिभ्यो भोजनं दापितवानिति श्रूयते। न चैतत्संभाव्यते, संविग्नपाक्षिको ह्यसौ, न च संविग्नस्य तत्पा-

दिकस्य पाऽनागमिकार्थोपदेशः सम्भवति, सम्यक्हानिप्रसंगात् । आह च—"सविग्गो गुणवस ण देइ उम्मासिअं कडुविवाग । जाणंतो तम्मि तहा अतह्कारो उ मिछत्त ॥ १ ॥" इति ॥ १९ ॥

भक्तिस्तु भवनिस्तारवाञ्छा स्वस्य सुपात्रतः । तया दत्तं सुपात्राय बहुकर्मक्षयक्षमम् ॥ २० ॥

भक्तिस्त्विति—भक्तिस्तु स्वस्य सुपात्रतो भवनिस्तारवांछा । आराध्यत्वेन ज्ञान भक्तिः, आराधना च गौरवितप्रीतिहेतुः क्रिया गौरवितसेवा चेत्येतदपि फलतो नैतल्लक्षणमतिशेते । तया भक्त्या सुपात्राय दत्तं बहुकर्मक्षये क्षम समर्थ भवति ॥२०॥

तथाहि—

पात्रदानचतुर्भङ्ग्यामाद्यः सशुद्ध इष्यते । द्वितीये भजना शेषावनिष्टफलदौ मतौ ॥२१॥

पात्रेति—पात्रदानविषयिणी या चतुर्भंगी—संयताय शुद्धदानं, संयतायाशुद्धदानं, असंयताय शुद्धदानं, असंयतायाशुद्धदानं, इत्यभिलापा । तस्यामाद्यो भगः सम्यगतिशयेन शुद्ध इष्यते, निर्जराया एव जनकत्वात् । द्वितीयभगे कालादिभेदेन फलभावाभावाभ्यां भजना विकल्पात्मिका । शेषौ तृतीयचतुर्थभंगौ अनिष्टफलदौ एकान्तकर्मबन्धहेतुत्वान्मतौ २१

शुद्धं दत्त्वा सुपात्राय सानुबन्धशुभार्जनात् । सानुबन्धं न बध्नाति पापं बद्धं च मुञ्चति ॥ २२ ॥

शुद्धमिति—सुपात्राय प्रतिहतप्रत्याख्यातपापकर्मणे शुद्धमन्नादिकं दत्त्वा सानुबन्धस्य पुण्यानुबन्धिनः शुभस्य पुण्यस्यार्जनात् सानुबन्धमनुबन्धसहित पापं न बध्नाति । बद्धं च पूर्वं पापं मुंचति त्यजति । इत्थं च पापनिवृत्तौ प्रयाणभगप्रयोजकपुण्येन मोक्षसौख्यमावेदितं भवति ॥ २२ ॥

भवेत्पात्रविशेषे वा कारणे वा तथाविधे। अशुद्धस्यापि दानं हि द्वयोर्लाभाय नान्यथा ॥२३॥

भवेदिति–पात्रविशेषे वा आगमाभिहितस्वरूपद्रूपकादिरूपे, कारणे वा तथाविधे दुर्भिक्षदीर्घाध्वग्लानत्वादिरूपे आगाढे। अशुद्धस्यापि दानं हि सुपात्राय द्वयोर्दातृग्रहीत्रोर्लाभाय भवेत्, दातुर्विवेकशुद्धान्तःकरणत्वात्, ग्रहीतुश्चगीतार्थादिपदवत्त्वात्। नान्यथा पात्रविशेषस्य कारणविशेषस्य वा विरहे ॥ २३ ॥

नन्वेवं संयतायाशुद्धदाने फले द्वयोर्भवतु भजना, दातुर्बहुतरनिर्जराऽल्पतरपापकर्मबन्धभागित्वं तु भगवत्युक्तं कथं अपवादादावपि भावशुद्ध्या फलाविशेषादित्यत आह–

अथवा यो गृही मुग्धो लुब्धकज्ञातभावितः। तस्य तत्स्वल्पबन्धाय बहुनिर्जरणाय च ॥ २४ ॥

अथवेति–अथवा पक्षान्तरे। यो गृही मुग्धोऽसत्शास्त्रार्थो लुब्धकज्ञातेन मृगेषु लुब्धकानामिव साधुषु श्राद्धानां यथाकथंचिदन्नाद्युपढौकनेनानुधावनमेव युक्तमिति पार्श्वस्थप्रदर्शितेन भावितो वासितः। तस्य तत्संयतायाशुद्धदानं तु मुग्धत्वादेव स्वल्पपापबन्धाय बहुकर्मनिर्जरणाय च भवति ॥ २४ ॥

इत्थमाशयवैचित्र्यादत्राल्पायुष्कहेतुता। युक्ता चाशुभदीर्घायुर्हेतुता सूत्रदर्शिता ॥ २५ ॥ 

इत्थमिति–इत्थममुना प्रकारेण। आशयवैचित्र्याद्भावभेदात्। अत्र संयताशुद्धदाने। अल्पायुष्कहेतुताशुभदीर्घायुर्हेतुता च। सूत्रदर्शिता स्थानांगाद्युक्ता। युक्ता। मुग्धाभिनिविष्टयोरेतदुपपत्तेः। शुद्धदायकापेक्षयाऽशुद्धदायके मुग्धे-

ऽस्मगुजायुर्बन्धसंजयात्।छुमकनयमहणरूपाया अस्पतायाश्च सूत्रान्तरविरोधेनासंजयादिति।व्यत्कमदः स्थानांगवृत्त्यादौ२५

यस्तूत्तरगुणाशुद्धं प्रज्ञप्तिविषयं वदेत्। तेनात्र भजनासूत्रं दृष्टं सूत्रकृते कथम् ॥ २६ ॥

यस्त्विति—यस्त्वाधाकर्मिकस्यैकान्तदुष्टत्वं मन्यमानः प्रकृतेऽर्थे। प्रज्ञप्तिगोचरं जगवतीविषयं। उत्तरगुणाशुद्धं वदेत्। परिशाट्यपरित्यागशीलादिसंसक्ताशादिस्मखेऽप्यप्रासुकानेषणीयपदग्रहणस्तिदर्शनात्। तेन चैवं यूकापरिजवजयात् परिधानं परित्यजता। अत्र विषये। सूत्रकृते। भजनासूत्रं। कथं दृष्टं। एवं हि तदनाचारश्रुते श्रूयते—“अहागकाइं जुंजंति अन्नमन्ने सकम्मुणा। उवलित्ते वियाणिज्जा अणुवलित्ते त्ति वा पुणो ॥ १ ॥” अत्र आधाकर्मिकस्य फले भजनैव व्यक्तीकृता, अन्योऽन्यपदग्रहणेनार्थान्तरस्य कर्तुमशक्यत्वात्, स्वरूपतोऽसावद्ये भजनाद्युत्पादनस्यानतिप्रयोजनत्वाच्चेति संक्षेपः ॥ २६ ॥

शुद्धं वा यदशुद्धं वाऽसंयताय प्रदीयते। गुरुत्वबुद्ध्या तत्कर्मबन्धकृन्नानुकम्पया ॥ २७ ॥

शुद्धं वेति—असंयताय यच्छुद्धं वाऽशुद्धं वा गुरुत्वबुद्ध्या प्रदीयते। तदसाधुषु साधुसंज्ञया कर्मबन्धकृत्। न पुनरनुकंपया, अनुकंपादानस्य क्वाप्यनिषिद्धत्वात्, “अणुकंपादाणं पुण जिणेहिं न कयाइ पडिसिद्धमिति” वचनात् ॥ २७ ॥

दोषपोषकतां ज्ञात्वा तामुपेक्ष्य ददज्जिनः। प्रज्ञाप्य चन्दनं कुर्यात्कथामंगारजीविकाम् ॥२८॥

दोषेति—स्पष्टः ॥ २८ ॥

अतः पात्रं परीक्षेत दानशौण्डः स्वयं धिया । तत्त्रिधा स्यान्मुनिः श्राद्धः सम्यग्दृष्टिस्तथापरः ॥२९॥

अत इति–स्पष्टः ॥ २९ ॥

एतेषां दानमेतत्स्थगुणानामनुमोदनात् । औचित्यानतिवृत्त्या च सर्वसंपत्करं मतम् ॥ ३० ॥

एतेषामिति–एतेषां मुनिश्राद्धसम्यग्दृशां दानं । एतत्स्थानामेतद्वृत्तीनां गुणानामनुमोदनात्तद्दानस्य तद्भक्तिपूर्वकत्वात् । औचित्यानतिवृत्त्या स्वाचाराननुल्लंघनेन च । सर्वसंपत्करं ज्ञानपूर्वकत्वेन परंपरया महानन्दप्रदं मतम् ॥ ३० ॥

शुभयोगेऽपि यो दोषो द्रव्यतः कोऽपि जायते । कूपज्ञातेन स पुनर्नानिष्टो यतनावतः ॥ ३१ ॥

शुभयोगेऽपीति–पात्रदानवद्बुद्धीनां साधर्मिकवात्सल्यादौ शुभयोगेऽपि प्रशस्तव्यापारेऽपि यः कोऽपि द्रव्यतो दोषो जायते । स कूपज्ञातेन आगमप्रसिद्धकूपदृष्टान्तेन । यतनावतो यतनापरायणस्य । नानिष्टः, स्वरूपतः सावद्यत्वेऽप्यनुबन्धतो निरवद्यत्वात् । तदिदमुक्तम्–"जा जयमाणस्स भवे विराहणासुत्तविहिसमग्गस्स । सा होइ णिज्जरफला अज्झत्थविसोहिजुत्तस्स ॥ १ ॥" अत्र हि अपवादपदमत्ययाया विराधनाया व्याख्यानात् फलभेदौपयिको ज्ञानपूर्वकत्वेन क्रियाभेद एव लभ्यते । यत्तु वर्जनाभिप्रायजन्यां निर्जरां प्रति जीवघातपरिणामाजन्यत्वेन जीवविराधनायाः प्रतिबन्धकाभावत्वेनैवात्र हेतुत्वमिति कश्चिदाह साहसिकः, तस्यापूर्वमेव व्याख्यानमपूर्वमेव चागमतर्ककौशलं केवलायास्तस्याः प्रतिबन्धकत्वाभावात् जीवघातपरिणामविशिष्टत्वेन प्रतिबन्धकत्वे च विशेषणाभावप्रयुक्तस्य विशिष्टाभावस्य शुद्धविशेष्यस्वरू-

अनुग्रहधिया वक्तुर्धर्मित्वं नियमेन यत् । भणितं तत्तु देशादिपुरुषादिविदं प्रति ॥ ३ ॥

अनुग्रहेति–अनुग्रहधिया वक्तुर्धर्मोपदेष्टुः । धर्मित्वं निर्जरालाभित्वं । नियमेनैकान्तेन । यद्भणितं तत्तु देशादीन् पुरुषादींश्च वेत्ति यस्तं प्रति । न तु तदज्ञाने शक्तिमस्फोरयतः ॥ ३ ॥

ननु पुरुषादिभेदेन देशनाभेदो न युक्तः, राजरङ्कयोरेकरूपेणैव देशनाभिधानात् । तथा चाचारसूत्रं–"जहा पुण्णस्स कत्थई तहा तुच्छस्स कत्थइ । जहा तुच्छस्स कत्थइ तहा पुण्णस्स कत्थइ" इति । सूत्रोल्लंघने च महतेऽनर्थायेत्याशंक्याह–

कोऽयं पुरुष इत्यादिवचनादत एव च । पर्षदादिविवेकाच्च व्यक्तो मन्दस्य निग्रहः ॥४॥

कोऽयमिति–अत एव च विपर्यये दोषादेव च । कोऽयं पुरुष इत्यादिवचनाच्चावश्यकादौ । पर्षदादीनां विवेकाद्विवेचनाच्च । मन्दस्य देशादिपुरुषादिज्ञानाभावयतो वक्तुः । निग्रहोऽपसिद्धान्तलक्षणः । व्यक्तः प्रकट एव । अयं भावः–उक्ताचारसूत्रं साधोर्धर्मव्याख्याने निरीहतामात्रद्योतकमेव । राजादेरभिप्रायाननुसरणे प्रकटदोषोपदर्शनपूर्वमनुपदमेव । तत्र पुरुषादिदेशादिपरिज्ञानवत्त्वेन देशनाधिकारित्वाभिव्यञ्जनात् । तदुक्तं–"अविगलदसे अणाइक्खमाणे एवं पि जाण

## ॥ अथ देशनाद्वात्रिंशिका ॥ २ ॥

आद्यायां द्वात्रिंशिकायां दानमुक्तं,तदन्तरायभीरुत्वं च मुख्यो गुणः,तच्च देशनाविवेकनिर्वाह्यमितीयमधुना विविच्यते—

**यथास्थानं गुणोत्पत्तेः सुवैद्येनेव भेषजम् । बालाद्यपेक्षया देया देशना क्लेशनाशिनी ॥ १ ॥**

यथास्थानमिति—सुवैद्येन भेषजमिव । बालाद्यपेक्षया बालाद्यानुगुण्येन । देशना देया । साधुनेति शेषः । किं भूता ? क्लेशनाशिनी भावधातुसाम्येन दोषापहा । कुत इत्याह—यथास्थानं स्थानमनतिक्रम्य । गुणोत्पत्तेः । यथा हि सदप्यौषधं तरुणादियोग्यं बालादीनां न गुणाय तथा धर्मदेशनाऽपि मध्यमादियोग्या बालादीनां न गुणायेति यथास्थानमेतन्नियोगो न्याय्यः ॥ १ ॥

विपक्षे बाधमाह—

**उन्मार्गनयनात् पुंसामन्यथा वा कुशीलता । सन्मार्गद्रुमदाहाय वह्निज्वाला प्रसज्यते ॥ २ ॥**

उन्मार्गेति—अन्यथा यथास्थानं देशनाया अदाने । पुंसां ध्यांध्यकरणद्वारेणोन्मार्गनयनात् वा कुशीलता प्रसज्यते । किंभूता ? सन्मार्गद्रुमाणां दाहाय वह्निज्वाला । अनाभोगेनापि स्वतः परेषां मार्गभेदप्रसंगस्य प्रबलापायहेतुत्वादिति भावः ॥ २ ॥

नन्वेवं "न भवति धर्मः, श्रोतुः सर्वस्यैकान्ततो हितश्रवणात् । ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो भवतीति" वाचकवचनं व्याहन्येत, अतः खलु अनुग्रहधिया आगमार्थोपदेशमात्रमेवेष्टसाधनतया प्रतीयते, श्रोतुर्लाभस्तु क्वचिदेव इत्याशंकायामाह–

अनुग्रहधिया वक्तुर्धर्मित्वं नियमेन यत् । भणितं तत्तु देशादिपुरुषादिविदं प्रति ॥ ३ ॥

अनुग्रहेति–अनुग्रहधिया वक्तुर्धर्मोपदेष्टुः । धर्मित्वं निर्जराभागित्वं । नियमेनैकान्तेन । यद्भणितं तत्तु देशादीन् पुरुषादींश्च वेत्ति यस्तं प्रति । न तु तदज्ञाने शक्तिमस्फोरयतः ॥ ३ ॥

ननु पुरुषादिभेदेन देशनाभेदो न युक्तः, राजरङ्कयोरेकरूपेणैव देशनाभिधानात् । तथा चाचारसूत्रं–"जहा पुण्णस्स कत्थई तहा तुच्छस्स कत्थइ । जहा तुच्छस्स कत्थइ तहा पुण्णस्स कत्थइ" इति । सूत्रोल्लंघने च महतेऽनर्थायेत्याशंक्याह–

कोऽयं पुरुष इत्यादिवचनादत एव च । पर्षदादिविवेकाच्च व्यक्तो मन्दस्य निग्रहः ॥४॥

कोऽयमिति–अत एव च विपर्यये दोषादेव च । कोऽयं पुरुष इत्यादिवचनादावश्यकादौ । पर्षदादीनां विवेकाद्विवेचनाच्च । मन्दस्य देशादिपुरुषादिज्ञानाभाववतो वक्तुः । निग्रहोऽपसिद्धान्तलक्षणः । व्यक्तः प्रकट एव । अथ भावः–उक्ताचारसूत्रं साधोर्धर्मव्याख्याने निरीहतामात्रद्योतकमेव । राजादेरभिप्रायाननुसरणे प्रकटदोषोपदर्शनपूर्वमनुपदमेव । तत्र पुरुषादिदेशादिपरिज्ञानवत्त्वेन देशनाधिकारित्याभिव्यंजनात् । तदुक्तं–"अविगाहणे अणाइयमाणे एत्थं पि जाण

सेयं ति णत्थि केयं पुरिसे कंच णए त्ति" । किं चैवं पुरुषादिपरिज्ञानानावश्यकत्वे पर्षदादिगुणदोषोपवर्णनं तत्र तत्र व्यर्थं स्यादिति ॥ ४ ॥

**अज्ञातवाग्विवेकानां पंडितत्वाभिमानिनाम् । विषं यद्वर्तते वाचि मुखे नाशीविषस्य तत् ॥ ५ ॥**

अज्ञातेति–अज्ञातो वाग्विवेकः शुद्धाशुद्धयोग्यायोग्यविषयत्वादिरूपो यैस्तेषां । पंडितत्वाभिमानिनां । वाचि भाषायां । विषं यन्मिथ्यात्वरूपं वर्तते । तदाशीविषस्य व्यालस्य मुखे न । अनेकजन्मदुःखदं ह्येकमन्यच्चैकजन्मदुःखदमेवेति ॥ ५ ॥

बालादीनां लक्षणमाह–

**तत्र बालो रतो लिंगे वृत्तान्वेषी तु मध्यमः । पंडितः सर्वयत्नेन शास्त्रतत्त्वं परीक्षते ॥ ६ ॥**

तत्रेति–तत्र तेषु बालादिषु मध्ये । लिंगे लिंगमात्रे । रतो बालः, लिंगमात्रप्राधान्यापेक्षयाऽसदारंभत्वात् । वृत्तान्वेषी तु वृत्तप्राधान्यापेक्षी तु मध्यमः, बालापेक्षया मध्यमाचारत्वात् । यस्तु सर्वयत्नेन शास्त्रतत्त्वं परीक्षते स पंडितः, तत्त्वतस्तस्य मार्गानुसारितयोत्कृष्टाचारत्वात् ॥ ६ ॥

**गृहत्यागादिकं लिंगं बाह्यं शुद्धिं विना वृथा । न भेषजं विनारोग्यं वैद्यवेषेण रोगिणः ॥ ७ ॥**

गृहेति–गृहत्यागादिकं बाह्यं बहिर्वर्ति लिंगं । शुद्धिं विना अन्तस्तत्त्वविवेकमन्तरा । वृथा निरर्थकं । न हि रोगिणो भेषजोपयोगं विना वैद्यवेषधारणमात्रेणारोग्यं भवति । अत एवैतत्परैरपि मिथ्याचारफलमुच्यते, तल्लक्षणं चेदं–"बाह्ये-

न्द्रियाणि संयम्य य आस्ते मनसा स्मरन्। इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥ १ ॥" इति ॥ ७ ॥

गुरुदोषकृतां वृत्तमपि त्याज्यं लघुत्वजाम्। जाड्यत्यागाय पतनं ज्वलति ज्वलने यथा ॥ ८ ॥

गुर्विति–वृत्त खलु असदारंभनिवृत्तिमदनुष्ठानं, तच्च कार्ये हेतूपचारेण यथारित्रमुच्यते, तस्कषायोपशमिकत्वाच्छुभमेव, गुरु कीर्त्यार्थ तदृशाजासते, तल्लघुत्वजामपि सूक्ष्मदोषाकरणवतामपि। गुरून् दोषान् प्रवचनोपघातकारिणः कुर्वन्ति ये तेषां संबन्धि त्याज्यं। यथा जाड्यत्यागाय अंगशैत्यापनयनाय ज्वलति ज्वलने पतनं ॥ ८ ॥

शास्त्रतत्त्वं बुधज्ञेयमुत्सर्गादिसमन्वितम्। तद्दृष्टेष्टाविरुद्धार्थमैदंपर्यविशुद्धिमत् ॥ ९ ॥

शास्त्रेति–शास्त्रतत्त्वं बुधज्ञेय पंडितैकगम्यं। उत्सर्गादिभिः समन्वितं। आदिनाऽपवादनिश्चयव्यवहारादिग्रहः। दृष्टे- ष्टाभ्यां प्रत्यक्षादिनाऽऽगमान्तरेण चाविरुद्धार्थं। तथा ऐदंपर्यविशुद्धिमत् तात्पर्यतः शुद्धम् ॥ ९ ॥

श्रुतचिन्तोत्तरोत्पन्नभावनाभाव्यमस्त्यदः। श्रुतं सर्वानुगाद्वाक्यात्प्रमाणनयवर्जितात् ॥ १० ॥

श्रुतेति–श्रुतचिन्ताभ्यामुत्तरोत्पन्ना या भावना तया भाव्यं सुप्रहतात्पर्यकं। अदः शास्त्रतत्त्वमस्ति। तत्र श्रुतं सर्वानु- गात् सर्वशास्त्राविरोधिनिर्णीतार्थात्। वाक्यात्। प्रमाणनयवर्जितात् प्रमाणनयाधिगमरहितात्। पदार्थमात्रावगाहोत्तरस्य वाक्यार्थस्य कर्मभावाकाङ्क्षागर्भत्वेनेहारूपत्वात् प्रमाणनयाधिगमयोश्च कृत्स्नैकदेशापायरूपत्वात् ॥ १० ॥

उत्पन्नमविनष्टं च बीज कोष्ठगत यथा। परस्परविभिन्नोक्तपदार्थविषयं तु न ॥ ११ ॥

उत्पन्नमिति–उत्पन्नमित्यत्र प्राक्तनपंचम्यन्तस्यान्वयः । ज्ञानमिति व्यवहितोत्तरश्लोकस्थमत्रानुपञ्यते । एवमग्रेऽपि । अविनष्टं च यथा कोष्ठगतं बीजं । परस्परविच्छिन्नोक्ता ये पदार्थास्तद्विषयं तु न । तस्य संदेहरूपत्वात् । येस्तु वाच्या-(क्या)र्थमात्रविषयस्यात्र व्यवच्छेद उच्यते तैर्विंशकलितस्यैवायमेष्टव्यः, न तु दीर्घकोपयोगानुस्यूतस्य पदवाक्यमहावाक्यै-दंपर्यार्थमूर्तिकस्य, तस्योपदेशपदप्रसिद्धत्वादिति ध्येयम् । यद्वा तत्र संज्ञाव्यवच्छेद एवेष्यते इति न दोषः ॥ ११ ॥

**महावाक्यार्थजं सूक्ष्मयुक्त्या स्याद्वादसंगतम् । चिन्तामयं विसर्पि स्यात्तैलबिन्दुरिवांभसि ॥ १२ ॥**

महेति–महावाक्यार्थेन वस्त्वाकांक्षारूपेण जनितं । सूक्ष्मया सूक्ष्मबुद्धिगम्यया युक्त्या । स्याद्वादेन सप्तभंग्यात्मकेन संगतं ज्ञानं । अंभसि तैलबिन्दुरिव । विसर्पि प्रवर्धमानं । चिन्तामयं स्यात् ॥ १२ ॥

**सर्वत्राज्ञापुरस्कारि ज्ञानं स्याद्भावनामयम् । अशुद्धजात्यरत्नाभासमं तात्पर्यवृत्तितः ॥ १३ ॥**

सर्वत्रेति–सर्वत्र महावाक्यनिर्णीतेऽर्थे । विपक्षशंकानिरासदार्ढ्याय । आज्ञापुरस्कारि भगवदाज्ञाप्राधान्यद्योतकं । तात्पर्यवृत्तितो जायमानं ज्ञानं भावनामयं स्यात् । अशुद्धजात्यरत्नस्य स्वभावत एव अन्यजीवरत्नेभ्योऽधिकज्ञानदीप्तिस्वभावस्य भव्यरूपस्य आभासमं कान्तितुल्यं । एकस्य वाक्यस्य कथं श्रुतादयो व्यापारा इति परप्रत्यवस्थाने तु यथेन्द्रियस्य तव सविकल्पके जननीये सन्निकर्षादय इत्युत्तरमधिकमुपदेशरहस्ये विपंचितमस्माभिः ॥ १३ ॥

**आद्येऽविरुद्धार्थतया मनाक् स्याद्दर्शनग्रहः । द्वितीये बुद्धिमाध्यस्थ्यचिन्तायोगात्कदापि न ॥ १४ ॥**

आद्य इति–आद्ये श्रुतमये ज्ञाने सति । मनाक् ईषत् । अविरुद्धार्थतया स्वाभिमतस्य दर्शनग्रहो भवति, असद्वीर्यं दर्शने शोभनं नान्यदित्येवंरूपः । द्वितीये चिन्तामये ज्ञाने सति । वृद्धेर्नयप्रमाणाधिगमरूपाया माध्यस्थ्येन स्वपरतंत्रोक्तस्य न्यायबलायातस्यार्थस्य समर्थनसामर्थ्याधिशेषरूपेण चिन्तायोगात् कदापि न स्याद्दर्शनग्रहः । अत एवान्यत्राप्यविसंवादिनोऽर्थस्य दृष्टिवादमूलकस्यातन्निराकरणे दृष्टिवादस्यैव तत्त्वतो निराकरणमिति व्यक्तमुपदेशपदे ॥ १४ ॥

सर्वत्रैव हिता वृत्तिः समापत्त्यानुरूपया । ज्ञाने संजीविनीचारज्ञातेन चरमे स्मृता ॥ १५ ॥

सर्वत्रेति–सर्वत्रैव भव्यसमुदाये । हिता हितकारिणी । वृत्तिः प्रवृत्तिः । समापत्त्या सर्वानुग्रहपरिणत्या । अनुरूपया उचितया । संजीविनीचारज्ञातेन चरमे ज्ञाने भावनामये स्मृता । अत्रायं भावार्थो वृद्धैरुपदिश्यते–यथा किल कयाचित् स्त्रिया कृत्रिमगवीकृतस्य स्वपत्युर्वटवृक्षाधःस्थितया विद्याधरीवचनेनोपलब्धस्वभावप्रत्यानोपायभावं संजीविनीसद्भावं तत्र विशिष्याजानानया तत्प्रदेशवर्तिनी सर्वैव चारिस्तस्य चारिता अनुषंगतः संजीविन्युपभोगाच्च स पुरुषः सवृत्त इति । एवं सर्वत्रैव कृपापरं भावनाज्ञानं भवति, हितं तु योग्यतानियतसंभवमिति ॥ १५ ॥

एतस्यैव फलमभिधत्तेति–

एतेनैवोपवासादेर्वैयावृत्त्यादिघातिनः । नित्यत्वमेकभक्तादेर्जानन्ति महावत्तया ॥ १६ ॥

एतेनेति–एतेनैव भावनाज्ञानेनैव । उपवासादेर्वैयावृत्त्यादिमहाफलघातिनः सकाशात् । महाबत्तया नित्यत्वं सार्वदि-

फत्वं "अहो णिच्चं तवोकम्मं" इत्याद्यागमप्रसिद्धमेकभक्तादेर्जानन्ति निश्चिन्वन्ति उपदेशपदादिकर्तारः। अन्यथा हि यथाश्रुतार्थमात्रग्राही एकभक्तापेक्षयोपवासादेरेव बलवत्त्वश्रयणात् पूर्वापरविरोधोद्भावनेनैव म्रियेतेति भावः। विस्तरस्तूपदेशरहस्ये ॥ १६ ॥

विनैतन्नूनमज्ञेषु धर्मधीरपि न श्रिये। गृहीतग्लानभैषज्यप्रदानाभिग्रहेष्विव ॥ १७ ॥

विनेति–एतद्भावनाज्ञानं विना। नूनं निश्चितं। धर्मधीरपि धर्मबुद्धिरपि। न श्रिये चारित्रलक्ष्म्यै प्रभवति। गृहीतो ग्लानभैषज्यप्रदानस्य अभिग्रहो ग्लानाय मया भैषज्यं दातव्यमित्येवंरूपो यैस्तेषु इव अज्ञेषु पूर्वापरानुसंधानविकलेषु १७

तेषां तथाविधाप्राप्तौ स्वाधन्यत्वविभाविनाम्। चित्तं हि तत्त्वतः साधुग्लानभावाभिसन्धिमत् ॥१८॥

तेषामिति–तेषां गृहीतोक्ताभिग्रहाणां। तथाविधस्य ग्लानस्याप्राप्तौ। स्वाधन्यत्वविभाविनां 'अहोऽहमधन्यो न सिद्धं मे वांछितं' इत्येवमालोचनपराणां। चित्तं हि यतः। तत्त्वतोऽभिग्रहविषयाप्राप्तौ शोकगमनलक्षणाद्भावात्। साधूनां ग्लानभावेऽभिसन्धिमदभिप्रायान्वितं भवति। भावनान्वितश्च नैवं प्रतिजानीते। यतः परैरप्येवमिष्यते। यदाह तारावाप्तौ रामं प्रति सुग्रीवः–"अंगेष्वेव जरां यातु यत्त्वयोपकृतं मम। नरः प्रत्युपकाराय विपत्सु लभते फलम् ॥ १ ॥" इति। एवं दानदीक्षादिकमपि भावनां विना स्थूलबुद्ध्या न श्रिये, किं त्वनर्थकृदेव। यदुक्तमष्टके–"एवं विरुद्धदानादौ हीनोत्तमगतेः सदा। प्रव्रज्यादिविधाने च शास्त्रोक्तन्यायबाधिते ॥ १ ॥ इति ॥ १८ ॥

इत्थं च ज्ञानमेव सर्वक्रियाजीवातुरिति निगमयति–

तस्मात्पठनया ज्ञेयं शास्त्रतत्त्वं विनापरम् । परलोकविधौ मानं वचनमत्र दृश्यते ॥ १९ ॥

तस्मादिति–परलोकविधौ धर्मक्रियायां मानं प्रमाणं वचनादन्यानुपलब्धेरिति ॥ १९ ॥

बालक्रियाप्रधानैव देया बालस्य देशना । सेवनीयस्तदाचारो यथाऽसौ स्वास्थ्यमश्नुते ॥ २० ॥

बालेति–स्पष्टः ॥ २० ॥

सम्यग्लोचो धरा शय्या तपश्चित्रं परीषहाः । अल्पोपधित्वमित्यादि बाह्यं बालस्य कथ्यते ॥ २१ ॥

सम्यगिति–आदिनाऽनुपानत्कत्वं, रजन्यां प्रहरद्वयं स्वापः, महती पिण्डविशुद्धिः, द्व्याद्यभिग्रहाः, विकृतित्यागः, एकसिक्थादिपारणकं, अनियतविहारकल्पः, नित्यं कायोत्सर्गश्च इत्यादिकं गृह्यते ॥ २१ ॥

मध्यमस्य पुनर्वाच्यं वृत्तं यत्साधुसंगतम् । सम्यगीर्यासमित्यादि त्रिकोटीशुद्धभोजनम् ॥ २२ ॥

मध्यमस्येति–आदिनाऽन्यप्रवचनमातृग्रहः । तिस्रः कोट्यो रागद्वेषमोहरूपाः कृतकारितानुमतिभेदेन हननपचनक्रयरूपा वा ॥ २२ ॥

बुधःक्रमेणाध्ययनश्रवणध्यानसंगतिः । सदाशयेनानुगतं पारतंत्र्यं गुरोरपि ॥ २३ ॥

वय इति–क्रमोऽत्र प्रथमे वयस्यध्ययनं द्वितीयेऽर्थश्रवणं तृतीये च ध्यानेन नावनमित्येवंरूपः । सदाशयः संसारक्षय-हेतुर्गुरुरयमिति कुशलपरिणामः ॥ २३ ॥

**वचनाराधनाद्धर्मोऽधर्मस्तस्य च बाधनात् । धर्मगुह्यमिदं वाच्यं बुधस्य च विपश्चिता ॥ २४ ॥**

वचनेति–वचनाराधनात् आगमाराधनयैव धर्मः । तस्य वचनस्य बाधनादेवाधर्मः नान्यत्रैकान्त इत्येतदुपसर्जनीकृतसकलक्रियं प्रधानीकृतजगवद्वचनं धर्मगुह्यं बुधस्य विपश्चिता वाच्यं, वचनायत्तत्वात्सर्वानुष्ठानस्य ॥ २४ ॥

**इत्थमाज्ञादरद्वारा हृदयस्थे जिने सति । जवेत्समरसापत्तिः फलं ध्यानस्य या परम् ॥ २५ ॥**

इत्थमिति–इत्थमनया रीत्या । आज्ञादरद्वारा जगवद्वचनबहुमानद्वारेण । हृदयस्थे ध्यानसाक्षात्कृते जिने सति जवेत् । समरसापत्तिः समतापत्तिः । या ध्यानस्य परं प्रकृष्टं फलं । तदाह–"सैषेह योगिमातेति" इत्थं च समापत्तिसंज्ञकासंगानुष्ठानफलकस्य वचनानुष्ठानस्य आज्ञादरद्वारैवोपपत्तेरयमेव गरीयानिति फलितम् । क्रियान्तरे च नैतदुपपत्तिः, न च तदनन्तरं जगवदनुध्यानाद्युपपत्तिः, अनियमादनुषंगत एवासंगसंजवाच्चेति ॥ २५ ॥

**देशनैकनयाक्रान्ता कथं बालाद्यपेक्षया । इति चेदित्थमेव स्यात्तद्बुद्धिपरिकर्मणा ॥ २६ ॥**

देशनेति–धर्मगुह्यानुक्तौ बालाद्यपेक्षया । एकनयाक्रान्ता व्यवहारादिमात्रप्रधाना । देशना कथं युज्यते ? "एगं ते होइ मिछत्तं" इति वचनादिति चेत्–इत्थमेव बालाद्यपेक्षया व्यवहारादिमात्रप्राधान्येनैव । तद्बुद्धेर्बालादिबुद्धेः परिकर्मणा

अर्थान्तरग्रहणसौकर्यरूपा स्यात् । इत्थं चाप्रायोन्तरप्रतिपत्त्याशयान्तरव्यवस्थापनपरिणामाच्च न दोषः, शिष्यमति-परिकर्मणार्थमेकनयदेशनाया अपि संमत्यादौ व्युत्पादनात् ॥ २६ ॥

**प्रमाणदेशनैवेयं ततो योग्यतया मता । द्रव्यतः सापि नो मानं वैपरीत्यं यया भवेत् ॥ २७ ॥**

प्रमाणेति—तदियं योग्यतया प्रमाणदेशनैव । मता । व्युत्पादयिष्यमाणनयान्तरसमावेशेन तत्त्वोपपत्तेः । तद्भावेन तत्फलसंजननाच्च । द्रव्यतः फलानुपयोगलक्षणात् । सापि प्रमाणदेशनापि । नो मानं न प्रमाणं । यथा वैपरीत्यं व्यामोह-लक्षणं भवेत् ॥ २७ ॥

**आदौ यथारुचि श्राव्य ततो वाच्यं नयान्तरम् । ज्ञाते त्वेकनयेऽन्यस्मात् परिशिष्टं प्रदर्शयेत् ॥२८॥**

आदाविति—आदौ प्रथमं । यथारुचि श्रोतृरुच्यनुसारिनयानुगुण्येन । श्राव्य जिनवचनं । ततः स्वपारतन्त्र्य बुद्धिपरि-कर्मणा च श्रोतुर्योग्या नयान्तरं वाच्य । अन्यस्मात् स्वव्यतिरिक्तात्त्वेकस्मिन्नये श्रोत्रा ज्ञाते सति परिशिष्टमज्ञातनयान्तरं प्रदर्शयेत् । अप्रातमापणगरीयस्त्वान्महतामारंभस्य ॥ २८ ॥

**संविग्नभाविता ये स्युर्ये च पार्श्वस्थभाविता । मुक्त्वा द्रव्यादिकं तेषां शुद्धोञ्छं तेन दर्शितम् २९**

संविग्नेति—संविग्नभाविता बालाः पण्डिताश्च स्युः, पार्श्वस्थभाविता बालाः स्युः, तत्र पार्श्वस्थभाविता बाला आभिनिवे-शिकाश्च बोध्याः । ये संविग्नभाविता बालास्तेऽपरिणता यथापरिणतिमजानाना द्रव्यादिकमविशेषतया एकान्तव्यवस्थानाः।

तेन हेतुना । ये संविग्नभाविताः स्युः, ये च पार्श्वस्थभाविताः, तेषां द्रव्यादिकं मुक्त्वा । आदिना क्षेत्रादिग्रहः । शुद्धोञ्छं शुद्धपिण्डविधानं दर्शितं—"संविग्गभाविआणं लुद्धयदिट्ठंतभाविआणं च । मुत्तूण खित्तकालं भावं च कहिंति सुद्धुंछं ॥१॥" इत्यादिना बृहत्कल्पादौ । अत्र हि संविग्नभावितान् प्रति द्रव्यादिकारणेष्वशुद्धस्यापि व्युत्पादनं, पार्श्वस्थभावितान् प्रति च शुद्धोञ्छविधेरेव तत्सार्थकमिति दृश्यते । इतरत्तु पिष्टपेषणतुल्यमिति ॥ २९ ॥

दुर्नयाभिनिवेशे तु तं दृढं दूषयेदपि । दुष्टांशच्छेदतो नांघ्री दूषयेद्विषकंटकः ॥ ३० ॥

दुर्नयेति—परस्य कुदेशनया दुर्नयाभिनिवेशे त्वेकान्तग्रहरूपे ज्ञाते । तं दुर्नयं । दृढं दूषयेदपि । यतो दुष्टांशस्य छेदतो विषकंटकः अंघ्री न दूषयेदेवमिहापि दुर्नयलवच्छेदे द्वावपि नयौ सुस्थिताववतिष्ठेते इति । न चैवमितरांशप्रतिक्षेपाद्दुर्नयापत्तिः तस्य प्रकृतनयदूषणातात्पर्येण नयान्तरप्राधान्यग्राहकत्वेन परेषां तर्कवदनुग्राहकत्वेन तत्र तत्र व्यवस्थितत्वात् । निर्णीतमेतन्नयरहस्ये ॥ ३० ॥

जानाति दातुं गीतार्थो य एवं धर्मदेशनाम् । कलिकालेऽपि तस्यैव प्रभावाद्धर्म एधते ॥३१॥

जानातीति—व्यक्तः ॥ ३१ ॥

गीतार्थाय जगज्जन्तुपरमानन्ददायिने । मुनये भगवद्धर्मदेशकाय नमो नमः ॥३२॥

गीतार्थायेति—व्यक्तः ॥ ३२ ॥

॥ इति देशनाद्वात्रिंशिका ॥ २ ॥

## ॥ अथ मार्गद्वात्रिंशिका ॥ ३ ॥

देशनया मार्गो व्यवस्थाप्य इति तत्स्वरूपमिहोच्यते—

**मार्गे प्रवर्तकं मानं शब्दो भगवतोदितः । सविग्नाशठगीतार्थाचरणं चेति स द्विधा ॥ १ ॥**

मार्ग इति—प्रवर्तकं स्वजनकेच्छाजनकज्ञानजननद्वारा प्रवृत्तिजनकं । मानं प्रमाणं । स च भगवता सर्वज्ञेनोदितो विधिरूपः शब्दः । संविग्नाः संवेगवन्तो अशठा अभ्रान्ता गीतार्था: सम्यग्ज्ञातसूत्रार्थाः तेषामाचरणं चेति द्विधा विधेरिव शिष्टाचारस्यापि प्रवर्तकत्वात् । तदिदमाह धर्मरत्नप्रकरणकृत्—"मग्गो आगमणीई अहवा संविग्गबहुजणाइन्नं त्ति ॥ १ ॥

**द्वितीयानादरे हन्त प्रथमस्याप्यनादरः । जीतस्यापि प्रधानत्वं सांप्रतं श्रूयते यतः ॥ २ ॥**

द्वितीयेति—द्वितीयस्य शिष्टाचरणस्य अनादरे प्रवर्तकत्वेनानभ्युपगमे । हंत प्रथमस्यापि भगवद्वचनस्यापि अनादर एव । यतो जीतस्यापि साम्प्रतं प्रधानत्वं व्यवहारप्रतिपादकशास्त्रप्रसिद्धं श्रूयते । तथा च जीतप्राधान्यानादरे तत्प्रतिपादकशास्त्रानादराद्व्यक्तमेव नास्तिकत्वमिति भावः ॥ २ ॥

**अनुमाय सतामुक्ताचारेणागममूलताम् । पथि प्रवर्तमानानां शक्या नान्धपरंपरा ॥ ३ ॥**

अनुमायेति—उक्ताचारेण संविग्नाशठगीतार्थाचारेण । आगममूलतामनुमाय । सतां मार्गानुसारिणां । पथि महाजना-

नुयातमार्गे। प्रवर्तमानानामन्धपरंपरा न शंकनीया। इत्थं चात्रागमबोधितेष्टोपायताकत्वमेवानुमेयं, आगमग्रहणं चान्धपरंपराशंकाव्युदासायेति नागमकल्पनोत्तरं विध्यर्थबोधकल्पनाद्वारव्यवधानेन प्रवर्तकतायाः शब्दसाधारण्यक्षतिः, अप्रत्यक्षेणागमेन प्रकृतार्थस्य बोधयितुमशक्यत्वात्, व्यवस्थितस्य चानुपस्थितेः सामान्यत एव तदनुमानात्। तदिदमुक्तं— “आयरणा वि हु आणत्ति”। वस्तुत उपपत्तिकेन शिष्टाचारेणैव विध्यर्थसिद्धावागमानुमानं जगवद्बहुमानद्वारा समापत्तिसिद्ध्ये इति द्रष्टव्यम् ॥ ३ ॥

**सूत्रे सद्धेतुनोत्सृष्टमपि क्वचिदपोद्यते। हितदेऽप्यनिषिद्धेऽर्थे किं पुनर्नास्य मानता ॥ ४ ॥**

सूत्र इति—सूत्रे आगमे। उत्सृष्टमपि उत्सर्गविषयीकृतमपि। सद्धेतुना पुष्टेनालंबनेन। क्वचिदपोद्यते अपवादविषयीक्रियते। हितदेऽपीष्टसाधनेऽपि। अनिषिद्धे सूत्रावारिते। किं पुनरस्य शिष्टाचारस्य न मानता न प्रमाणता ॥ ४ ॥

उदासीनेऽर्थे जवत्वस्य मानता, चारित्रं तु कारणसहस्रेणापि परावर्तयितुमशक्यमित्यत आह—

**निषेधः सर्वथा नास्ति विधिर्वा सर्वथागमे। आयं व्ययं च तुलयेल्लाभाकांक्षी वणिग्यथा ॥ ५ ॥**

निषेध इति—सूत्रे विधिनिषेधौ हि गौणमुख्यभावेन मिथः संवलितावेव प्रतिपाद्येते, अन्यथाऽनेकान्तमर्यादातिक्रमप्रसंगादिति भावः ॥ ५ ॥

**प्रवाहधारापतितं निषिद्धं यन्न दृश्यते। अत एव न तन्मत्या दूषयन्ति विपश्चितः ॥ ६ ॥**

प्रयासेति–शिष्टसंमतस्यसदेशेऽपि तद्रूपतामन्यानार्थ्यं किं पुनस्तन्निश्चय इति न्यायः । तदिदमाह–"ज च विहिओ ण सुत्ते ण य पडिसिद्धं जणंमि चिररूढं । स मइविगप्पियदोसा तं पि ण दूसंति गीयत्था ॥ १ ॥" ॥ ६ ॥

सविग्नाचरणं सम्यक्कल्पप्रावरणादिकम् । विपर्यस्तं पुनः श्राद्धममत्वप्रभृति स्मृतम् ॥ ७ ॥

सविग्नेति–सविग्नानामाचरणं सम्यक् साधुनीत्या कल्पप्रावरणादिकं । तदाह–अवलंबियं पि सुए किंची कालाइकारणाविक्खं । आइन्नमन्नहच्चिय दीसइ संविग्गगीएहिं ॥ १ ॥ कप्पाणं पावरणं अग्गोयरचाओ झोलियाभिक्खा । उवग्गहियकडाहयतुंबयमुहदाणदोराई ॥ २ ॥'इत्यादि । विपर्यस्तमसंविग्नाचरणं पुनः श्राद्धममत्वप्रभृति स्मृतं । तदाह "जह सड्ढेसु ममत्तं राढाइ असुद्धउवहिभत्ताई । णिहिज्जवसहितूलीमसूरगाईण परिभोगे त्ति ॥ १ ॥ ॥" ॥ ७ ॥

आद्यं ज्ञानात्परं मोहाद्विशेषो विशदोऽनयोः । एकत्वं नानयोर्युक्तं काचमाणिक्ययोरिव ॥८॥

आद्यमिति–ज्ञानं तत्त्वज्ञानं । मोहो गाढममता ॥ ८ ॥

दर्शयद्भिः कुलाचारलोपादामुष्मिकं भयम् । वारयद्भिः स्वगच्छीयद्विषः साधुसंगतिम् ॥ ९ ॥

दर्शयद्भिरिति–आमुष्मिकं प्रेत्य प्रत्यवायविपाकफलं ॥ ९ ॥

उत्यस्तयं यतीनामप्यनुपश्यद्भिरुत्तमम् । विवेकविकलं दानं स्थापयद्भिर्यथा तथा ॥ १० ॥

उत्यस्तयमिति–अपिना आगमे यतीनां तन्निषेधो द्योत्यते । अनुपश्यद्भिर्मन्यमानैः ॥ १० ॥

अपुष्टालंबनोत्सिक्तैर्मुग्धमीनेषु मैनिकैः । इत्थं दोषादसंविग्नैर्हहा विश्वं विडंबितम् ॥ ११ ॥

अपुष्टेति—व्यक्तः ॥ ११ ॥

अप्येष शिथिलोल्लापो न श्राव्यो गृहमेधिनाम् । सूक्ष्मोऽर्थ इत्यदोऽयुक्तं सूत्रे तद्गुणवर्णनात् ॥ १२ ॥

अपीति—एषोऽपि शिथिलानां । उल्लापः यदुत न श्राव्यो गृहमेधिनां सूक्ष्मोऽर्थः, इत्यदो वचनमयुक्तं । सूत्रे भगवत्यादौ तेषां गृहमेधिनामपि केषांचिद्गुणवर्णनात् "लद्धट्ठा गहिअट्ठा" इत्यादिना साधूक्तसूक्ष्मार्थपरिणामशक्तिमत्त्वप्रतिपादनात् । सम्यक्त्वप्रकरणप्रसिद्धोऽयमर्थः ॥ १२ ॥

तेषां निन्दाल्पसाधूनां बह्वाचरणमानिनाम् । प्रवृत्तांगीकृतात्यागे मिथ्यादृग्गुणदर्शिनी ॥१३॥

तेषामिति—तेषामसंविग्नानां । अल्पसाधूनां विरलानां यतीनां । बह्वाचरितमानिनां " बहुभिराचीर्णं खलु वयमाचरामः स्तोकाः पुनरेते संविग्नत्वाभिमानिनो दांभिका " इत्यभिमानवतां । निंदा अंगीकृतस्य मिथ्याभूतस्यापि बह्वाचीर्णस्यात्यागेऽभ्युपगम्यमाने मिथ्यादृशां गुणदर्शिनी प्रवृत्ता, सम्यग्दृगपेक्षया मिथ्यादृशामेव बहुत्वात् । तदाह—" बहुजणपवित्ति मित्तं इच्छंतेण इहलोइउ चेव । धम्मो न उज्झियव्वो जेण तहिं बहुजणपवित्ती" ॥ १ ॥ १३ ॥

इदं कलिरजः पर्वभस्म भस्मग्रहोदयः । खेलनं तदसंविग्नराजस्यैवाधुनोचितम् ॥ १४ ॥

इदमिति—व्यक्तः ॥ १४ ॥

समुदाये मनाग्दोषजीतैः स्वेच्छाविहारिभिः । संविग्नैरप्यगीतार्थैः परेभ्यो नातिरिच्यते ॥ १५ ॥

समुदाय इति-समुदाये मनाग्दोषेभ्य ईषत्कलहादिरूपेभ्यो भीतैः । स्वेच्छाविहारिभिः स्वच्छन्दचारिभिः । संविग्नैरपि बाह्याचारप्रधानैरपि । अगीतार्थैः । परेभ्योऽसंविग्नेभ्यो नातिरिच्यते नाधिकीक्रियते ॥ १५ ॥

वदन्ति गृहिणां मध्ये पार्श्वस्थानामवन्द्यताम् । यथाछन्दतयात्मानमवन्द्यं जानते न ते ॥ १६ ॥

वदन्तीति-परदोषं पश्यन्ति, स्वदोषं च न पश्यन्तीति महतीयं तेषां कदर्थनेति भावः ॥ १६ ॥

गीतार्थपारतंत्र्येण ज्ञानमज्ञानिनां मतम् । विना चक्षुष्मदाधारमन्धः पथि कथं व्रजेत् ॥ १७ ॥

गीतार्थेति-मुख्यं ज्ञानं गीतार्थानामेव तत्पारतन्त्र्यलक्षणं गौणमेव तदगीतार्थानामिति भावः ॥ १७ ॥

तत्त्यागेनाफलं तेषां शुद्धोञ्छादिकमप्यहो । विपरीतं फलं वा स्यान्नौभङ्ग इव वारिधौ ॥१८॥

तदिति-तत्त्यागेन गीतार्थपारतंत्र्यपरिहारेण तेषां संविग्नाभासानां शुद्धोञ्छादिकमप्यफलं विपरीतफलं वा स्यात् । वारिधाविव नौभंगः ॥ १८ ॥

यदि नामैतेषां नास्ति ज्ञानं, कथं तर्हि मासक्षपणादिदुष्करतपोऽनुष्ठानंत्यमित्यत आह-

अज्ञिग्रन्थय प्रायः कुर्वन्तोऽप्यतिदुष्करम् । बाह्या इवामता मूढा ग्रांथिज्ञातेन दर्शिताः ॥१९॥

अज्ञिग्रेति-अज्ञिग्रन्थयोऽकृतग्रन्थिभेदाः । प्रायः कुर्वन्तोऽप्यतिदुष्करं मासक्षपणादिकं बाह्या इवामताः स्वाज्ञा-

विकव्रतपरिणामरहिताः । मूढा अज्ञानाविष्टाः । ध्वांक्षज्ञातेन वायसदृष्टान्तेन दर्शिताः । यथा हि केचन वायसा निर्मलसलिलपूर्णसरित्परिसरं परित्यज्य मरुमरीचिकासु जलत्वभ्रान्तिभाजस्ताः प्रति प्रस्थिताः, तेभ्यः केचनान्यैर्निषिद्धाः प्रत्यायाताः सुखिनो बभूवुः, ये च नायातास्ते मध्याह्नार्कतापतरलिताः पिपासिता एव मृताः । एवं समुदायादपि मनाग्दोषभीत्या ये स्वमत्या विजिहीर्षवो गीतार्थनिवारिताः प्रत्यावर्तन्ते, तेऽपि ज्ञानादिसंपन्नाजनं भवन्ति, अपरे तु ज्ञानादिगुणेभ्योऽपि भ्रश्यन्तीति । तदिदमाह–पायं अभिन्नगंठी तवाइ तह दुक्करं पि कुबंता । वव्रव ण ते साहू धंखाहरणेण विन्नेया ॥ १ ॥" आगमेऽप्युक्तं–"नममाणावेगे जीविअं विप्परिणामंति" । नम्यतो नमन्तोऽप्येके संयमजीवितं विपरिणामयन्ति नाशयन्तीत्येतदर्थः । इति ॥ १९ ॥

**वदन्तः प्रत्युदासीनान् परुषं परुषाशयाः । विश्वासादाकृतेरेते महापापस्य भाजनम् ॥ २० ॥**

वदंत इति–उदासीनान् मध्यस्थान् शिक्षापरायणान् प्रति । परुषं "भवन्त एव सम्यक्क्रियां न कुर्वते कोऽयमस्मान् प्रत्युपदेशः" इत्यादिरूपं वचनं । वदन्तः । परुषोऽज्ञानावेशादाशयो येषां ते तथा । एते आकृतेराकारस्य । विश्वासान्महापापस्य परप्रतारणलक्षणस्य भाजनं भवन्ति । पामराणां गुणाभासमात्रेणैव स्खलनसंभवात् ॥ २० ॥

**ये तु स्वकर्मदोषेण प्रमाद्यन्तोऽपि धार्मिकाः । संविग्नपाक्षिकास्तेऽपि मार्गान्वाचयशालिनः ॥ २१ ॥**

ये त्विति–ये तु स्वकर्मदोषेण वीर्यान्तरायोदयलक्षणेन । प्रमाद्यन्तोऽपि क्रियासु अवसीदन्तोऽपि । धार्मिका धर्म-

निरताः । संविग्नपाक्षिकाः संविग्नपक्षीकृतः । तेऽपि । मार्गस्यान्त्याश्रयो न्यायसाम्यापेक्षया पृथक्कमताश्रयः तेन शासनस्थ इत्येवंशीलाः । तदुक्तं–"सम्मिलिसि तेण पट् ति" ॥ २१ ॥

शुद्धप्ररूपणैतेषां मूलमुत्तरसंपद । सुसाधुभ्यानि भैषज्यप्रदानाभ्यर्चनादिका ॥ २२ ॥

शुद्धेति–एतेषां संविग्नपाक्षिकाणां । शुद्धप्ररूपणैव मूलं सर्वगुणानामाद्यमुत्पत्तिस्थानं, तदपेक्षा यतनाया एव तेषां निर्जराहेतुत्वात् । तदुक्तं–"हीणस्स वि सुद्धपरूवगस्स संविग्गपक्खवाइस्स । जा जा हविज्ज जयणा सा सा से निज्जरा होइ ॥ १ ॥" इच्छायोगसंभवाच्चात्र नेतरांगवैकल्येऽपि फलवैकल्यं । सम्यग्दर्शनस्यैवात्र सत्कारित्वात् । शास्त्रयोग एव सम्यग्दर्शनचारित्रयोर्द्वयोस्तुल्यवदपेक्षणात् । तदिदमुक्तं–"दंसणपक्खो सावय चरित्तभट्ठे य मंदधम्मे य । दंसणचरित्तपक्खो समणे परलोगकंखिम्मि ॥ १ ॥" उत्तरसंपद उत्कृष्टसंपदश्च सुसाधूनां ग्लानेरपनायकं यद्भैषज्यं तत्प्रदानं चाभ्यर्चनं च तदादिकाः ॥ २२ ॥

आत्मार्थं दीक्षणं तेषां निषिद्धं श्रूयते श्रुते । ज्ञानाद्यर्थान्यदीक्षा च स्वोपसंपच्च नादृिता ॥ २३ ॥

आत्मार्थमिति–आत्मार्थं स्वनैयावृत्त्याद्यर्थं । तेषां संविग्नपाक्षिकाणां । दीक्षणं श्रुते निषिद्धं श्रूयते । "अत्तट्ठा न विदिक्खइ" इति वचनात् । ज्ञानाद्यर्थोऽन्येषां न्यायपरपरिणामवत्पृष्टजातिनामपुनर्बन्धकादीनां दीक्षा च तदर्थं तेषां स्वोपसंपच्च नादृिता नाहितकारिणी । असद्ग्रहपरित्यागार्थमपुनर्बन्धकादीनामपि दीक्षणाधिकारात् । तदुक्तं–"सङ्ख-

पुण्णबंधगाणं कुग्गहविरहं लहुं कुणइत्ति" । तात्त्विकानां तु तात्त्विकैः सह योजनमप्यस्याचारः । तदुक्तं–"देइ सुसाहूण बोहेउं ति" ॥ २३ ॥

**नावश्यकादिवैयर्थ्यं तेषां शक्यं प्रकुर्वताम् । अनुमत्यादिसाम्राज्याद्भावावेशाच्च चेतसः ॥ २४ ॥**

नेति–आवश्यकादिवैयर्थ्यं च तेषां स्ववीर्यानुसारेण शक्यं स्वाचारं प्रकुर्वतां न भवति । तत्करण एवाचारप्रीत्येच्छायोगनिर्वाहात् । तथाऽनुमत्यादीनामनुमोदनादीनां साम्राज्यात् सर्वथाऽभंगात् । चेतसश्चित्तस्य भावावेशादर्थाद्युपयोगाच्च श्रद्धामेधाद्युपपत्तेः ॥ २४ ॥

**द्रव्यत्वेऽपि प्रधानत्वात्तथाकल्पात्तदद्भुतम् । यतो मार्गप्रवेशाय मतं मिथ्यादृशामपि ॥ २५ ॥**

द्रव्यत्वेऽपीति–तदावश्यकस्य भावसाध्वपेक्षया द्रव्यत्वेऽपि प्रधानत्वादिच्छाद्यतिशयेन भावकारणत्वाद्द्रव्यपदस्य क्वचिदप्रधानार्थकत्वेन क्वचिच्च कारणार्थकत्वेनानुयोगद्वारवृत्तौ व्यवस्थापनात् । तथाकल्पात् तथाचारात् । तदावश्यकं । तेषामद्भुतं । यतो मार्गप्रवेशाय मिथ्यादृशामपि तदावश्यकं मतं गीतार्थैरंगीकृतं, अभ्यासरूपत्वात्, अस्खलितत्वादिगुणगर्भतया द्रव्यत्वोपवर्णनस्यैतदर्थद्योतकत्वाच्च ॥ २५ ॥

**मार्गभेदस्तु यः कश्चिन्निजमत्या विकल्प्यते । स तु सुन्दरबुध्यापि क्रियमाणो न सुन्दरः ॥ २६ ॥**

मार्गेति–व्यक्तः ॥ २६ ॥

**निवर्तमाना अप्येके वदन्त्याचारगोचरम्। आख्याता मार्गमप्येको नोज्झजीवीति च श्रुतिः ॥ २७ ॥**

निवर्तमाना इति-एके संयमान्निवर्तमाना अपि । आचारगोचरं यथावस्थितं वदन्ति "वयमेव कर्तुमसहिष्णवः, मार्गः पुनरित्थंभूत एवेति" । यदाचारसूत्र-नियट्टमाणा वेगे आयारगोअरमाइक्खंति" । अत्र संयमाच्छिथिला निवर्तमानाः, चाशब्दादनिवर्तमानाश्च लभ्यन्ते । तत्रयथाप्ययसीदन्त एव योजिता यथास्थिताचारोक्त्या हि तेषामेकैकयाखता जयति आचारहीनतया न तु द्वितीयापि । ये तु हीना अपि वदन्ति "एवंभूत एवाचारोऽस्ति योऽस्माभिरनुष्ठीयते, सामतं दुःषमानुभावेन यथाप्यपगमात्मध्यभूतैव वर्तनी श्रेयसी, नोत्सर्गावसर इति" तेषां तु द्वितीयापि बालता यथावापतति, गुणवद्दोषानुवादात् । यदागमः-"सीलमंता उवसंता संखाए रीयमाणा असीला । अणुवयमाणस्स बितिआमंदस्स बालया ॥ १ ॥" तथा मार्गमेकः आख्याता न चोज्झजीवीत्यपि श्रुतिरस्ति । तदुक्तं स्थानांगे-"आघाइत्ता णामं एगे णो छंज्जीवी" इति ॥ २७ ॥

**असंयते संयतत्व मन्यमाने च पापता । भणिता तेन मार्गोऽय तृतीयोऽप्यवशिष्यते ॥ २८ ॥**

असंयत इति-असंयते संयतत्वं मन्यमाने च पापता भणिता । "असंजए संजयलप्पमाणे पावसमणुत्ति वुच्चइ" इति पापश्रमणीयाध्ययनपाठात् । असंयते यथास्थितवक्तरि पापत्वानुक्तेः । तेन कारणेनायं संविग्नपाक्षिकरूपस्तृतीयोऽपि मार्गोऽवशिष्यते । साधुश्राद्धयोरिव संविग्नपाक्षिकस्याप्याचारेष्वविसंवादिप्रवृत्तिसंभवात् । तदुक्तं-"सावज्जजोगपरिवज्जणाइ सव्वुत्तमो जइधम्मो । बीओ सावगधम्मो तइओ संविग्गपक्खपहो ॥ १ ॥" योगास्यो मार्गः संविग्नपाक्षिकाणां नाव-

नवी । मैत्र्यादिसमन्वितवृत्तादिमत्त्वेनाध्यात्मादिप्रवृत्त्यबाधात् अविकल्पतथाकाराविषयत्वेन नैतद्धर्मो मार्गः "कप्पाकप्पे परिनिट्ठिअस्स ठाणेसु पंचसु ठिअस्स । संजमतववड्ढगस्स उ अविगप्पेणं तहक्कारो ॥ १ ॥" इति वचनात् । साधुवचन एवाविकल्पेन तथाकारश्रवणादिति चेन्नैतद्वचनबलादन्यत्र लभ्यमानस्य विकल्पस्य व्यवस्थितत्वेन व्याख्यानात् । व्यवस्था चेयं संविग्नपाक्षिकस्य वचनेऽविकल्पेनैव तथाकारोऽन्यस्य तु विकल्पेनैवेति । विवेचितं चेदं सामाचारी प्रकरणेऽस्माभिः ॥ २८ ॥

साधुः श्राद्धश्च संविग्नपक्षी शिवपथास्त्रयः । शेषा भवपथा गेहिद्रव्यलिंगिकुलिंगिनः ॥ २९ ॥

साधुरिति—व्यक्तः ॥ २९ ॥

गुणी च गुणरागी च गुणद्वेषी च साधुषु । श्रूयन्ते व्यक्तमुत्कृष्टमध्यमाधमबुद्धयः ॥ ३० ॥

गुणीति—व्यक्तः ॥ ३० ॥

ते च चारित्रसम्यक्त्वमिथ्यादर्शनभूमयः । अतो द्वयोः प्रकृत्यैव वर्तितव्यं यथाबलम् ॥ ३१ ॥

ते चेति—व्यक्तः ॥ ३१ ॥

इत्थं मार्गस्थिताचारमनुसृत्य प्रवृत्तया । मार्गदृष्ट्यैव लभ्यन्ते परमानन्दसंपदः ॥ ३२ ॥

इत्थमिति—व्यक्तः ॥ ३२ ॥

॥ इति मार्गद्वात्रिंशिका ॥ ३ ॥

## ॥ अथ जिनमहत्त्वद्वात्रिंशिका ॥ ४ ॥

मार्गविवेचनानन्तरं तद्देशकस्य भगवतो माहात्म्यं व्यवस्थाप्यते–

**वप्रत्रयध्वजछत्रचक्रचामरसंपदा । विभुस्त्वं न विभोस्तादृश्या मायाविष्वपि संभवात् ॥ १ ॥**

वप्रेति–तादृक् प्रेक्षावच्चमत्कारजनकं । मायाविष्वपि ऐन्द्रजालिकेष्वपि । यदि हि बाह्यसंपदैव महत्त्वबुद्धिर्धर्मजननी स्यात्तदा मायाविष्वपि सा तथा स्यादित्यर्थः । तदिदमुक्तं समन्तभद्रेणापि–"देवागमनभोयानचामरादिविभूतयः । मायाविष्वपि दृश्यन्ते नातस्त्वमसि नो महान् ॥ १ ॥" इति । न च व्यक्तिविशेषविषयकत्वेन नातिप्रसंग इति शङ्कनीय, प्रमेयत्वादिना महत्त्वप्रकारकज्ञानादपि फलापत्तेः विशेषरूपेण महत्त्वप्रकारकत्वनिवेशस्यावश्यकत्वात् । अत एवासाधारणपि आशयविशारादिमत्त्वेन साधुत्वबुद्धावपि विशेषादर्शनदशायां न फलाभाव इति तत्र तत्र व्युत्पादितं । अन्यथासमाधिफलविशेषे तु विषयविशेषोऽपि निवेश्यः । यदि चाशयविशारादिलिङ्गेन साधुत्वमनुमीयत एव तदनुमितिप्रयोज्यवन्दनादिना च फलविशेष इति विभाव्यते, तदा भगवत्यपि विशिष्टरूपेण महत्त्वानुमित्यनन्तरमेव स्मरणादिना फलोदयाविशेषान्महत्त्वं न इत्यनन्तरमनुमेयं इत्यध्याहारासंगतानुपपत्तिः स्वेतरनिष्ठात्यन्ताभावप्रतियोगिगुणवत्त्वरूपस्य महत्त्वस्य बाह्यसंपदाऽनुमातुमशक्यत्वात् मायाविष्वेव व्यभिचारात् ॥ १ ॥

**स्वामिनो वचनं यत्तु संवादि न्यायसंगतम् । कुतर्कध्वान्तसूर्यांशुर्महत्त्वं तद्यदभ्यधुः ॥ २ ॥**

स्वामिन इति–यत्तु स्वामिनो वीतरागस्य । वचनं संवादि समर्थप्रवृत्तिजनकं । न्यायसंगतं स्याद्वादमुद्रामनतिक्रान्तं । एकान्तस्य तत्त्वतोऽन्याय्यत्वात् धर्मधर्मिसंबन्धभेदेऽनवस्थानात्, तदभेदे च सहप्रयोगाद्यनुपपत्तेर्धर्मिग्राहकमानेन स्वतः संबद्धस्य संबन्धान्तरस्य कल्पनापेक्षया तेनैव सिद्धस्य शबलस्य वस्तुनोऽभ्युपगमस्य न्याय्यत्वात् । तदनुभवेपि चैकान्तभ्रमस्य दोषप्राबल्याडुपपत्तेः । विशेषदर्शनेन च तस्य निवर्तयितुं शक्यत्वादिति दिक् । कुतर्का एव ध्वान्तानि तेषु सूर्यांशुः । तन्महत्त्वमवच्छेद्यावच्छेदकयोर्लिंगालिंगिनोर्वा स्याद्वादाश्रयणेन कथंचिदभेदात् । यदभ्यधुः श्रीहरिभद्रसूरयः ॥२॥

**पक्षपातो न मे वीरे न द्वेषः कपिलादिषु । युक्तिमद्वचनं यस्य तस्य कार्यः परिग्रहः ॥ ३ ॥**

पक्षपात इति–न मे मम वीरे श्रीवर्धमानस्वामिनि । पक्षपातो गुणानालोचनपूर्व एव रागः । कपिलादिषु च न मे द्वेषः । किं तु यस्य वचनं युक्तिमत् तस्य परिग्रहः स्वीकारः कार्यः । इत्थं चात्राविसंवादिवचनत्वेनैव भगवति महत्त्वमाचार्यैरभिप्रेतम् ॥ ३ ॥

औदयिकभावस्यापि विशिष्टस्य महत्त्वप्रयोजकत्वं व्यवस्थापयति–

**पुण्योदयभवैर्भावैर्मतं क्षायिकसंगतैः । महत्त्वं महनीयस्य बाह्यमाभ्यन्तरं तथा ॥ ४ ॥**

पुण्येति–पुण्योदयभवैस्तीर्थकरनामकर्माद्युदयोत्पन्नैः । भावैः विशिष्टसंहननरूपसत्त्वसंस्थानगतिप्रभृतिभिः । क्षायिक-

संगतेः क्षायिकज्ञानादिभिर्मिश्रितेः । महत्त्वं महनीयस्य पूज्यस्य मतं । भाव्य तथान्यन्तरं मत्येकं विशिष्टमेव वा कथमिङ्‌-जयव्यपदेशजाक् । इत्थं च विशिष्टबाह्यसंपदोऽन्यासाधारणत्वासातिप्रसंगत्वमिति जावः ॥ ४ ॥

**बहिरप्युदयावर्शी जवत्यन्तर्गतो गुण. । मणेः पटावृतस्यापि बहिर्ज्योतिरुदञ्चति ॥ ५ ॥**

बहिरिति–व्यक्तः ॥ ५ ॥

स्वजावजेदादपि कार्यैकलिंगकं महत्त्वमाह–

**जेद' प्रकृत्या रत्नस्य जात्यस्याजात्यतो यथा । तथार्वागपि देवस्य जेदोऽन्येभ्यः स्वजावतः ॥ ६ ॥**

जेद इति–अर्वागपि मिथ्यात्वादिदशायामपि । स्वजावत इति अन्यथा स्वसिद्धान्यवृत्तिगुणापत्तेः । न च प्रागजावा-जावाक्षेयमापत्तिः स्वगुणप्रागजावस्य स्वयोग्यतापरिक्षतिपर्यवसितत्वादिति जावः ॥ ६ ॥

**नित्यनिर्दोषताजावान्महत्त्वं नेति डुर्वचः । नित्यनिर्दोषता यस्माद्‌घटादावपि वर्तते ॥ ७ ॥**

नित्येति–नित्यनिर्दोषताया अजावान्महत्त्वं न । प्रक्रमाद्वीतरागे इति । डुर्वचः डुष्टं वचनं । यस्मान्नित्यनिर्दोषता दोषात्यंताजाववस्वरूपा नित्यत्वे सति ध्वयमेव वा घटादावपि वर्तते । आदिना आकाशादिग्रहः । इत्थं च वीतरागो न महान् नित्यनिर्दोषत्वाजावादिति अन्वयिनि घटादौ दृष्टांते साधनवैकल्यमुपदर्शितं जवति । व्यतिरेकिणि चेश्वरदृष्टान्ते नोजयवादिसंमतत्व, वीतरागस्यैवासिद्धौ परस्याश्रयासिद्धिश्च, तत्सिद्धौ धार्मिग्राहकमानेन तन्महत्त्वसिद्धौ बाधश्चेति द्रष्टव्यम् ॥ ७ ॥

**सात्मन्येव महत्त्वांगमिति चेत्तत्र का प्रमा । पुमन्तरस्य कल्प्यत्वाद्ध्वस्तदोषो वरं पुमान् ॥ ८ ॥**

सेति—सा नित्यनिर्दोषता । आत्मन्येव आत्मनिष्ठैव । महत्त्वांगं । इत्थं च नित्यनिर्दोषत्वाभावस्य हेतुत्वान्न दृष्टान्ते साधनवैकल्यमिति भावः । अत्राह—इति चेत्तत्रात्मनि नित्यनिर्दोषत्वे । का प्रमा किं प्रमाणं । तथा च प्रतियोग्यप्रसिद्ध्या भावाप्रसिद्धेर्हेतुरेवासिद्ध इति भावः । महत्पदप्रवृत्तिनिमित्ततयैव नित्यनिर्दोषात्मत्वं सेत्स्यतीत्यत आह—पुमन्तरस्य नित्यनिर्दोषस्य पुंसः कल्प्यत्वाद्वरं ध्वस्तदोषः पुमान् कल्पनीयः । तथा च दोषात्यन्ताभावादात्मत्वापेक्षया लघौ दोषध्वंस एव महत्पदप्रवृत्तिनिमित्तत्वकल्पनं न्याय्यमिति भावः । वस्तुतः पदप्रवृत्तिनिमित्तमात्रं न पदार्थान्तरकल्पनक्षममिति इष्टव्यम् ८

ध्वस्तदोषत्वे भगवतः समंतभद्रोक्तं मानमनुवदति ।

**दोषावरणयोर्हानिर्निःशेषास्त्यतिशायनात् । क्वचिद्यथा स्वहेतुभ्यो बहिरन्तर्मलक्षयः ॥ ९ ॥**

दोषेति—क्वचिद्दोषावरणयोर्निःशेषा हानिरस्ति । अतिशायनात्तारतम्यात् । यथा स्वहेतुभ्यो मलक्षयहेतुभ्यः । स्वर्णादेर्बहिरन्तश्च मलक्षयः । यद्यप्यत्र दोषावरणे निःशेषहानिप्रतियोगिनी तारतम्यवद्धानि प्रतियोगित्वादित्यनुमाने पक्षविवेचने बाधासिद्धी न क्वचित्पदग्रहणमात्रनिवर्त्ये साध्याश्रयतया पृथक्कृतां व्यक्तिमनुपादायापादनाच्च न दिग्नागमतप्रवेशःन । च निःशेषहानिप्रतियोगिजातीयत्वस्य साध्यत्वे संप्रतिपन्नस्वर्णमलस्य दृष्टान्तत्वे च न कोऽपि दोष इति वाच्यं, निःशेषहीयमाण । स्वर्णमलवृत्तिदोषावरणसाधारणौपाधिकत्वजातिसिद्ध्याऽर्थान्तरापत्तेः । दोषत्वादिजातिग्रहे च दृष्टान्तस्य साध्यविकलत्वात् - तथापि दोषत्वमावरणत्वं च निःशेषहीयमाणवृत्तिदेशतः हीयमाणवृत्तिजातित्वात् स्वर्णमलत्ववदित्यत्र तात्पर्यम् ॥ ९ ॥

इत्थं जगदकर्तृत्वेऽप्यमहत्त्वं निराकृतम्। कार्ये कर्तृप्रयोज्यस्य विशेषस्यैव दर्शनात् ॥ १० ॥

इत्थमिति—इत्थं व्यस्तदोषत्वेनैव महत्त्वसिद्धौ। जगदकर्तृत्वेऽपि सति। जगवतोऽमहत्त्वं निराकृतं। जगत्कर्तृत्वस्य कस्यचिदप्यसिद्धेश्च। न च "क्षित्यादिकं सकर्तृकं कार्यत्वात् घटादिवत्" इत्यनुमानात्तत्सिद्धिः, अप्रयोजकत्वात्। कार्यत्वेन कर्तृत्वेन च कार्यकारणभावस्य विपक्षबाधकस्य तर्कस्य सत्त्वात् नाप्रयोजकत्वमिति चेन्न, कार्यत्वावच्छिन्नं प्रति कर्तृत्वेन हेतुत्वे प्रमाणाभावात्। कार्ये घटादौ कर्तृप्रयोज्यस्य कर्तृजन्यतावच्छेदकस्य विशेषस्यैव क्षितिमेर्वादिव्यावृत्तजातिविशेषस्यैव दर्शनादिदं सकर्तृकमिदं च नेति व्युत्पन्नव्यवहारेण ग्रहणाद्व्याप्यधर्मेण व्यापकधर्मान्यथासिद्धेस्तदवच्छिन्न एव कर्तृत्वेन हेतुत्वात्। पृथिवीत्वादिना सांकर्यान्नायं विशेष इति चेन्न, उपाधिसांकर्यस्यैव जातिसांकर्यस्याप्यदूषणत्वस्य स्वदीयैरेव व्यवस्थापितत्वात्, कार्यत्वस्य कालिकसंबन्धेन घटत्वपटत्वादिमत्त्वरूपस्य नानात्वात्, कृत्यव्यवहितोत्तरत्वस्य परंपरासंबन्धेन कृतित्वस्यैव वा कर्तृजन्यतावच्छेदकत्वौचित्याच्च ॥ १० ॥

ननु जन्यतावच्छेदकतया सिद्धं जन्यत्वमेव कर्तृकार्यत्वावच्छेदकं भविष्यतीत्यत आह—

कर्तृत्वेन च हेतुत्वे ज्ञातृत्वेनापि तद्भवेत्। ज्ञानस्यैव च हेतुत्वे सिद्धे नः सिद्धसाधनम् ॥ ११ ॥

कर्तृत्वेनेति—कर्तृत्वेन च हेतुत्वे ज्ञातृत्वेनापि तद्धेतुत्वं भवेत्। तथा चानेककार्यकारणभावकल्पनं। इत्यप्रामाणिकमिति भावः। घटतदुपादानप्रत्यक्षयोः कार्यकारणभावः कल्प्यमानः सामान्यव्यभिचारानुपस्थितिबाधकाभ्यां सामान्यत

एव सिध्यतीति द्व्यणुकाद्युपादानप्रत्यक्षाश्रयतया जगत्कर्तृत्वं सेत्स्यतीत्यत आह–ज्ञानस्यैव च हेतुत्वेऽभ्युपगम्यमाने सिद्धेः नोऽस्माकं सिद्धसाधनं, प्रवाहतस्तेषामनादित्वात् । तदिदमुच्यते–"जं जहा भगवया दिट्ठं तं तहा विपरिणमइ त्ति" । अपि चैवमुपादानप्रत्यक्षं निराश्रयमेव सिध्यतु, गुणस्य साश्रयकत्वव्याप्तौ मानाभावात् । क्षणमात्रमेव सदापि कस्यचिद्गुणस्यानाश्रयस्यावस्थितेर्वक्तुं शक्यत्वात् ॥ ११ ॥

"ब्रह्मांडादिधृतिः प्रयत्नजन्या धृतित्वात् घटादिधृतिवत्" इत्यनुमानाद्ब्रह्मांडादिधारकप्रयत्नाश्रयतया जगत्कर्तृत्वसिद्धिः । तथा च श्रुतिः–"एतस्य चाक्षरस्य प्रशासने गार्गी द्यावापृथिवी विधृते तिष्ठतः" इत्यत आह–

**धृत्यादेरपि धर्मादिजन्यत्वान्नात्र मानता । कृतित्वेनापि जन्यत्वाच्चेत्यन्यत्रैष विस्तरः ॥ १२ ॥**

धृत्यादेरिति–धृतिः पतनप्रतिबन्धकः संयोगः । आदिना स्थितिग्रहः । धर्मादिजन्यत्वात् । आदिना स्वभावादिग्रहः । नात्र जगत्कर्तृत्वे मानता प्रमाणता । उक्तश्रुतावक्षरप्रशासनपदयोः संग्रहाभिमतैकात्मतद्धर्मपरतया नानुपपत्तिः । किं च प्रयत्नवदीश्वरसंयोगमात्रस्य धारकत्वेऽतिप्रसंगः, धारणानुकूलप्रयत्नवदीश्वरसंयोगस्य धारणावच्छिन्नेश्वरप्रयत्नस्यैव वा तत्त्वे स एव दोषः । यदि न स्वजनकवृत्तिधारणावच्छिन्नविशेष्यताया एव वा धारकतावच्छेदकसंबन्धत्वमभ्युपगम्यते, तदभ्युपगमे च तद्‌ज्ञानेच्छयोरपि धारकत्वापत्तौ गौरवात्, लाघवाद्धर्मस्यैव धारकत्वौचित्यं । तदिदमुच्यते–"निरालंबा निराधारा विश्वाधारा वसुन्धरा । यच्चावतिष्ठते तत्र धर्मादन्यन्न कारणम् ॥ १ ॥" इति । तथा कृतित्वेनापि जन्यत्वाच्च न

अगत्कर्तृत्वसिद्धिः । कृतित्वावच्छिन्ने इच्छादेर्हेतुत्वान्नित्यकृत्यादौ मानाभावात् अन्यत्वस्य कार्यत्वावच्छेदककोटौ प्रवेशे गौरवात् फलसुखस्यापि तस्य क्वचिद्दोषत्वात् "नित्यविज्ञानमानन्दं ब्रह्म" इति श्रुतेर्नित्यज्ञानसिद्धावपि नित्येच्छाकृत्योरसिद्धेः । अत एव नित्यसुखस्यापीश्वरे सिद्धिप्रसंगाच्च तस्मादुक्तश्रुतिरपि नित्यज्ञानसुखाश्रयतया ध्वस्तदोषत्वेनैव महत्त्वमीश्वरस्य बोधयतीति स्थित । इत्येष विस्तरोऽन्यत्र स्याद्वादकल्पलतादौ, दिग्मात्रप्रदर्शनं पुनरेतदिति बोध्यम् ॥ १२ ॥

अन्ये त्वाहुर्महत्त्वं हि संख्यावद्दानतोऽस्य न । शास्त्रे नो गीयते ह्येतदसंख्यं त्रिजगद्गुरोः॥१३॥

अन्ये त्विति—अन्ये तु बौद्धास्त्वाहुः—अस्य जिनस्य हि संख्यावद्दानतो न महत्त्वं । श्रूयते हि जिनदानस्य संख्यावत्त्वं "तिन्नेव य कोडिसया अट्ठासीइं च हुंति कोडीओ । असियं च सयसहस्सा एयं संवच्छरे दिन्नं ॥ १ ॥" इत्यादिना । न अस्माकं शास्त्रे चैतद्दानमसंख्यं त्रिजगद्गुरोर्बोधिसत्त्वस्य गीयते । तदुक्तं—"एते हाटकराशयः प्रविततः शैलप्रतिस्पर्द्धिनो रत्नानां निचयाः स्फुरन्ति किरणैराक्रम्य भानोः प्रभाः । हाराः पीवरमौक्तिकौघरचितास्तारावलीभासुरा यानादाय निजा निव स्वगृहतः स्वैरं जनो गच्छति ॥ १ ॥" इत्यादि ॥ १३ ॥

असंख्यदानदातृत्वेन हि बोधिसत्त्वस्य बहुविभूतिमत्त्वकार्पण्याभावादिना परेषां महत्त्वं व्यवस्थाप्यते, संख्यावद्दानदातृत्वेन च जिनस्य तद्विपर्ययात्र महत्त्वमिति, तन्नायुक्तं, संख्यावत्त्वस्यान्यप्रयुक्तत्वादित्याशयेन समाधत्ते—

अत्रोच्यते न संख्यावद्दानमर्थाद्यभावतः । सूत्रे वरवरिकायाः श्रुतेः किं त्वर्थ्यभावतः ॥ १४ ॥

अत्रोच्यत इति–अत्र भगवद्दानस्य संख्यावत्त्वे । उच्यते । न संख्यावद्दानं अर्थौघभावतः । आदिना उदारत्वग्रहः । अत्रैव किं मानमित्यत आह–सूत्रे आवश्यकनिर्युक्त्यादिरूपे । वरवरिकाया वृणुत वरं वृणुत वरमित्युद्घोषणारूपायाः श्रुतेः । तस्याश्चार्थौघभावविरोधात् । किं तु अर्थ्यभावतोऽन्यादृशयाचकाभावात् । तदिदमुक्तं–"महादानं हि संख्यावदर्थ्यभावाज्जगद्गुरोः । सिद्धं वरवरिकातस्तस्याः सूत्रे विधानतः ॥ १ ॥" इति ॥ १४ ॥

स च स्वाम्यनुभावेन सन्तोषसुखयोगतः । धर्मेऽप्युग्रोद्यमात्तत्त्वदृष्ट्येत्येतदनाविलम् ॥ १५ ॥

स चेति–स चार्थ्यभावश्च । स्वाम्यनुभावेन भगवतः सिद्धयोगफलभाजः प्रभावेण सोपक्रमनिरुपक्रमधनादानवाञ्छाजनककर्मणा । संतोषसुखस्यानिच्छामितेच्छालक्षणस्य योगतः संभवात् । तथा स्वाम्यनुभावेनैव प्राणिनां धर्मेऽपि कुशलानुष्ठानरूपे । उग्रोद्यमात् अतिशयितप्रयत्नात् । तत्त्वदृष्ट्या संसारासारतापरिज्ञानेन । इत्येतत् संख्यावद्दानं । अनाविलं निर्दोषं । तदिदमुक्तं–"महानुभावताप्येषा तद्भावेन यदर्थिनः । विशिष्टसुखयुक्तत्वात् संति प्रायेण देहिनः ॥ १ ॥ धर्मोद्यताश्च तद्योगात्ते तदा तत्त्वदर्शिनः । महन्महत्त्वमस्यैवमयमेव जगद्गुरुरिति॥२॥" यत्तु संतोषजनकत्वे मितमपि दानं न स्यादिति केनचिदुच्यते, तत्तूक्तसंतोषव्यवस्थाऽपरिज्ञानविजृंभितं । तदिदमाहाष्टकवृत्तिकृत्–"ननु यदि तीर्थकरानुभावादशेषदेहिनां संतोषभावादर्थ्यभावः स्यात्तदा संख्याकरणमप्ययुक्तं, अल्पस्यापि दानस्यासंभवात्, इत्यत्रोच्यते–देवताशेषाया इव संवत्सरमात्रेण प्रभूतप्राणिग्राह्यत्वाद्युक्तमेव संख्यावत्त्वमिति" ॥ १५ ॥

दानादेवाकृतार्थत्वान्महत्त्वं नेति मन्दधीः । तस्योत्तरमिदं पुण्यमित्थमेव विपच्यते ॥ २६ ॥

दानादिति—दानादेव हेतोः । अकृतार्थत्वात् फलविशेषप्रत्याशावश्यकत्वेनासिद्धप्रयोजनत्वात् महत्त्वं नार्हतः इति मन्दधीः कश्चिदाह । तस्येदमुत्तरं—यदुत पुण्यं तीर्थकरत्वनिबन्धनं । इत्थमेव दानादिप्रकारेणैव । विपच्यते स्वविपाकं प्रदर्शयति । तथा च स्वकल्पादेव भगवतो दानं न तु फलप्रत्याशयेति नाकृतार्थत्वमिति भण्यते । तदिदमाह—"उच्यते कल्प एवास्य तीर्थकृन्नामकर्मणः । उदयात् सर्वसत्त्वानां हित एव प्रवर्तते ॥ १ ॥" इति । चत्वारो हि भङ्गाः पुण्यपापयोः संभवन्ति—पुण्यानुबन्धि पुण्यमित्येकः । पापानुबन्धि पुण्यमिति द्वितीयः । पापानुबन्धि पापमिति तृतीयः । पुण्यानुबन्धि पापमिति चतुर्थः । तत्राद्यं मनुष्यादेः पूर्वजन्मभवितं मानुषत्वादिशुभजन्मावाप्तिहेतु अनन्तरं देवादिगतिपरंपराकारणं । अनन्तरं नारकादिजन्मपरंपराकारणं चैतद्द्वितीयं । यच्च तिर्यगादेः प्राग्जन्मोपात्तं तिर्यक्त्वाद्यशुभजन्मानुभवननिमित्तमनन्तरं च नरकादिहेतु तत्तृतीयं । तदनन्तरं देवादिगतिपरंपरानिमित्तं चैतच्चतुर्थमिति । यदाह—"गेहाद्गेहान्तरं कश्चिच्छोभनादधिकं नरः । याति यद्वत्सुधर्मेण तद्वदेव भवाद्भवम् ॥ १ ॥ गेहाद्गेहान्तरं कश्चिच्छोभनादितरन्नरः । याति यद्वदसद्धर्मात्तद्वदेव भवाद्भवम् ॥ २ ॥ गेहाद्गेहान्तरं कश्चिदशुभादधिकं नरः । याति यद्वन्महापापात्तद्वदेव भवाद्भवम् ॥ ३ ॥ गेहाद्गेहान्तरं कश्चिदशुभादितरन्नरः । याति यद्वत्सुधर्मेण तद्वदेव भवाद्भवम् ॥ ४ ॥" अत्र चाद्यभङ्गवर्तिजगद्गुरुपुण्यमनुभूतावशिष्टमप्युचितक्रियाप्रगुणमेवेति न दानादकृतार्थत्वमिति भावनीयम् ॥ २६ ॥

एतदेव गुणान्तरानुगुणविपाकशालितया स्पष्टयति—

**गर्भादारभ्य सत्पुण्याद्भवेत्तस्योचिता क्रिया। तत्राप्यभिग्रहो न्याय्यः श्रूयते स्वामिनस्ततः ॥ १७ ॥**

गर्भादिति—गर्भादारभ्य सत्पुण्यानुबन्धिपुण्यात् भवेत्। तस्य तीर्थकृतः। उचिता क्रिया। "तीर्थकृत्त्वं सदौचित्यप्रवृत्त्या मोक्षसाधक"मिति वचनात् उचितप्रवृत्तिद्वारा तीर्थकृत्त्वस्य मोक्षसाधकत्वात्। ततस्तस्मात्। तत्रापि गर्भेऽपि। स्वामिनः श्रीवर्धमानस्य। अभिग्रहः प्रतिज्ञाविशेषः "जीवतो गृहवासेऽस्मिन् यावन्मे पितराविमौ। तावदेवाधिवत्स्यामि गृहानहमपीष्टतः ॥ १ ॥" इत्येवमुक्तस्वरूपः। न्याय्यो न्यायादनपेतः श्रूयते ॥ १७ ॥

**न्याय्यता चेष्टसंसिद्धेः पित्रुद्वेगनिरासतः। प्रारंभमंगलं ह्येतद्गुरुशुश्रूषणं हि तत् ॥ १८ ॥**

न्याय्येति—न्याय्यता चोक्ताभिग्रहस्य। पित्रोर्दुःप्रतिकारयोरुद्वेगस्य वियोगनिमित्तकशोकरूपस्य निरासतोऽन्येषामप्येवंविधस्थितिप्रदर्शनात्। इष्टस्य मोक्षस्य संसिद्धेः। उचितप्रवृत्तिर्हि तदुपायोऽनुचितप्रवृत्तिश्च तद्विघ्न इति। तदिदमुक्तं—"पित्रुद्वेगनिरासाय महतां स्थितिसिद्धये। इष्टकार्यसमृद्ध्यर्थमेवंभूतो जिनागमे ॥ १ ॥" ननु भगवतो नियतकालीनचारित्रमोहनीयकर्मविपाकोदयेनैव गृहावस्थानमिति नाभिग्रहन्याय्यतेति चेन्न, सोपक्रमस्य तस्य पित्रुद्वेगनिरासाद्यवलंबनकाभिग्रहग्रहणमन्तरा विरतिपरिणामविनाश्यत्वात्। तथापि प्रव्रज्याविरोधिगृहावस्थानकारिणोऽस्य कथं न्याय्यत्वमिति चेन्न, आनुपूर्व्येण न्याय्यप्रव्रज्यासंपादकत्वेनैव तस्य न्याय्यत्वात् कालान्तरे बहुफलस्य कार्यस्य क्वचित्काले निषेधेऽपि

न्याय्यत्वप्रकारस्य सार्वजनीनत्वात् । तदिदमुक्तं—"क्षमी शुश्रूषमाणस्य गुरुनाथसतो गुरु । प्रव्रज्याप्यानुपूर्व्येव न्याय्यान्ते मे भविष्यति ॥ १ ॥ सर्वपापनिवृत्तिर्यत् सर्वथैषा सतां मता । गुरुद्वेगकृतोऽत्यन्तं नेयं न्याय्योपपद्यते ॥ २ ॥" इति । तथा प्रभुर्गोर्मातापित्रोः शुश्रूषणं परिचरणं । तद्धि प्रारब्धमंगलप्रभादिमंगलं प्रव्रज्यालक्षणशुभकार्यस्येति । नैतद्विना प्रव्रज्यासिद्धिरित्यस्मादेव तस्या न्याय्यत्वं । तदिदमाह—"प्रारंभमंगलं ह्यस्या गुरुशुश्रूषणं परम् । एतौ धर्मप्रवृत्तानां नृणां पूजास्पदं महत् ॥ १ ॥" इति ॥ १० ॥

ननु पितृद्वेगे परिणामसापवादस्येव मुमुक्षोरनिष्टनिमित्ततापरिहारस्तु सर्वत्र दुःशक इत्यत आह—

तत्त्वेवरक्षणोपायाप्रवृत्तौ न कृतज्ञता । त्यागोऽप्यबोधे न त्यागो यथा ग्लानौषधार्थिनः ॥१९॥

तदिति—तयोः पित्रोः खेदस्य यद्रक्षणं तदुपायेऽप्रवृत्तौ न कृतज्ञता । सा हि सम्मतिपत्तिसाध्यैव । यदाह—"स कृतज्ञः पुमाँल्लोके स धर्मगुरुपूजकः । स शुद्धधर्मभाक् चैव य एतौ प्रतिपद्यते ॥ १ ॥" इति । तथा च सर्वश्रेयोमूलभूतस्य स्वेष्टस्य कृतज्ञतागुणस्य प्रतिपक्षः पितृखेदः सर्वथैव वर्जनीय इति भावः । यदाह—"अम्मपिउसुसमाणो कहिंचि पडिसोहिज्जा अम्मापियरो" प्रव्रज्याभिमुखीकुर्वीतेत्यर्थः । "अम्मपिउसुसमाणेसु य कम्मपरिणइए विहेज्जा जहासत्ति तदुवगरणं तओ अणुन्नाए पडिवज्जेज्ज धम्मं" । अथ नानुजानीतस्तदा "अणुघरे चेव छवहि जुसेसिया" अल्पायुरहमित्यादिकां मायां कुर्यादित्यर्थः । एवमुपायप्रवृत्तावपि तयोरबोधे । त्यागोऽपि मुमुक्षोस्तस्यतो न त्यागः । यथा ग्लानयोरध्वनि ग्लानीभूत

योः पित्रोरौपधार्मिनस्तदुपकारकौपधानयनार्थं कथंचित्तौ विमुच्यापि गच्छतः पुत्रस्य प्रव्रज्यायास्तयोः स्वस्यान्येषां चोपकारहेतुत्वात्। तदिदमाह—"सव्वहा अपडिवुज्झमाणे च एज्जा अव्वाणगिलाए उसहत्थ चागणाएणं" ॥ १९ ॥

**अपरस्त्वाह राज्यादिमहाधिकरणं ददत् । शिल्पादि दर्शयंश्चार्हन्महत्त्वं कथमृच्छति ॥ २० ॥**

अपरस्त्विति—अपरस्तु वादी आह—राज्यादिमहाधिकरणं महापापकारणं ददत् स्वपुत्रादिभ्यः। शिल्पादि दर्शयंश्च लोकानां। अर्हन् कथं महत्त्वं ऋच्छति ॥ २० ॥

**तन्नेत्थमेव प्रकृताधिकदोषनिवारणात्। शक्तौ सत्यामुपेक्षाया अयुक्तत्वान्महात्मनाम् ॥२१॥**

तदिति—यदुक्तमपरेण वादिना तन्न। इत्थमेव राज्यप्रदानादिप्रकारेणैव । प्रकृतात् राज्यप्रदानादिदोषात् अधिको राज्याप्रदानादिकृतमिथःकलहातिरेकप्रसंगादिरूपो यो दोषस्तस्य निवारणात् । शक्तौ परेषामधिकदोषनिवारणविषयायां सत्यां। उपेक्षाया माध्यस्थ्यरूपाया अयुक्तत्वात्। महात्मनां परार्थमात्रप्रवृत्तशुद्धाशयानां । तदिदमाह—"अप्रदाने हि राज्यस्य नायकाभावतो जनाः। मिथो वै कालदोषेण मर्यादाभेदकारिणः ॥ १ ॥ विनश्यत्यधिकं यस्मादिह लोके परत्र च। शक्तौ सत्यामुपेक्षा च युज्यते न महात्मनः ॥ २ ॥ तस्मात्तदुपकाराय तत्प्रदानं गुणावहम् । परार्थदीक्षितस्यास्य विशेषेण जगद्गुरोः ॥ ३ ॥ एवं विवाहधर्मादौ तथा शिल्पनिरूपणे। न दोषो ह्युत्तमं पुण्यमित्थमेव विपच्यते ॥ ४ ॥ किं चेहाधिकदोषेभ्यः सत्त्वानां रक्षणं तु यत्। उपकारस्तदेवैषां प्रवृत्त्यंगं तथाऽस्य च ॥ ५ ॥" ॥ २१ ॥

नागादे रक्षणादेव गर्ताद्याकर्षणेऽत्र न । दोषोऽन्यथोपदेशेऽपि स स्यात्परनयोद्भवात् ॥ २२ ॥

नागादेरिति–नागादेः सकाशात् । रक्षणाय रक्षार्थं । अनन्याः स्वपुत्रस्य गर्तादेराकर्षणे इतुजानुमन्तृसंगादेर्वकादि-कर्मणीव । अत्र भगवतो राज्यप्रदानादौ न दोषः । अन्यथा असंजनितारक्षदोषनिमित्तकस्यापि बहुगुणकर्मणो कुत्स्ने उपदेशेऽपि भगवतो धर्मव्याख्यानेऽपि । स दोषः स्यात् । परेषां बौद्धादीनां नयानां मिथ्यात्वमूलत्वाता दर्शनानामुद्भवात् तत एवोपपत्तेः(उत्पत्तेः)। "आवश्या अवसाया ठावश्या चेव परसमया" इति वचनात् । तदिदमाह–"नागादे रक्षणं यद्वद् गर्ताद्याकर्षणेन तु । कुर्वन्नदोषवांस्तद्वदन्यथासंजनादयम् ॥ १ ॥ इत्थं चैतदिदं दृष्टमन्यथा देशनाप्यलम् । कुधर्मादि-निमित्तत्वाद्दोषायैव प्रसज्यते ॥ २ ॥" ॥ २२ ॥

कश्चित्तु कुशलं चित्तं मुख्यं नास्येति नो महान् । तदयुक्तं यतो मुख्यं नेदं सामायिकादपि ॥२३॥

कश्चित्त्विति–कश्चित्तु मायापुत्रीयो मुख्यं सर्वोत्तमं । कुशलं चित्तं । नास्य जगदभिमतस्य भगवत इति नो महानय-मित्याह । तदयुक्तं । यतो नेदं परपरिकल्पित कुशलं चित्तं समतृणमणिलेष्टुकाञ्चनानां सर्वसावद्ययोगनिवृत्तिलक्षणात्सा-मायिकादपि मुख्यं । असद्भूतार्थविषयत्वात् ॥ २३ ॥

तथाहि–

स्वधर्मादन्यमुक्त्याशा तदधर्मसहिष्णुता । यद्द्वयं कुशले चित्ते तदसद्भवि तत्त्वतः ॥ २४ ॥

स्वधर्मादिति–स्वधर्मादन्येषां जगत्प्राणिनां मुक्त्याशा मुक्तिवाञ्छा । तेषामन्येषां येऽधर्मा दुर्गतिहेतवस्तेषां सहिष्णुता

स्वस्मिंस्तत्फलापत्त्या परदुःखपरजिहीर्षालक्षणं। यदेतद्द्वयं कुशले चित्ते विषयीभवति। तत्तत्त्वतोऽसम्भवि बुद्धानां निर्वृतिप्रतिपादनात्। गंगावालुकासमा बुद्धा निर्वृता इति परेषामागमव्यवस्थितेः स्वान्यधर्माधर्मयोः परेषु स्वस्मिंश्चोपसंक्रमे तदयोगात्। यदि चैवमसद्भूतार्थविषयं कुशलचित्तं प्रामाणिकं स्यात्तदा—"मय्येव निपतत्वेतज्जगद्दुश्चरितं यथा। मत्सुचरितयोगाच्च मुक्तिः स्यात्सर्वदेहिनाम्॥ १॥" इतिवत् "अज्ञानानां यदज्ञानमास्तां मय्येव तत्सदा। मदीयज्ञानयोगाच्च चैतन्यं तेषु सर्वदा॥ १॥"इत्यपि परेण पठनीयं स्यात्॥ २४॥

**अतो मोहानुगं ह्येतन्निर्मोहानामसुन्दरम्। बोध्यादिप्रार्थनाकल्पं सरागत्वे तु साध्वपि॥ २५॥**

अत इति—अत उक्तकुशलचित्तस्य तत्त्वतोऽसम्भव्यर्थविषयत्वात्। एतद्धि मोहानुगं मोहनीयकर्मोदयानुगतं। मोहोदयाभावे हि समस्तविकल्पोत्कलिकावर्जितमेव चित्तं स्यादिति। निर्मोहानां वीतरागाणां। असुन्दरम्। तथा च कुशलचित्तस्य न मुख्यत्वं निर्मोहत्वविरोधादित्यर्थः। सरागत्वे तु प्रशस्तरागदशायां तु। एतद्बोध्यादिप्रार्थनाकल्पं। आदिनारोग्योत्तमसमाधिग्रहः। साध्वपि प्रशस्तमपि। असम्भविविषयकयोरपि वाङ्मनसोः प्रशस्तभावोत्कर्षकत्वेन चतुर्भङ्गान्तःपातित्वसम्भवात्। तदुक्तम्—"बोध्यादिप्रार्थनाकल्पं सरागत्वे तु साध्वपि"। ननु चतुर्थभङ्गस्थवाङ्मनसोर्भगवत्यपि सम्भवात् कथं न कुशलचित्तयोग इति चेन्न, वैकल्पिकभक्तिभावप्रयुक्तस्य चतुर्थभङ्गस्य प्रार्थनारूपस्य भगवत्यनुपपत्तेः विचित्रवर्गणासद्भावेनैव तत्र तदुपवर्णनादिति बोध्यम्॥ २५॥

यद्यपि व्याघ्रादेः स्वकीयमांसदानादावतिकुशलं चित्तं बुद्धस्येष्यते, न चैतदर्हत इति नात्र महत्त्वमित्याशंक्यते तदप्यसंगतं, तच्चित्तस्यैवानतिकुशलत्वेन मोहानुगतत्वाविशेषादित्यभिप्रायवानाह—

सत्त्वधीरपि या स्वस्योपकारादपकारिणि । सात्मंजरित्वपिशुना परापायानपेक्षिणी ॥ २६ ॥

सत्त्वधीरिति–यापि युष्मस्यापकारिणि स्वमांसजक्षकव्याघ्रादौ । स्वस्योपकारात् कर्मकक्षकर्तनसाहाय्यककरणलक्षणात् । सत्त्वधीः, सा । आत्मानमेव न परं बिभर्ति पुष्णातीत्यात्मंभरिस्तत्त्वं पिशुनयति सूचयतीत्यात्मंभरित्वपिशुना । परेषां स्वमांसभक्षकव्याघ्रादीनामपायान् दुर्गतिगमनादीनापेक्षत इत्येवंशीला । तथा चात्मंभरित्वं परापायानपेक्षत्वं च महद्दूषणमिति न्यायः । तदुक्तम्–"अपकारिणि सद्बुद्धिर्विशिष्टार्थप्रसाधनात् । आत्मंभरित्वपिशुना परापायानपेक्षिणी ॥ १ ॥ २६ ॥

पदार्थमात्ररसिकस्ततोऽनुपकृतोपकृत् । अभूदलक्ष्यो भगवान् महानित्येव मे मतिः ॥ २७ ॥

अर्हमित्यक्षरं यस्य चित्ते स्फुरति सर्वदा । परं ब्रह्म ततः शब्दब्रह्मणः सोऽधिगच्छति ॥ २८ ॥

परःसहस्राः शरदां परे योगमुपासताम् । हन्तार्हन्तमनासेव्य गन्तारो न परं पदम् ॥ २९ ॥

आत्मायमर्हतो ध्यानात्परमात्मत्वमश्नुते । रसविद्धं यथा ताम्रं स्वर्णत्वमधिगच्छति ॥ ३० ॥

पूज्योऽयं स्मरणीयोऽयं सेवनीयोऽयमादरात् । अस्यैव शासने भक्तिः कार्या चेच्चेतनास्ति वः ॥३१॥

सारमेतन्मया लब्धं श्रुताब्धेरवगाहनात् । भक्तिर्भागवती बीजं परमानन्दसंपदाम् ॥ ३२ ॥

पदार्थेत्याद्यारभ्य षट्श्लोकी सुगमा ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥

॥ इति जिनमहत्त्वद्वात्रिंशिका ॥ ४ ॥

## ॥ अथ भक्तिद्वात्रिंशिका ॥ ५ ॥

जिनमहत्त्वज्ञानानन्तरं तत्र भक्तिरावश्यकीति सेयमिदानीं प्रतिपाद्यते–

**श्रमणानामियं पूर्णा सूत्रोक्ताचारपालनात् । द्र[illegible]स्तवो गृहस्थानां देशतस्तद्विधिस्त्वयम् ॥ १ ॥**

श्रमणानामिति–इयं भक्तिः ॥ १ ॥

**न्यायार्जितधनो धीरः सदाचारः शुभाशयः । भवनं कारयेज्जैनं गृही गुर्वादिसंमतः ॥ २ ॥**

न्यायेति- धीरो मतिमान् । गुर्वादिसंमतः पितृपितामहराजामात्यप्रभृतीनां बहुमतः ईदृग्गुणस्यैव जिनभवनकारणाधिकारित्वमिति भावः ॥ २ ॥

**तत्र शुद्धां महीमादौ गृह्णीयाच्छास्त्रनीतितः । परोपतापरहितां भविष्यद्भद्रसन्ततिम् ॥ ३ ॥**

तत्रेति–तत्र जिनभवनकारणे प्रक्रान्ते । शास्त्रनीतितो वास्तुविद्याधर्मशास्त्रोक्तन्यायानतिक्रमेण । परोपतापः प्रातिवेश्मिकादिखेदः ॥ ३ ॥

**अप्रीतिर्नैव कस्यापि कार्या धर्मोद्यतेन वै । इत्थं शुभानुबन्धः स्यादत्रोदाहरणं प्रभुः ॥ ४ ॥**

अप्रीतिरिति–धर्मोद्यतस्य परपीडापरिहारप्रयत्नातिशयो मुख्यमंगं । यथा तापसाप्रीतिपरिहारार्थं भगवतो वर्षास्वपि गमनमिति भावः ॥ ४ ॥

आसन्नोऽपि जनस्तत्र मान्यो दानादिना यतः । इत्थं शुभाशयस्फात्या बोधिवृद्धिः शरीरिणाम् ॥५॥

आसन्नोऽपीति-आसन्नोऽपि तद्देशवर्ती स्वजनादिसंबन्धरहितोऽपि । इत्थं जगद्भक्तिप्रयुक्तौदार्ययोगात् ॥ ५ ॥

इष्टकादि दलं चारु दारु वा सारवन्नवम् । गवाद्यपीडया ग्राह्यं मूल्यौचित्येन यत्नत ॥ ६ ॥

इष्टकादीति-आदिना पाषाणादिग्रहः । चारु गुणोपेतं । दारु वा चारु । यत्नानीत देवताद्युपवनादेः प्रगुणं च । सार-वत् स्थिर खदिरसारवत् । गवादीनामपीडा बहुभारारोपणकृतपीडापरिहाररूपा तया । मूल्यौचित्येन ग्राह्य तत्कारिवर्गतः । तद्ग्रहण च पूर्णकलशादिसुशकुनपूर्व श्रेयः । सुशकुनश्च चित्तोत्साहानुग इति ज्ञापनीयम् ॥ ६ ॥

भृतका अपि सन्तोष्या' स्वय प्रकृतिसाधव. । धर्मो न्यायेन न व्याजाद्धर्ममित्रेषु तेषु तु ॥ ७ ॥

भृतका इति-स्वय प्रकृतिसाधव एव भृतका नियोज्याः । तेऽपि सन्तोष्याः । तेषामपि धर्मनिमित्तत्वेन धर्ममित्रत्वात् तेषु वंचनपरिहितन्यायेनैव धर्मोपपत्तेः ॥ ७ ॥

स्वाशयश्च विधेयोऽत्रानिदानो जिनरागत. । अन्यारंभपरित्यागाज्जलादियतनावता ॥ ८ ॥

स्वाशयश्चेति-स्वाशयश्च शुभाशयश्च विधेयः । अत्र जिनभवनकृत्ये । अनेनावंचनत्वास्यविषयतया शुद्धिरभिहिता । अनिदानो निदानरहितः । जिनरागतो जगद्भक्तेः । अनेनोद्देश्यत्वास्यविषयतया शुद्धिरभिहिता । अन्येषा गृहादिसंब-

निधनामारम्भाणां परित्यागात् । जलादीनां या यतना स्वकृतिसाध्यजीवपीडापरिहाररूपा तद्वता । अनेन साध्यत्वाख्य-विषयतया शुद्धिरभिहिता॥ ८ ॥

इत्थं चैषोऽधिकत्यागात् सदारम्भः फलान्वितः । प्रत्यहं भाववृद्ध्याप्तैर्भावयज्ञः प्रकीर्तितः ॥ ९ ॥

इत्थमिति–इत्थं च यतनावत्त्वे च । एष प्रकृत आरम्भः । अधिकत्यागान्निष्फलाधिकारम्भनिवृत्तेः । फलान्वितः श्रेयःफलयुक्तः सदारम्भः । प्रत्यहं प्रतिदिवसं । भाववृद्ध्या कृताकृतप्रत्युपेक्षणादिशुभाशयानुबन्धरूपया । आप्तैः साधुभिः । भावयज्ञो भावपूजारूपः प्रकीर्तितः। तदाह–"एतदिह भावयज्ञः" इति। न चैवं द्रव्यस्तवव्यपदेशानुपपत्तिः, द्रव्यभावयोरन्योऽन्यसमनुवेधेऽपि द्रव्यप्राधान्येन तदुपपादनादिति द्रष्टव्यम् ॥ ९ ॥

जिनगेहं विधायैवं शुद्धमक्षयनीवि च । द्राक् तत्र कारयेद्बिम्बं साधिष्ठानं हि वृद्धिमत् ॥ १० ॥

जिनगेहमिति–अक्षयनीवि परिपालनसंवर्धनद्वाराऽहीयमानमूलधनम् ॥ १० ॥

विभवोचितमूल्येन कर्तुः पूजापुरःसरम् । देयं तदनघस्यैव यथा चित्तं न नश्यति ॥ ११ ॥

विभवेति–पूजाभोजनपत्रपुष्पफलादिना । अनघस्याव्यसनस्य । एवकारेण स्त्रीमद्यद्यूतादिव्यसनिनो निषेधः । यथा येन प्रकारेण । चित्तं न नश्यति । कारयितृवैज्ञानिकयोः कालुष्यलक्षणः चित्तनाशो न भवति । प्रतिबिम्बो ह्येष धर्मप्रक्रमेऽमंगलरूपस्तत्त्वज्ञैरिति ॥ ११ ॥

यावन्तश्चित्तसन्तोषास्तदा बिंबसमुद्भवा । तत्कारयानि तावन्तीत्युत्साह उचितो महान् ॥ १२ ॥

यावन्त इति–तदा बिंबकारणे । तावन्ति तावद्बिंबकारणसाध्यफलोदयात् ॥ १२ ॥

तत्कर्तरि च याप्रीतिस्तत्त्वत सा जिने स्मृता । पूर्या दौर्हृदभेदास्तज्जिनावस्थात्रयाश्रया. ॥ १३ ॥

तत्कर्तरि चेति–तत्कर्तरि च बिंबनिर्मातरि च । याऽप्रीतिः सा तत्त्वतः फलतो जिने स्मृता । तदालंबनकाया अपि तस्या जिनोद्देशकत्वात् । सा च सर्वापायहेतुरिति तत्परिहारे यत्नो विधेयः । तदाह–"अप्रीतिरपि च तस्मिन् भगवति परमार्थनीतितो ज्ञेया । सर्वापायनिमित्तं ह्येषा पापा न कर्तव्या ॥ १ ॥" तदप्रीतेः सर्वथा परिहार्यत्वात् । दौर्हृदभेदाः शिल्पिगता बालकुमारयुवलक्षणावस्थात्रयगामिनो मनोरथाः । तदवस्थात्रयमनाहृत्य जिनावस्थात्रयाश्रयाः प्रतिमागतावस्थात्रयोत्प्रायनेन मनसोत्थापिताः सन्तः पूरणीयाः क्रीडनकाद्युपढौकनादिना । इत्थमेव जगद्गुरुभक्तिप्रकर्षोपपत्तेः । यदाह–"अधिकगुणस्थैर्नियमात् कारयितव्यं स्वदौर्हृदैर्युक्तम् । न्यायार्जितवित्तेन तु जिनबिंबं भावशुद्धेन ॥ १ ॥" अत्रावस्थात्रयगामिनो बुधैर्दौर्हृदाः समाख्याताः । बालाद्यवस्थायत्तत् क्रीडनकादिदेयमिति ॥ १३ ॥

स्ववित्तस्थेऽन्यवित्ते तत्पुण्याशसा विधीयते । मंत्रन्यासोऽर्हतो नाम्ना स्वाहान्त. प्रणवादिकः ॥ १४ ॥

स्ववित्तस्य इति–स्ववित्तस्थे कथंचित्स्वधनान्तः प्रविष्टे परवित्ते सति । तस्य परस्य पुण्याशसा, अत्रस्थात्परधनांशात् परस्यापि पुण्यं भवत्वितीच्छारूपा विधीयते । एवं हि परकीयवित्तेन स्ववित्तानुप्रविष्टेन पुण्यकरणाननिष्ठापाड्भावशुद्धं न्याया-

र्जितं वित्तं भवतीति । तदिदमुक्तम्—"यद्यस्य सत्कमनुचितमिह वित्तं तस्य तज्जमिह पुण्यम् । भवतु शुभाशयकरणादित्येतद्भावशुद्धं स्यात् ॥ १ ॥" इति । तत्राऽर्हतोऽधिकृतस्य नाम्ना मध्यगतेन प्रणवादिकः स्वाहान्तश्च मंत्रन्यासो विधीयते । मननत्राणहेतुत्वेनास्यैव परममंत्रत्वात् । यदाह—"मंत्रन्यासश्च तथा प्रणवनमःपूर्वकं च तन्नाम । मंत्रः परमो ज्ञेयो मननत्राणे ह्यतो नियमात् ॥ १ ॥" इति ॥ १४ ॥

**हेमादिना विशेषस्तु न बिंबे किं तु भावतः । चेष्टया स शुभो भक्त्या तंत्रोक्तस्मृतिमूलया ॥ १५ ॥**

हेमादिनेति—हेम सुवर्णमादिना रत्नादिग्रहः । तेन तु न विशेषः कश्चन बिंबे । किं तु भावतः परिणामात् । स परिणामः । तंत्रोक्तस्मृतिमूलया आगमवचनस्मरणपूर्विकया । चेष्टया प्रवृत्त्या । शुभो भवति । भक्तिबहुमानविनयादिलिंगानामागमानुसरणमूलत्वात् । तदिदमाह—"बिंबं महत् सुरूपं कनकादिमयश्च यः खलु विशेषः । नास्मात्फलं विशिष्टं भवति तु तदिहाशयविशेषात् ॥ १ ॥ आगमतंत्रः सततं तद्भक्त्यादिलिंगसंसिद्धः । चेष्टायां तत्स्मृतिमान् शस्तः खल्वाशयविशेषः ॥ २ ॥" इति ॥ १५ ॥

**लोकोत्तरमिदं ज्ञेयमित्थं यद्बिंबकारणम् । मोक्षदं लौकिकं चान्यत् कुर्यादभ्युदयं फलम् ॥ १६ ॥**

लोकोत्तरमिति—इत्थमागमोक्तविधिस्मृतिगर्भचेष्टाशुद्धेन । यद्बिंबकारणं । इदं लोकोत्तरं मोक्षदं च ज्ञातव्यं । अन्यच्च उक्तविपरीतं च बिंबकारणं । लौकिकं सदभ्युदयं फलं कुर्यात् । पूर्वस्मिन्नभ्युदयस्यानुषंगिकत्वं, अत्र च मुख्यत्वमिति

विशेषः । तदिदमुक्तं—"एवंविधेन यद्बिम्बकारणं तद्वदन्ति समयविदः । लोकोत्तरमन्यदतो लौकिकमभ्युदयसारं च ॥ १ ॥ लोकोत्तरं तु निर्वाणसाधकं परमफलमिहाश्रित्य । अभ्युदयोऽपि हि परमो जयति त्वत्रानुषङ्गेण ॥ २ ॥" १६ ॥

**इत्थं निष्पन्नबिंबस्य प्रतिष्ठासैस्त्रिधोदिता । दिनेभ्योऽर्वाग्दशभ्यस्तु व्यक्तिक्षेत्रमहाह्वयाः ॥ १७ ॥**

इत्थमिति—इत्थमुक्तविधिना । निष्पन्नस्य बिम्बस्य प्रतिष्ठा । आप्तैः शिष्टैः । त्रिधा उदिता । दशभ्यस्तु दशभ्य एव दिनेभ्योऽर्वाक् "दशदिवसाभ्यन्तरतः" इत्युक्तेः । व्यक्तिक्षेत्रमहाह्वयाः व्यक्तिप्रतिष्ठा क्षेत्रप्रतिष्ठा महाप्रतिष्ठा चेति । तत्र वर्तमानस्य तीर्थकृतः प्रतिष्ठा व्यक्तिप्रतिष्ठा । ऋषभादिचतुर्विंशतितीर्थकृतां प्रतिष्ठा च क्षेत्रप्रतिष्ठा । सप्तत्यधिकशतजिन-प्रतिष्ठा च सर्वक्षेत्रापेक्षया महाप्रतिष्ठा । तदाह—"व्यक्त्याख्या खल्वेका क्षेत्राख्या च परा महाख्या च । यस्तीर्थकृद्यदा किल तस्य तदाद्येति समयविदः ॥ १ ॥ ऋषभाद्यानां तु तथा सर्वेषामेव मध्यमा ज्ञेया । सप्तत्यधिकशतस्य तु चरमेह महाप्रतिष्ठेति ॥ २ ॥" ॥ १७ ॥

**देवोद्देशेन मुख्येयमात्मन्येवात्मनो धियः । स्थाप्ये समरसापत्तेरुपचाराद्बहिः पुनः ॥ १८ ॥**

देवोद्देशेनेति—देवोद्देशेन मुख्यदेवमुद्देश्यतया विषयीकृत्य । आत्मन्येव कारयितुरेव । आत्मनः स्वस्य धियो वीतराग-त्वादिगुणावगाहिन्याः । मुख्या निरुपचरिता । इयं प्रतिष्ठा । स्वार्थोपाधप्रतिष्ठाकर्मणा वचननीत्या स्वभावस्यैव स्थापना । तदिदमुक्तं—"भवति च खलु प्रतिष्ठा निजभावस्यैव देवतोद्देशात् । स्वात्मन्येव परं यत् स्थापनमिह वचननीत्योच्चैः ॥१॥"

इति । तथैत एव स्थाप्ये वीतरागे । समरसापत्तेः वचनानलक्रियादग्धकर्ममलस्यात्मनो वीतरागत्वलक्षणस्वर्णभावापत्तिरूपपरमप्रतिष्ठाया हेतुत्वादप्यस्य मुख्यत्वं । यदाह–“बीजमिदं परमं यत्परमाया एव समरसापत्तेः । स्थाप्येन तदपि मुख्या हन्तैषैवेति विज्ञेया ॥ १ ॥” इति । तथा–“भावरसेन्द्रात्तु ततो महोदयाज्जीवतास्वरूपस्य । कालेन भवति परमा प्रतिबद्धा सिद्धकांचनता ॥ १ ॥ वचनानलक्रियातः कर्मेन्धनदाहतो यतश्चैषा । इतिकर्तव्यतयातः सफलैषाप्यत्र भावविधौ ॥ २ ॥” नन्वेवं प्रतिष्ठाकारयितर्येव प्रतिष्ठोपपादने प्रतिमायां प्रतिष्ठितत्वव्यवहारः, तस्यां च पूजादिफलप्रयोजकत्वं कथं स्यात् ? अत आह–उपचारात् बहिः प्रतिमायां पुनरियं प्रतिष्ठा भवति । यत् षोडशकवृत्तिकृत्–“बाह्यजिनबिंबगता तु प्रतिष्ठा बहिर्निजभावोपचारद्वारेण निज एव हि भावो मुख्यदेवतास्वरूपालंबनः स एवायमित्यभेदोपचारेण विदुषां भक्तिमतां पूज्यतापदवीमासादयतीति ।” न चैवं तदध्यवसायनाशात् प्रतिमाया अप्रतिष्ठितत्वापत्तिः इति शंकनीयं, तन्नाशेऽपि तदाहितस्योपचरितस्वभावविशेषस्यानाशात् । द्विविधो ह्युपचरितस्वभावो गीयते–स्वाभाविक औपाधिकश्च । आद्यः परज्ञतापरदर्शकत्वलक्षणः, अन्त्यश्च विचित्र इति न दोषः ॥ १८ ॥

**प्रतिष्ठितत्वज्ञानोत्थसमापत्त्या परेष्वपि । फलं स्याद्वीतरागाणां सन्निधानं त्वसंभवि ॥ १९ ॥**

प्रतिष्ठितत्वेति–प्रतिष्ठितत्वज्ञानोत्थया पूर्वपूर्वप्रतिष्ठितत्वप्रतिसन्धानोत्थापितवचनादरभगवद्बहुमानाहितया समापत्त्या । परेष्वपि प्रतिमापूजाकारिष्वपि । फलं विपुलनिर्जरालक्षणं स्यात् । वीतरागाणां रागरहितानां । सन्निधानं तु समीपागमनरूपं कायिकं, अहंकारममकाररूपं मानसं च, मंत्रसंस्कारादिना असंभवि । तदुक्तं–“मुक्त्यादौ तत्त्वेन प्रतिष्ठिताया न

देवतायास्तु । साम्येन च मुख्येयं तदधिष्ठानाद्यभावेन ॥ १ ॥ द्रव्यादेर्न च तस्या उपकारः कश्चिदत्र मुख्य इति । तद्वत-
स्यकल्पनैषा चाक्रम्भीभासमा जयति ॥ २ ॥" एतेन प्रतिष्ठाविधिना प्रतिमादौ देवतासंनिधिरहङ्कारममकाररूपः क्रियते,
विशेषदर्शनेऽपि स्वसादृश्यदर्शिनश्चित्रादाविवाहार्यारोपसंभवात् ज्ञानस्य नाशेऽपि संस्कारसत्त्वाच्च न पूजाफलानुपपत्तिः,
अस्पृश्यस्पर्शनादिना च तन्नाश इति यत्परैरुच्यते तन्निरस्तं भवति, वीतरागदेवस्थले इत्थं वक्तुमशक्यत्वात् । सरागे देव-
त्वबुद्धेरेव च मिथ्यात्वात् । देवतायां सर्वज्ञत्वाभावे व्यासंगदशायां व्यवहितनानादेशेषु प्रतिष्ठाकर्मबाहुल्ये चाहङ्कारममका-
रानुपपत्तेः । संस्कारनाशेऽपूज्यत्वापत्तेः । तज्ज्ञानसंस्कारयोरननुगतयोः पूजाफलप्रयोजकत्वे गौरवाच्चेति । न च भवतामपि
व्यासंगदशात्प्रतिष्ठितत्वज्ञानाभावे पूजाफलानुपपत्तिरिति, विशेषफलाभावेऽपि प्रीत्यादिना सामान्यफलानपायात् । यैस्तु
यथार्थं प्रतिष्ठितत्वप्रत्यभिज्ञानं पूजाफलसामान्ये एव प्रयोजकमिष्यते, तेषामयमपि दोष एव । ये तु नव्यनैयायिकाः—प्र-
तिष्ठाविधिना जनितं विचित्रमदृष्टं स्वाश्रयात्मसंयोगाश्रयस्य पूज्यताप्रयोजकमभ्युपयन्ति, तेषां तद्व्यक्तिविशिष्टसंबन्धा-
प्रवेशेऽतिप्रसङ्गः, तत्प्रवेशे चाननुगम इति । यत्पुनरुच्यते चिन्तामणिकृता—"प्रतिष्ठितं पूजयेदिति" विधिवाक्येन प्रतिष्ठि-
तायाः कारणत्वं न बोध्यते, किं तु भूतार्थे क्तानुशासनादतीतप्रतिष्ठे पूज्यत्वं बोध्यते । तथा च प्रतिष्ठाध्वंसः प्रतिष्ठाका-
लीनयावदस्पृश्यस्पर्शादिप्रतियोगिकाभावसंसर्गाभावसहितः, पूज्यत्वप्रयोजकः, स च प्रागभावोऽत्यन्ताभावश्च कश्चिदिति ।
तदप्यविचारितरमणीयं । प्रतिष्ठायाः क्रियेच्छारूपत्वे ध्वंसस्य प्रतिमानिष्ठत्वात्, संयोगरूपत्वेऽपि द्विष्ठत्वात्, कारणीभू-
ताभावप्रतियोगित्वेन पूजाफले प्रतिष्ठायाः प्रतिबन्धकत्वव्यवहारोपपत्तेः । क्तप्रत्ययस्थलेऽपि "प्रोदिता प्रीतयः" इत्यादौ

ध्वंसव्यापारकत्वाकल्पनात् कालान्तरभाविनि फले चिरनिष्ठस्य भावव्यापारकत्वनियमाच्च, अन्यथा पूर्वोच्छेदापत्तेश्च किंचित्किंचिदवयवनाशेन प्रतिमान्तरोत्पत्तौ । न च तत्र प्रतिष्ठाध्वंसानभ्युपगमात्पूज्यतानापत्तिः प्रतिष्ठितत्वबुद्धिबलाद्वीहिषुसंस्कृतत्वस्येव तेन तस्य न क्षतिरित्यभ्युपगमे च यथाप्रतीतिशबलवस्त्वभ्युपगमोऽपि बलादापतेदिति किमतिपल्लवितेन ॥१९॥

**संप्रदायागतं चेह मंत्रन्यासादि युक्तिमत् । अष्टौ दिनान्यविच्छित्त्या पूजा दानं च भावतः ॥ २० ॥**

संप्रदायेति–इह प्रतिष्ठाविधौ । मंत्रन्यासादिकं च क्षेत्रसंशोधनाभिवर्षणादिनिष्पत्तये वायुमेघकुमारादिविषयं । संप्रदायागतं शिष्टपारंपर्यायातं युक्तिमद्भवति । परः प्राह–इत्थं विशिष्टन्यायार्जने भावशुद्धनिष्पन्नबिंबस्य स्थापनावसरे वह्न्यादि विघ्नोपशान्त्यर्थमापादनमसारं, भावशुद्धनैव सिद्धेः, मैवं भावसत्यान्तरितस्थापनायां तत्प्राधान्यात्सत्यतातिशयेन स्वारसिकेनैव सिद्धेः । अत्र तूपचारादेव क्षेत्राधिष्ठातृप्रस्तुतशान्त्याद्यर्थं शासनोन्नतित्वेन विशेषाभ्युदयतासिद्धेः अन्यथाप्रतिष्ठापत्तेः । केवलं भावसिद्धत्वे पद्मासनपर्यंकादिमुद्राविधीयमानत्वे सिद्धावस्थात्वे जलाभिषेकादिव्यवहृतित्वमनापत्तिः यत्परैरुच्यते तन्न, तदेवाभिमतफलेप्सितावाप्तिपूर्वकज्ञायकसिद्धद्रव्यशरीरमत्त्वेनामरैरपि तद्विहितत्वात्सर्वसावद्यवृत्तिमतामनिष्टापत्तिर्न्नवितेत्यारेकापहारः । तस्मात्स्थापनात्वेऽवस्थान्तरकल्पनाविशेषाद्भाववृद्ध्यैव विहितत्वात्तथापि सिध्येद्येन स्थापनमपि अश्लीलं स्यादतो नैव शंकाव्यभिचारित्वं । अष्टौ दिनानि यावदविच्छित्त्या नैरन्तर्येण । पूजा बिंबस्य । दानं च विभवानुसारेण शासनोन्नतिनिमित्तमिति ॥ २० ॥

पूजा प्रतिष्ठितस्येत्थ बिंबस्य क्रियतेऽर्हत. । भक्त्या विलेपनस्नानपुष्पधूपादिभि. शुभै. ॥ २१ ॥

पूजेति–व्यक्त॥ २१ ॥

सा च पञ्चोपचारा स्यात् काचिदष्टोपचारिका । अपि सर्वोपचारा च निजसंपद्विशेषतः ॥ २२ ॥

सा चेति–पंचोपचारा जानुकरद्वयोत्तमांगैः, उपचारयुक्तागमप्रसिद्धैः पंचभिर्विनयस्थानैर्वा । अष्टोपचारिका अष्टभिरंगैरुपचारो यस्यां भवति, तानि चामूनि–" सीसमुरोअरपिट्ठी दो बाहू उरूआ य अट्ठगा " । सर्वोपचारापि च देवेन्द्रन्यायेन । निजसंपद्विशेषतः सर्वयत्नविभूत्यादिना ॥ २२ ॥

इय न्यायोत्थवित्तेन कार्या भक्तिमता सता । विशुद्धोज्ज्वलवस्त्रेण शुचिना संयतात्मना ॥ २३ ॥

इयमिति–इयं पूजा न्यायोत्थवित्तेन न्यायविशेषात्परिशोधितद्रव्येण । भक्तिमता सता कार्या । विशुद्धं पट्टयुग्मादि रक्तपीतादिवर्णमुज्ज्वलं च वस्त्रं यस्य तेन । तदुक्तं–" सितशुभवस्त्रेणेति " । शुचिना द्रव्यतो देशसर्वस्नानाभ्यां । भावतश्च विशुद्धाध्यवसायेन । संवृतात्मना अंगोपांगेन्द्रियसंवरयता ॥ २३ ॥

पिंडक्रियागुणोदारैरेषा स्तोत्रैश्च संगता । पापगर्हापरै. सम्यक्प्रणिधानपुर.सरै ॥ २४ ॥

पिंडेति–पिंडं शरीरं अष्टोत्तरलक्षणसहस्रकलितं । क्रिया आचारो दुर्धरपरीषहोपसर्गजयलक्षणः । गुणाः श्रद्धाज्ञान-

विरतिपरिणामादयः, केवलज्ञानदर्शनादयश्च । तैरुदारैर्गम्भीरैः । पापानां रागद्वेषमोहपूर्वं स्वयंकृतानां । गर्हा भगवत्साक्षिकनिन्दारूपा तया परैः प्रकृष्टैः । सम्यक् समीचीनं यत् प्रणिधानं ऐकाग्र्यं तत्पुरःसरैः स्तोत्रैश्च । एषा पूजा । संगता ॥२४॥

**अन्ये त्वाहुस्त्रिधा योगसारा सा शुद्धिचित्ततः(वित्तशुद्धितः)। अतिचारोज्झिता विघ्नशमाभ्युदयमोक्षदा**

अन्ये त्विति-अन्ये त्वाचार्याः प्राहुः-सा पूजा । योगसारा त्रिधा काययोगप्रधाना वाग्योगप्रधाना मनोयोगप्रधाना च । शुद्धिचित्ततः ( वित्तशुद्धितः ) कायादिदोषपरिहाराभिप्रायादतिचारोज्झिता शुद्ध्यतिचारविकला यथाक्रमं विघ्नशमदा अभ्युदयदा मोक्षदा च । तदुक्तं षोडशके-“ कायादियोगसारा त्रिविधा तच्छुध्युपात्तवित्तेन । या तदतिचाररहिता सा परमान्येति समयविदः ॥ १ ॥ विघ्नोपशमन्याद्या गीताऽभ्युदयप्रसाधनी चान्या । निर्वाणसाधनीति च फलदा तु यथार्थसंज्ञाभिः ॥ २ ॥ ” ॥ २५ ॥

**आद्ययोश्चारुपुष्पाद्यानयनैतन्नियोजने । अन्त्यायां मनसा सर्वं संपादयति सुन्दरम् ॥ २६ ॥**

आद्ययोरिति-आद्ययोः कायवाग्योगसारयोः पूजयोः क्रमात् पुष्पादिकं प्रधानपुष्पगन्धमाल्यादिकं सेवते च स्वयमेव ददाति, आनयति च वचनेन अन्यतोऽपि क्षेत्रात् । तदुक्तं-“प्रवरं पुष्पादि सदा चाद्यायां सेवते तु तद्दाता । आनयति चान्यतोऽपि हि नियमादेव द्वितीयायाम् ॥ १ ॥ ” अन्त्यायां मनोयोगसारं ( सारायां ) । सर्वं सुन्दरं पारिजातकुसुमादि मनसा संपादयति । तदुक्तं-“त्रैलोक्यसुन्दरं यन्मनसापादयति तत्तु चरमायाम् ” । इति ॥ २६ ॥

**न च स्नानादिना कायवधादत्रास्ति दुष्टता । दोषादधिकभावस्य तत्रानुभविकत्वतः ॥ २७ ॥**

न चेति–न चात्र पूजाविधौ । कायवधाज्जलवनस्पत्यादिविराधनात् स्नानादिना दुष्टताऽस्ति । दोषात् कायवधदोषात् । अधिकभावस्य स्नानादिजनिताधिकशुभाध्यवसायस्य । अनुभविकत्वतोऽनुभवसिद्धत्वात् । तदिदमुक्तं–" स्नानादौ कायवधो न चोपकारो जिनस्य कश्चिदपि । कृतकृत्यश्च स भगवान् व्यर्था पूजेति मुग्धमतिः ॥ १ ॥ कूपोदाहरणादिह कायवधोऽपि गुणवान् मतो गुणिनाम् ( गृहिणः ) । मंत्रादेरिव च सतस्तदनुपकारेऽपि फलभावः ॥ २ ॥ कृतकृत्यत्वादेव च तत्पूजा फलवती गुणोत्कर्षात् । तस्मादव्यर्थैवारंभवतोऽन्यत्र विमलधियः ॥ ३ ॥ " ॥ २७ ॥

**यतिरप्यधिकारी स्यान्न चैवं तस्य सर्वथा । भावस्तवाधिरूढत्वादर्थाभावादमूदृशा ॥ २८ ॥**

यतिरपीति–न चैवं स्नानादेरदुष्टत्वाद्यतिरप्यत्राधिकारी स्यात्, विभूषार्थस्नानादेस्तस्य निषेधेऽपि पूजार्थस्नानादेर्निषेद्धुमशक्यत्वात्, अन्यथा गृहस्थस्यापि तन्निषेधप्रसंगात् । न च कुटुंबाद्यर्थमारंभप्रवृत्तस्य गृहस्थस्य तत्राधिकारः, यतो "नैकं पापमाचरितमित्यन्यदप्याचरितव्यं स्यात्, गुणान्तरलाभस्तु द्वयोरपि समान" इति शंकनीयं । तस्य यतेः सर्वथा सर्वप्रकारेण भावस्तवाधिरूढत्वात् । अमूदृशा जिनपूजादिकर्मणा अर्थाभावात्प्रयोजनासिद्धेः । न हि यदाद्यभूमिकावस्थस्य गुणकरं तदुत्तरभूमिकावस्थस्यापि तथा, रोगचिकित्सावद्धर्मस्य शास्त्रे नियताधिकारिकत्वेन व्यवस्थितत्वात् । तदुक्तं–अधिकारिवशाच्छास्त्रे धर्मसाधनसंस्थितिः । व्याधिप्रतिक्रियातुल्या विज्ञेया गुणदोषयोः ॥ १ ॥ २८ ॥

**प्रकृत्यारंजजीरुर्वा यो वा सामायिकादिमान्। गृही तस्यापि नात्रार्थेऽधिकारित्वमतः स्मृतम् ॥२९॥**

प्रकृत्येति–अतो जावस्तवाधिरूढस्य यतेरत्रानधिकारित्वात् । यः प्रकृत्या आरंजजीरुः यो वा सामायिकादिमान् तस्याप्यत्रार्थे जिनपूजारूपेऽधिकारित्वं न स्मृतं । यत्पंचाशकवृत्तिकृत्–"अत एव सामायिकस्थः श्रावकोऽप्यनधिकारी" तस्यापि सावद्यनिवृत्ततया जावस्तवारूढत्वेन श्रमणकल्पत्वात्, अत एव गृहिणोऽपि प्रकृत्या पृथिव्याद्युपमर्दनजीरोर्यतनावतः सावद्यसंक्षेपरुचेर्यतिक्रियानुरागिणो न धर्मार्थं सावद्यारंजप्रवृत्तिर्युक्तेति ॥ २९ ॥

**अन्यत्रारंजवान् यस्तु तस्यात्रारंजशंकिनः। अबोधिरेव परमा विवेकौदार्यनाशतः ॥ ३० ॥**

अन्यत्रेति–यस्तु अन्यत्र कुटुंबाद्यर्थे आरंजवान् । तस्यात्र जिनपूजानिमित्तपुष्पादौ। आरंजशंकिनः स्तोकपुष्पादिग्रहणाजिव्यंग्यारंजशंकावतः । परमा प्रकृष्टा । अबोधिरेव बोधिहानिरेव । विवेकः कार्याकार्यज्ञानं, औदार्यं च विपुलाशयलक्षणं, तयोर्नाशतः। तडुक्तं-"अन्नत्थारंजवओ धम्मेणारंजओ अणाजोगो। लोए पवयणखिंसा अबोहिबीअंति दोसा अ॥१॥"

नन्वेवं धर्मार्थमप्यारंजप्रवृत्तिप्राप्तौ–"धर्मार्थं यस्य वित्तेहा तस्यानीहा गरीयसी । प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरम् ॥ १ ॥" तथा–"शुद्धागमैर्यथालाजं प्रत्यग्रैः शुचिजाजनैः । स्तोकैर्वा बहुजिर्वापि पुष्पैर्जात्यादिसंजवैः ॥ १ ॥" इत्यादिकं विरुध्येतेत्याशंक्याह– ॥ ३१ ॥

यत्र धर्मार्थमित्यादि तदपेक्ष्य दशान्तरम् । सकाशादेः किल श्रेयस्युपेत्यापि प्रवृत्तित· ॥ ३१ ॥

यत्रेति—यत्र धर्मार्थमित्यादि भणितं, तद्दशान्तरं सर्वविरत्यादिरूपमपेक्ष्य, आद्यश्लोकस्य सर्वविरत्यधिकारे पाठात्, द्वितीयस्य च पूजाकालोपस्थिते मालिके दर्शनप्रभावनाहेतोर्वैधिकत्वान प्रयोक्तव्येत्येतदर्थस्थापनपरत्वात्, अन्यथा—"सुच्छ-इगुगयनारी जगगुरुणो सिंदुवारकुसुमेहिं । पूआ पणिहाणेणं उववन्ना तियसलोअमि ॥ १ ॥" इत्यादिवचनव्याघातप्रसंगात् । इष्ट चैतदङ्गीकर्तव्यं—सकाशादेः किल श्रेयसि धर्मकार्ये, उपेत्यापि विषयविशेषपक्षपातगर्भत्वेन पापक्षयकरीं वाणिज्यादिक्रियामंगीकृत्यापि प्रवृत्तितः । सकाशश्रावको हि प्रमादाद्भक्षितचैत्यद्रव्यो निबद्धलाभान्तरायादिक्लिष्टकर्मा चिरं पर्यटितदुरन्तसंसारकान्तारोऽनन्तकालाल्लब्धमनुष्यजन्मा दुर्गतनरशिरःशेखररूपः पारगतसमीपोपलब्धस्वकीयपूर्वभववृत्तान्तः पारगतोपदेशतो दुर्गतत्वनिबन्धनकर्मक्षपणाय—"यदहमुपार्जयिष्यामि द्रव्यं तद्ग्रासाच्छादनवर्जं सर्वं जिनायतनादिषु नियोक्ष्ये" इत्यभिग्रहं गृहीतवान्, कालेन च निर्वाणमवाप्तवानिति । अथ युक्तं सकाशस्यैतत्तस्यैव तत्कर्मक्षयोपपत्तेः, न पुनरन्यस्य, नैवं, सर्वथैवाशुभस्यास्य व्यापारस्य विशिष्टनिर्जराकारणत्वायोगादिति ॥ ३१ ॥

पूजया परमानन्दमुपकारं विना कथम् । ददाति पूज्य इति चेच्चिन्तामण्यादयो यथा ॥ ३२ ॥

पूजयेति—व्यक्तः ॥ ३२ ॥

॥ इति भक्तिद्वात्रिंशिका ॥ ५ ॥

## ॥ अथ साधुसामग्र्यद्वात्रिंशिका ॥ ६ ॥

जिनभक्तिप्रतिपादनानन्तरं तत्साध्यं सामग्र्यमाह–

**ज्ञानेन ज्ञानिभावः स्याद्भिक्षुभावश्च भिक्षया । वैराग्येण विरक्तत्वं संयतस्य महात्मनः ॥ १ ॥**

ज्ञानेनेति–व्यक्तः ॥ १ ॥

**विषयप्रतिभासाख्यं तथात्मपरिणामवत् । तत्त्वसंवेदनं चेति त्रिधा ज्ञानं प्रकीर्तितम् ॥ २ ॥**

विषयेति–विषयप्रतिभास इत्याख्या यस्य, विषयस्यैव हेयत्वादिधर्मानुरक्तस्य प्रतिभासो यत्र तत् । तथा आत्मनः स्वस्य परिणामो अर्थानर्थप्रतिभासात्मा विद्यते यत्र तत्, आत्मनो जीवस्य परिणामोऽनुष्ठानविशेषसंपाद्यो विद्यते यत्रेति येन सम्यक्त्वदाभप्रयोज्यवस्तुविषयतावत्वमर्थो लभ्यते तत्वं परमार्थस्ततसम्यक्प्रवृत्त्याद्युपहितत्वेन वेद्यते यस्मिंस्तच्च । तत्त्वपदेन मिथ्याज्ञाननिवृत्तिः तद्विषयस्येतरांशनिषेधावच्छिन्नत्वेनातत्त्वत्वात्, सम्यक्पदेनाविरतसम्यग्दृष्टिज्ञानेन निवृत्तिः, तस्य ज्ञानाज्ञानसाधारणप्रतिभासत्वप्रयोज्यविषयप्रवृत्त्याद्युपहितत्वेऽपि ज्ञानत्वप्रयोज्यविरतिप्रवृत्त्याद्युपहितत्वाभावादिति । इत्यमुना प्रकारेण त्रिधा ज्ञानं प्रकीर्तितं । तदाह–"विषयप्रतिभासं चात्मपरिणतिमत्तथा । तत्त्वसंवेदनं चैव ज्ञानमाहुर्महर्षयः १"

**आद्यं मिथ्यादृशां मुग्धरत्नादि प्रतिभासवत् । अज्ञानावरणापायाद्ग्राह्यत्वाद्यविनिश्चयम् ॥ ३ ॥**

आद्यमिति–आद्यं विषयप्रतिभासज्ञानं । मिथ्यादृशामेव । मुग्धस्याज्ञस्य रत्नप्रतिभासादिवत् तत्तुल्यं । तदाह–"विपर्क-

टकरत्नादौ बालादिमतिज्ञानवत्" इति । अज्ञानं मत्यज्ञानादिकं तदावरणं यत्कर्म तस्यापायः क्षयोपशमस्तस्मात् । तदाह–"अज्ञानावरणापायं" इति । ग्राह्यत्वादीनामुपादेयत्वादीनामविनिश्चयोऽनिर्णयो यतस्तत् । तदाह–"तद्धेयत्वाद्यवेदकं" इति । यद्यपि मिथ्यादृशामपि घटादिविज्ञानेन घटादिग्राह्यता निश्चीयत एव, तथापि स्वविषयत्वावच्छेदेन तदनिश्चयान्न दोषः, स्वसंवेद्यस्य स्वस्यैव तदनिश्चयात् ॥ ३ ॥

भिन्नग्रन्थेर्द्वितीयं तु ज्ञानावरणभेदजम् । श्रद्धावत्प्रतिबन्धेऽपि कर्मणा सुखदुःखयुक् ॥ ४ ॥

भिन्नग्रन्थेरिति–भिन्नग्रन्थेः सम्यग्दृशस्तु । द्वितीयमात्मपरिणामवत् । ज्ञानावरणस्य भेदः क्षयोपशमस्तज्जं । तदाह–"ज्ञानावरणह्रासोत्थं" इति । श्रद्धावत् वस्तुगुणदोषपरिज्ञानपूर्वकचारित्रेच्छान्वितं । प्रतिबन्धेऽपि चारित्रमोहोदयजनितान्तरायलक्षणे सति । कर्मणा पूर्वार्जितेन । सुखदुःखयुक् सुखदुःखसमन्वितं । तदाह–"पातादिपरतन्त्रस्य तद्दोषादावसंशयम् । अनर्थाद्याप्तियुक्तं चात्मपरिणतिमन्मतम् ॥ १ ॥" ॥ ४ ॥

स्वस्थवृत्तेस्तृतीयं तु सज्ज्ञानावरणव्ययात् । साधोर्विरत्यवच्छिन्नमविघ्नेन फलप्रदम् ॥ ५ ॥

स्वस्थेति–स्वस्थाऽनाकुला वृत्तिः कायादिव्यापाररूपा यस्य तस्य साधोः तृतीयं । विरतिः सर्वसावद्यप्रवृत्तिनिवृत्त्यात्मिका तयाऽवच्छिन्नमुपहितं । अविघ्नेन विघ्नाभावेन । फलप्रदं । तदाह–"स्वस्थवृत्तेः प्रशान्तस्य तद्धेयत्वादिनिश्चयम् । तत्त्वसंवेदनं सम्यग् यथाशक्ति फलप्रदम् ॥ १ ॥" इदं च सज्ज्ञानावरणस्य व्ययात् क्षयोपशमात् प्रादुर्भवति । तदाह–"सज्ज्ञानावरणापायं" इति ॥ ५ ॥

**निष्कंपा च सकंपा च प्रवृत्तिः पापकर्मणि । निरवद्या च सेत्याहुर्लिंगान्यत्र यथाक्रमम् ॥ ६ ॥**

निष्कंपा चेति–अत्रोक्तेषु त्रिषु भेदेष्वज्ञानसज्ज्ञानत्वेन फलितेषु । यथाक्रमं । पापकर्मणि । निष्कंपा दृढा प्रवृत्तिः । सकंपा चादृढा । निरवद्या च । सा प्रवृत्तिरिति । लिंगान्याहुः । तदुक्तं–" निरपेक्षप्रवृत्त्यादि लिंगमेतदुदाहृतम् । " तथा– " तथाविधप्रवृत्त्यादिव्यंगं सदनुबन्धि च " तथा–" न्याय्यादौ शुद्धवृत्त्यादिगम्यमेतत्प्रकीर्तितम् । " इति ॥ ६ ॥

ननु क्वैतानि लिंगान्युपयुज्यन्ते इत्यत आह–

**जातिभेदानुमानाय व्यक्तीनां वेदनात् स्वतः । तेन कर्मान्तरात् कार्यभेदेऽप्येतद्भिदाऽक्षता ॥ ७ ॥**

जातीति–जातिभेदस्य निष्कंपपापप्रवृत्त्यादिजनकतावच्छेदकस्याज्ञानादिगतस्य अनुमानाय उक्तानि लिंगानीति संबन्धः। व्यक्तीनामज्ञानादिव्यक्तीनां स्वतो लिंगनैरपेक्ष्येणैव वेदनात् परिज्ञानात् । तेन कर्मान्तरात् चारित्रमोहादिरूपादुदयक्षयोपशमावस्थानवस्थितात् । कार्यभेदेऽपि सावद्यानवद्यप्रवृत्तिवैचित्र्येऽपि । तद्भिदाऽज्ञानादिभिदाऽक्षता । प्रवृत्तिसामान्ये ज्ञानस्य हेतुत्वात्तद्वैचित्र्येणैव तद्वैचित्र्योपपत्तेः। प्रवृत्तौ कर्मविशेषप्रतिबन्धकत्वस्यापि हेतुविशेषविघटनं विनाऽयोगात्। वस्तुतः कार्यस्वभावभेदे कारणस्वभावभेदः सर्वत्राप्यावश्यकः, अन्यथा हेत्वन्तरसमवधानस्याप्यकिंचित्करत्वादिति विवेचितमन्यत्र ७

**योगादेवान्त्यबोधस्य साधुः सामग्र्यमश्नुते । अन्यथाकर्षगामी स्यात् पतितो वा न संशयः ॥ ८ ॥**

योगादिति–अन्त्यबोधस्य तत्त्वसंवेदनस्य । योगादेव संस्काररूपसंबन्धादेव । साधुः सामग्र्यं पूर्णभावमश्नुते । अन्यथा

तत्त्वज्ञानसंस्काराभावे पुनर्योगसम्पत्त्यनुकूलो शंकाकांक्षादिनाकर्णगामी वा स्यात्, तदननुकूलो च पतितो वा न सम्भवोऽत्र कश्चित्, पारमलिंगस्याकरणत्वात् ॥ ८ ॥

त्रिधा भिक्षापि तत्राद्या सर्वसंपत्करी मता । द्वितीया पौरुषघ्नी स्याद्वृत्तिभिक्षा तथान्तिमा ॥ ९ ॥

त्रिधेति–व्यक्तः ॥ ९ ॥

सदानारंभहेतुर्या सा भिक्षा प्रथमा स्मृता । एकवाले द्रव्यमुनौ सदानारंभिता पुनः ॥ १० ॥

सदेति–सदाऽनारंभस्य हेतुर्या भिक्षा । सा प्रथमा सर्वसंपत्करी स्मृता । तद्धेतुत्वं च सदारंभपरिहारेण सदाऽनारंभगुणानुकीर्तनाभिव्यंग्यपरिणामविशेषाधिवयतनया वा । सदाऽनारंभिता तु एकवाले द्रव्यमुनौ संविग्नपाक्षिकरूपे न संभवति । इत्थमुपलक्षणमेकादशी प्रतिमां प्रतिपन्नस्य श्रमणोपासकस्यापि प्रतिमाकालावधिकत्वादनारंभकत्वस्य न तत्संभवः, न च तद्भिक्षायाः सर्वसंपत्करीकल्पत्योरन्यैव निस्तारः । इष्ट हि यथाकथञ्चित्सर्वसंपत्करीयमिति व्यवहारोपपादनेऽपि न पौरुषघ्नीत्यादिव्यवहारानुपपादनात् । तथा च–" यतिर्ध्यानादियुक्तो यो गुर्वाज्ञायां व्यवस्थितः । सदाऽनारंभिणस्तस्य सर्वसंपत्करी मता ॥ १ ॥" इत्याचार्याणामभिधानं संभवाभिप्रायेणैव, जिनकल्पिकादौ गुर्वाज्ञाव्यवस्थितत्वादेरिव सदाऽनारंभित्वस्य फलत एव ग्रहणात् । अन्यथा लक्षणाननुगमापत्तेर्द्रव्यसर्वसंपत्करीमुपेक्ष्य भावसर्वसंपत्करीलक्षणमेव वा कृतमिदमिति यथातत्त्वं भावनीयम् ॥ १० ॥

**दीक्षाविरोधिनी भिक्षा पौरुषघ्नी प्रकीर्तिता । धर्मलाघवमेव स्यात्तया पीनस्य जीवतः ॥ ११ ॥**

दीक्षेति–दीक्षाया विरोधिनी दीक्षावरणकर्मबन्धकारिणी भिक्षा पौरुषघ्नी प्रकीर्तिता । तया जीवतः पीनस्य पुष्टांगस्य धर्मलाघवमेव स्यात् । तथाहि–गृहीतव्रतः पृथिव्याद्युपमर्दनेन शुद्धोञ्छजीविगुणनिन्दया च भिक्षां गृह्णन् स्वस्य परेषां च धर्मस्य लघुतामेवापादयति । तथा गृहस्थोऽपि यः सदाऽनारंभविहितायां भिक्षायां तदुचितमात्मानमाकलयन् मोहमाश्रयति, सोऽप्यनुचितकारिणोऽमी खल्वार्हता इति शासनावर्णवादेन धर्मलघुतामेवापादयतीति । तदिदमुक्तं–" प्रव्रज्यां प्रतिपन्नो यस्तद्विरोधेन वर्तते । असदारंभिणस्तस्य पौरुषघ्नीति कीर्तिता ॥१॥ धर्मलाघवकृन्मूढो भिक्षयोदरपूरणम् । करोति दैन्यात्पीनांगः पौरुषं हन्ति केवलम् ॥२॥" अत्र प्रतिमाप्रतिपन्नभिक्षायां दीक्षाविरोधित्वाभावादेव नातिव्याप्तिरिति ध्येयम् ११

**क्रियान्तरासमर्थत्वप्रयुक्ता वृत्तिसंज्ञिका । दीनान्धादिष्वियं सिन्धुपुत्रादिष्वपि केषुचित् ॥ १२ ॥**

क्रियान्तरेति–क्रियान्तरासमर्थत्वेन प्रयुक्ता, न तु मोहेन चारित्रशुद्धीच्छया वा । वृत्तिसंज्ञिका भिक्षा भवति । इयं च दीनान्धादिषु संभवति । यदाह–" निःस्वान्धपंगवो ये तु न शक्ता वै क्रियान्तरे । भिक्षामटन्ति वृत्त्यर्थं वृत्तिभिक्षेयमुच्यते ॥ १ ॥ नातिदुष्टापि चामीषामेषा स्यान्न ह्यमी तथा । अनुकंपानिमित्तत्वाद्धर्मलाघवकारिणः ॥ २ ॥ " तथा सिन्धुपुत्रादिष्वपि केषुचिद्वृत्तिभिक्षा संभवति । आदिना सारूपिकग्रहः । दीनादिपदाव्यपदेश्यत्वाच्चैषां पृथगुक्तिः । श्रूयन्ते चोत्प्रव्रजिता अमी जिनागमे भिक्षुकाः, यतो व्यवहारचूर्ण्यामुक्तं–"जो अणुसासिउं ण पडिनियत्तो सो सारूविअत्तणेण वा सिन्धुपुत्तत्तणेण वा अच्छउ कंचिकालं । सारूविउंणाम सिरमुंडो अरजोहरणो अलाउयाहिं भिक्खं हिंडइ अभज्जो अ । सिन्धु-

पुत्तो णाम सयाखउ जिरक हिंडइ वा णया घरावयाहिं पेंढक्खिर्भ करेइ खर्डि वा घरेतित्ति "। केषुचिदित्यनेन ये छद्मप्र-जितत्वेन क्रियान्तरासमर्थास्ते गृह्यन्ते। येषां पुनरत्यन्तावध्यजीरूणां संवेगातिशयेन प्रव्रज्यां प्रति प्रतिपन्नमेव मानस तेषा-मार्येव भिक्षा। एतत्प्रतिरिक्तानामसदारम्भाणां च पौरुषघ्न्येव। तस्य पुनरिह केवलिनो वदन्तीति अष्टकवृत्तिकृद्वचन च तेषा नियतनायापरिज्ञानसूचकमित्यवधेयम् ॥ १२ ॥

अन्यायाधेन सामग्र्य मुख्यया भिक्षयाखिवत्। गृह्णत. पिण्डमकृतमकारितमकल्पितम् ॥ १३ ॥

अन्येति–अन्येषा स्वव्यतिरिक्तानां दायकानामबाधेनापीडनेन। मुख्यया सर्वसम्पत्कर्या भिक्षया। अलिवद्भ्रमरवत्। अकृतमकारितमकल्पित च पिण्डं गृह्णतः। सामग्र्य चारित्रसमृद्धा पूर्णत्व भवति। अलिवदित्यनेनानय(ट)नप्रतिषेधः। तथा सत्यन्याहृतदोषप्रसंगात्। साधुवन्दनार्थमागच्छद्भिः गृहस्थैः पिण्डानयने नार्य भविष्यति, तदागमनस्य वन्दनार्थत्वेन साध्व-र्थपिण्डानयनस्य प्रासंगिकत्वादिति चेत्तैवमपि माद्यापहृतायनिवारणादिति वदन्ति ॥ १३ ॥

नन्वेवं सद्गृहस्थानां गृहे भिक्षा न युज्यते। अनारम्भभरयो यत्र स्वपरार्थं हि कुर्वते ॥ १४ ॥

नन्वेवमिति–ननु एव संकल्पितपिण्डस्याप्यग्राह्यत्वे। सद्गृहस्थानां शोभनब्राह्मणाद्यगारिणां गृहे भिक्षा न युज्यते यतेः। हि यतोऽनारम्भभरयोऽनुदरम्भरयो यत्र पाकादिविषये स्वपरार्थं कुर्वते। भिक्षाचरदानासंकल्पेन स्वार्थमेव पाकप्रयत्ने सद्गृहस्थत्वभंगप्रसंगात्, देवतापित्रतिथिभर्तव्यपोषणशेषभोजनस्य गृहस्थधर्मत्वश्रवणात्। न च दानकालात्पूर्वं देयत्वबु-द्ध्याऽसंकल्पितं दातुं शक्यत इत्यपि द्रष्टव्यम् ॥ १४ ॥

**संकल्पभेदविरहो विषयो यावदर्थिकम् । पुण्यार्थिकं च वदता दुष्टमत्र हि दुर्वचः ॥ १५ ॥**

संकल्पेति–अत्र हि " असंकल्पितः पिंडो यतेर्ग्राह्य " इति वचने हि । संकल्पभेदस्य यतिसंप्रदानकत्वप्रकारदानेच्छात्मकस्य विरहो दुर्वचः । केनेत्याह–यावदर्थिकं यावदर्थिनिमित्तनिष्पादितं । पुण्यार्थिकं पुण्यनिमित्तनिष्पादितं च । पिंडं दुष्टं वदता । अन्यथोक्तासंकल्पितत्वस्य यावदर्थिकपुण्यार्थिकयोः सत्त्वेन तयोर्ग्राह्यत्वापत्तेः । तदाह " संकल्पनं विशेषेण यत्रासौ दुष्ट इत्यपि । परिहारो न सम्यक् स्याद्यावदर्थिकवादिनः ॥ १ ॥ विषयो वास्य वक्तव्यः पुण्यार्थे प्रकृतस्य च । अभंत्रवाभिधानात् स्यादाप्तस्यानाप्तताऽन्यथा ॥ २ ॥ " इति ॥ १५ ॥

**उच्यते विषयोऽत्रायं भिन्ने देये स्वभोग्यतः । संकल्पनं क्रियाकाले दुष्टं पुष्टमियत्तया ॥ १६ ॥**

उच्यत इति–अत्रायं विषय उच्यते । यदुत–क्रियाकाले पाकनिवर्तनसमये । स्वभोग्यादात्मीयभोगार्हात् ओदनादेर्भिन्नेऽतिरिक्ते देये ओदनादौ । इयत्तया " एतावदिहकुटुंबाय एतावच्चार्थिभ्यः पुण्यार्थं चेति " विषयतया । पुष्टं संवलितं । संकल्पनं दुष्टं । तदाह–" विभिन्नं देयमाश्रित्य स्वभोग्याद्यत्र वस्तुनि । संकल्पनं क्रियाकाले तद्दुष्टं विषयोऽनयोः ॥१॥ "

**स्वोचिते तु तदारंभे निष्ठिते नाविशुद्धिमत् । तदर्थकृतिनिष्ठाभ्यां चतुर्भंग्यां द्वयोर्ग्रहात् ॥ १७ ॥**

स्वोचिते त्विति–स्वोचिते तु स्वशरीरकुटुंबादेर्योग्ये तु । आरंभे पाकप्रयत्ने । निष्ठिते चरमेन्धनप्रक्षेपेणौदनसिद्ध्युपहिते । तत् स्वभोग्यातिरिक्तपाकशून्यतया संकल्पनं स्वार्थमुपकल्पितमन्न " मितो मुनीनामुचितेन दानेनात्मानं कृतार्थयिष्यामि"

इत्याकारं । नाविशुद्धिमत् न दोषान्वितं । तदर्थं साध्वर्थं । कृतिराद्यपाकः, निष्ठा च चरमः पाकः, ताभ्यां निष्पन्नायां च-
तुर्भङ्ग्या-तदर्थं कृतिस्तदर्थं निष्ठा, अन्यार्थं कृतिस्तदर्थं निष्ठा, तदर्थं कृतिरन्यार्थं निष्ठा, अन्यार्थं कृतिरन्यार्थं च निष्ठा, इत्येवंरूपाया द्वयोर्भङ्गयोर्महाशुद्धत्वेनोपादानात् । तदुक्तं-"तस्स कडं तस्स निट्ठियं चउभंगो तत्थ उ चरिमो सुद्धो" । यदि च साध्वर्थं पृथिव्याद्यारंभप्रयोजकशुभसंकल्पनमपि गृहिणो दुष्टं स्यात्तदा साधुवन्दनादियोगोऽपि तथा स्यादिति न किंचिदेतत् । तदिदमुक्तं-"संभविते तु यदारम्भे तथासंकल्पनं क्वचित् । न दुष्टं शुभभावत्वात्तच्छ्रवणयोगवत् ॥१॥"१७॥

प्राय एवमलाभः स्यादिति चेद्बहुधाप्ययम् । सम्भवत्यत एवोक्तो यतिधर्मोऽतिदुष्करः ॥ १८ ॥

प्राय इति-एवमसंकल्पितस्यैव पिण्डस्य ग्राह्यत्वे । प्रायोऽलाभः स्यात् शुद्धपिण्डाप्राप्तिः स्यात् । इति चेत् बहुधापि संकल्पातिरिक्तैर्बहुभिरपि प्रकारैः शंकितम्रक्षितादिभिरयमलाभः संभवी । अथवा-एवं प्रायोऽसंकल्पितस्यालाभः स्यादिति चेद्बहुधाप्ययमसंकल्पितस्य लाभः संभवी । अर्थिनां भिक्षूणामभावेऽपि च बहूनां पाकस्योपलम्भेः । तथापि तद्गवेषणे दुष्करत्वात्तत्परिणतता स्यादित्यत आह-अत एव यतिधर्मो मूलोत्तरगुणसमुदायरूपोऽतिदुष्कर उक्तः, अतिदुर्लभे मोक्षं प्रति अतिदुष्करस्यैव धर्मस्य हेतुत्वात्, कार्यानुरूपकारणवचनेनैवासत्यसिद्धेः ॥ १८ ॥

संकल्पितस्य गृहिणा त्रिधाशुद्धिमतो मदे । को दोष इति चेज्ज्ञाते प्रसंगात्पापशङ्कितः ॥ १९ ॥

संकल्पितस्येति-गृहिणा गृहस्थेन । संकल्पितस्य यत्यर्थं प्रतिदित्सितस्य । त्रिधाशुद्धिमतो मनोवाक्कायशुद्धस्य साधोर्मदे

ग्रहणे को दोषः । आरंभप्रत्याख्यानस्य लेशतोऽप्यव्याघातादिति चेत् ज्ञाते " मदर्थं कृतोऽयं पिंड " इति ज्ञाते सति तद्ग्रहणे प्रसंगात्, गृहिणः पुनः तथाप्रवृत्तिलक्षणात् पापवृद्धितः तन्निमित्तभावस्य परिहार्यत्वात् ॥ १९ ॥

**यत्यर्थं गृहिणश्चेष्टा प्राण्यारंभप्रयोजिका । यतेस्तदूर्जनोपायहीना सामग्र्यघातिनी ॥ २० ॥**

यत्यर्थमिति–यत्यर्थं गृहिणः प्राण्यारंभप्रयोजिका चेष्टा निष्ठितक्रिया । तदर्जनोपायैराधाकर्मिककुलपरित्यागादिलक्षणैर्हीना सती । यतेः सामग्र्यघातिनी गुणश्रेणीहानिकर्त्री ॥ २० ॥

**वैराग्यं च स्मृतं दुःखमोहज्ञानान्वितं त्रिधा । आर्तध्यानाख्यमाद्यं स्याद्यथाशक्त्यप्रवृत्तितः ॥ २१ ॥**

वैराग्यं चेति–दुःखान्वितं मोहान्वितं ज्ञानान्वितं चेति त्रिधा वैराग्यं स्मृतं । आद्यं दुःखान्वितं आर्त्तध्यानाख्यं स्यात् । यथाशक्ति शक्त्यनुसारेण मुक्त्युपायेऽप्रवृत्तितः । तात्त्विकं तु वैराग्यं शक्तिमतिक्रम्यापि श्रद्धातिशयेन प्रवृत्तिं जनयेदिति ॥

**अनिच्छा ह्यत्र संसारे स्वेच्छालाभादनुत्कटा । नैर्गुण्यदृष्टिजं द्वेषं विना चित्तांगखेदकृत् ॥ २२ ॥**

अनिच्छेति–अत्र हि वैराग्ये सति । संसारे विषयसुखे । अनिच्छा इच्छाभावलक्षणा आत्मपरिणतिः । नैर्गुण्यदृष्टिजं संसारस्य बलवदनिष्टसाधनत्वप्रतिसन्धानजं । द्वेषं विनाऽनुत्कटा । अत एव चित्तांगयोः खेदकृत् मानसशारीरदुःखोत्पादिका इच्छाविच्छेदो हि द्विधा स्यात् अलभ्यविषयत्वज्ञानाद्द्वेषाच्च, आद्य इष्टाप्राप्तिज्ञानाद्दुःखजनकः, अन्त्यश्च न तथेति ॥ २२ ॥

**एकान्तारम्भमहोद्भूतभवनैर्गुण्यदर्शनात् । शान्तस्यापि द्वितीयं सज्ज्वरानुभवसन्निभम् ॥ २३ ॥**

एकान्तेति—एकान्तः सर्वथा सन् दुःखी वा य आत्मा तस्य मयाऽनुत्पन्नं यत्नवनैर्गुण्यदर्शनं ततः । शान्तस्यापि प्रशमव-तोऽपि लोकरक्षा । द्वितीयं मोहान्वितं वैराग्यं भवति । एतच्च सन् शक्त्यावस्थितो यो ज्वरस्तस्यानुदयो वेलाप्राकालव-द्गुणस्तत्सन्निभं तेषां भवेत् । द्वेषजनितस्य वैराग्यस्योत्कटत्वेऽपि मिथ्याज्ञानवासनाऽविच्छेदादपायप्रतिपातशक्तिसमन्वितत्वात्

स्याद्वादविषया ज्ञात्वा षड्जानां कष्टभंगिनाम् । तृतीयं भवजीवाजां मोक्षोपायप्रवृत्तिमत् ॥ २४ ॥

स्याद्वादेति—स्याद्वादस्य सकलनयसमूहात्मकवचनस्य विषया षड्जानामंगिना कष्टं दुःखं ज्ञात्वा । भवजीवाजां संसार-भयवता तृतीयं ज्ञानान्वितं वैराग्यं भवति । तच्च मोक्षोपाये निरवद्यसाम्राज्यलक्षणे प्रवृत्तिमत् प्रकृष्टवृत्त्युपहितं ॥ २४ ॥

सामर्थ्यं स्यादनेनैव द्वयोस्तु स्वोपमर्दतः । अत्रांगत्वं कदाचित्स्याद्गुणवत्पारतन्त्र्यतः ॥ २५ ॥

सामर्थ्यमिति—अनेनैव ज्ञानान्वितवैराग्येणैव । सामर्थ्यं सर्वथा दुःखोच्छेदलक्षणं स्यात्, ज्ञानसहितवैराग्यस्यापायशक्ति प्रतिबन्धकत्वात् । द्वयोस्तु दुःखमोहान्वितवैराग्ययोः स्वोपमर्दतः स्वविनाशद्वारा । अत्र ज्ञानान्वितवैराग्येऽङ्गत्वमुपकार-कत्वं । कदाचिद्गुणोदयदशायां स्यात् । गुणवतः पारतन्त्र्यं आज्ञावशवृत्तित्वं ततः । ज्ञानवत्पारतन्त्र्यस्यापि फलतो ज्ञानत्वात् ॥

ननु गुणवत्पारतन्त्र्यं विनाऽपि भावशुद्ध्या वैराग्यसाफल्यं भविष्यतीत्यत आह—

भावशुद्धिरपि न्याय्या न मार्गाननुसारिणी । अप्रज्ञाप्यस्य बालस्य विनैतत्स्वाग्रहात्मिका ॥ २६ ॥

भावेति—भावशुद्धिरपि यमनियमादिना मनसोऽसंक्लिश्यमानतापि । एतत् गुणवत्पारतन्त्र्यं विना । अप्रज्ञाप्यस्य गीता-

र्थोपदेशावधारणयोग्यतारहितस्य । वालस्य अज्ञानिनः । स्वाग्रहात्मिका शास्त्रश्रद्धाधिकस्वकल्पनाभिनिवेशमयी । मार्गो विशिष्टगुणस्थानावाप्तिप्रवणः स्वरसवाही जीवपरिणामस्तदननुसारिणी न न्याय्या । यदाह–" भावशुद्धिरपि ज्ञेया येषा मार्गानुसारिणी । प्रज्ञापनाप्रियात्यर्थं न पुनः स्वाग्रहात्मिका ॥ १ ॥ रागो द्वेषश्च मोहश्च भावमालिन्यहेतवः । एतदुत्कर्षतो ज्ञेयो हन्तोत्कर्षोऽस्य तत्त्वतः ॥ २ ॥ तथोत्कृष्टे जगत्यस्मिन् शुद्धिर्वै शब्दमात्रकम् । स्वबुद्धिकल्पनाशिल्पिनिर्मितं नार्थवद्भवेत् ॥ ३ ॥ " ॥ २६ ॥

**मोहानुत्कर्षकृच्चैतदत एवापि शास्त्रवित् । क्षमाश्रमणहस्तेनेत्याह सर्वेषु कर्मसु ॥ २७ ॥**

मोहेति–एतद्गुणवत्पारतंत्र्यं च । मोहानुत्कर्षकृत् स्वाग्रहहेतुमोहापकर्षनिबन्धनं । तदाह–" न मोहोद्रिक्तताभावे स्वाग्रहो जायते क्वचित् । गुणवत्पारतंत्र्यं हि तदनुत्कर्षसाधनम् ॥ १ ॥ " अत एव गुणवत्पारतंत्र्यस्य मोहानुत्कर्षकृत्त्वादेव । शास्त्रविदपि आगमज्ञोऽपि । सर्वेषु कर्मसु दीक्षादानोद्देशसमुद्देशादिषु । क्षमाश्रमणहस्तेनेत्याह । इत्यभिलापस्य भावतो गुरुपारतंत्र्यहेतुत्वात् तस्य च मोहापकर्षद्वाराऽतिचारशोधकत्वात् । तदाह–" अत एवागमज्ञोऽपि दीक्षादानादिषु ध्रुवम् । क्षमाश्रमणहस्तेनेत्याह सर्वेषु कर्मसु ॥ १ ॥ " ॥ २७ ॥

**यस्तु नान्यगुणान् वेद न वा स्वगुणदोषवित् । स एवैतन्नाद्रियते न त्वासन्नमहोदयः ॥ २८ ॥**

यस्त्विति–व्यक्तः ॥ २८ ॥

**गुणवद्बहुमानाद्यः कुर्यात्प्रवचनोन्नतिम् । अन्येषां दर्शनोत्पत्तेस्तस्य स्यादुन्नतिः परा ॥ २९ ॥**

गुणवदिति–गुणवतां ज्ञानादिगुणशालिनां बहुमानात् । यः प्रवचनस्योन्नतिं प्रभावनश्लाघां कुर्यात् । तस्य स्वतोऽन्येषां दर्शनोत्पत्तेः । परा तीर्थंकरत्वादिलक्षणा उन्नतिः स्यात् । कारणानुरूपत्वात्कार्यस्य । तदाह–" यस्तूत्सतो यथाशक्ति सोऽपि सम्यक्त्वहेतुताम् । अन्येषां प्रतिपद्येह तदेवाप्नोत्यनुत्तमम् ॥ १ ॥ प्रदीपतीर्थसङ्क्लेशं प्रथमादिगुणान्वितम् । निमित्तं सर्वसौख्याना तथा सिद्धिसुखावहम् ॥ २ ॥ " ॥ २९ ॥

यस्तु शासनमालिन्येऽनाभोगेनापि वर्तते । बध्नाति स तु मिथ्यात्वं महानर्थनिबन्धनम् ॥ ३० ॥

यस्त्विति–यस्तु शासनमालिन्ये लोकविरुद्धगुणवन्निन्दादिना प्रवचनोपघाते । अनाभोगेनाप्यज्ञानेनापि वर्तते । स तु शासनमालिन्योत्पादनावसर एव मिथ्यात्वोदयात् । महानर्थनिबन्धनं दुरन्तसंसारकान्तारपरिभ्रमणकारणं मिथ्यात्वं बध्नाति । यदाह–" यः शासनस्य मालिन्येऽनाभोगेनापि वर्तते । स तन्मिथ्यात्वहेतुत्वादन्येषां प्राणिनां ध्रुवम् ॥ १ ॥ बध्नात्यपि तदेवालं परं संसारकारणम् । विपाकदारुणं घोरं सर्वानर्थनिबन्धनम् ॥ २ ॥ " ॥ ३० ॥

स्वेच्छाचारे च बालानां मालिन्यं मार्गबाधया । गुणानां तेन सामग्र्यं गुणवत्पारतंत्र्यतः ॥ ३१ ॥

स्वेच्छेति–बालानामज्ञानिनां स्वेच्छाचारे च सति । मार्गस्य बाधया " अप्रधानपुरुषोऽयं जैनानां मार्ग " इत्येवं जनप्रवादरूपया मालिन्यं भवति मार्गस्य । तेन हेतुना गुणवत्पारतंत्र्यत एव गुणानां ज्ञानादीनां सामग्र्यं पूर्णत्वं भवति ॥३१॥

इह विज्ञाय मतिमान् यतिर्गीतार्थसंगकृत् । त्रिधाशुद्ध्याचरन् धर्मं परमानन्दमश्नुते ॥ ३२ ॥

इहेति–स्पष्टः ॥ ३२ ॥ ॥ इति साधुसामग्र्यद्वात्रिंशिका ॥ ६ ॥

## ॥ अथ धर्मव्यवस्थाद्वात्रिंशिका ॥ ७ ॥

साधुसामग्र्यं धर्मव्यवस्थया निर्वाह्यत इतीयमत्राभिधीयते–

**भक्ष्याभक्ष्यविवेकाच्च गम्यागम्यविवेकतः । तपोदयाविशेषाच्च स धर्मो व्यवतिष्ठते ॥ १ ॥**

भक्ष्येति–व्यक्तः ॥ १ ॥

**भक्ष्यं मांसमपि प्राह कश्चित्प्राण्यंगभावतः । ओदनादिवदित्येवमनुमानपुरःसरम् ॥ २ ॥**

भक्ष्यमिति–मांसादिकमभक्ष्यं, ओदनादिकं च भक्ष्यमिति सकलशिष्टजनप्रसिद्धा व्यवस्था । तत्र कश्चित्सौगतो "मांसमपि भक्ष्यं, प्राण्यंगभावतः प्राण्यंगत्वात्, न चायमसिद्धो हेतुः, मांसस्य प्राण्यंगतायाः प्रत्यक्षसिद्धत्वात्, ओदनादिवत् । न चात्र दृष्टान्ते हेतुवैकल्यं, ओदनस्यैकेन्द्रियप्राण्यंगत्वेन प्रतीतत्वात्" इत्येवं अनुमानपुरःसरं प्राह ॥ २ ॥

**स्वतंत्रसाधनत्वेऽदोऽयुक्तं दृष्टान्तदोषतः । प्रसंगसाधनत्वेऽपि बाधकत्वाद्व्यवस्थितेः ॥ ३ ॥**

स्वतंत्रेति–अदः सौगतोक्तमेतदनुमानं । स्वतंत्रसाधनत्वे दृष्टान्तदोषतो दृष्टान्तस्य साधनवैकल्यादयुक्तं, वनस्पत्याद्येकेन्द्रियाणां बौद्धस्य प्राणित्वेनासिद्धत्वात् । प्रसंगसाधनत्वेऽपि विकल्पसिद्धदृष्टान्ताद्युपादानेन परमतदूषणमात्रपर्यवसितहेतुत्वेऽपि अदोऽयुक्तं, व्यवस्थितेर्लोकागमसिद्धभक्ष्याभक्ष्यव्यवस्थाया बाधकत्वात् प्राण्यंगत्वमात्रस्य भक्ष्यत्वाप्रयोजक-

स्यात्। न हि भक्ष्यलक्षणकत्वमेव भक्ष्यत्वं, किं स्वधर्माजनकभक्षणकस्य, तत्र च व्यवस्था प्रयोजिकेति। तदाह—" भक्ष्याभक्ष्यव्यवस्थेह शास्त्रलोकनिबन्धना। सर्वैव भावतो यस्मात्तस्मादेतदसांप्रतम्॥ १ ॥" ॥ ३ ॥

इष्टं चैतदभ्युपेयं, यतः—

**व्यवस्थितं हि गोः पेयं क्षीरादि रुधिरादि न। न्यायोऽत्राप्येष नो चेत्स्याज्जिह्मुमांसादिकं तथा॥४॥**

व्यवस्थितमिति—व्यवस्थितं हि गोः क्षीरादि पेयं, रुधिरादि न हि, गवाङ्गत्वाविशेषात्तयोरविशेषः। एष न्यायोऽत्राप्यधिकृतेऽप्यवतरति, प्राण्यङ्गत्वेऽप्योदनादेर्भक्ष्यत्वस्य मांसादेश्चाभक्ष्यत्वस्य व्यवस्थितत्वात्। तदुक्तम्—" तत्र प्राण्यङ्गमप्येकं भक्ष्यमन्यत्तु नो तथा। सिद्धं गवादिसत्क्षीररुधिरादौ तथेक्षणात्॥ १ ॥" नो चेत् यदि च नैवमभ्युपगम्यते तदा तज्जिह्मुमांसादिकं तथा भक्ष्यं स्यात्, प्राण्यङ्गत्वाविशेषात्। तदाह—" जिह्मुमांसनिषेधोऽपि न चैव युज्यते क्वचित्। अस्थ्याद्यपि च भक्ष्यं स्यात्प्राण्यङ्गत्वाविशेषतः॥ १ ॥" किं चैवं स्त्रीत्वसाम्याज्जायाजनन्योरप्यविशेषेण गम्यत्वप्रसंग इति नायमुन्मत्तप्रलापो विदुषां सदसि शोभते। यदाह—" एतावन्मात्रसाम्येन प्रवृत्तिर्यदि चेष्यते। जायायां स्वजनन्यां च स्त्रीत्वात्तुल्यैव सास्तु ते॥ १ ॥" संसारमोचकादिनोऽत्रापीष्टापत्तिरेवेति चेत्तन्मतं बहुधाऽन्यत्र निराकृतं, लेशतश्चाग्रे निराकरिष्यामः॥ ४ ॥

अपि च प्रसंगसाधनं पराभ्युपगमानुसारेण भवति, न चास्माकं प्राण्यङ्गत्वेन मांसभक्ष्यत्वमित्यभ्युपगमः किं तु जीवोत्पत्त्याश्रयत्वादिति दर्शयन्नाह—

प्राण्यंगत्वादभक्ष्यत्वं न हि मांसे मतं च नः । जीवसंसक्तिहेतुत्वात् किं तु तद्गर्हितं बुधैः ॥ ५ ॥

प्राण्यंगत्वादिति–न हि नोऽस्माकं प्राण्यंगत्वान्मांसेऽभक्ष्यत्वं च मतं । किं तु जीवसंसक्तिहेतुत्वात् तन्मांसं बुधैर्बहुश्रुतैर्गर्हितं निषिद्धम् ॥ ५ ॥

तथाहि–

पच्यमानामपक्वासु मांसपेसीषु सर्वथा । तत्र निगोदजीवानामुत्पत्तिर्भणिता जिनैः ॥ ६ ॥

पच्यमानेति–एतदर्थसंवादिनी चेयं गाथा–" आमासुय पक्कासु य विपच्चमाणासु मंसपेसीसु। आयंतियमुववाओ भणिओ अ निगोअजीवाणं ॥ १ ॥ " ॥ ६ ॥

ननु भवतामेव क्वचिदागमे मांसभक्ष्यतापि श्रूयते इति पूर्वापरविरोध इत्याशंक्याह–

सूत्राणि कानिचिच्छेदोपभोगादिपराणि तु । अमद्यमांसाशितया न हन्यन्ते प्रसिद्ध्या ॥ ७ ॥

सूत्राणीति–कानिचित्तु सूत्राणि । छेदश्छेदसूत्रोक्तप्रायश्चित्तौपयिकार्थविशेषः, उपभोगश्च बहिःपरिभोगः, आदिनाऽत्यन्तापवादादिग्रहः तत्पराणि । प्रसिद्ध्याऽमद्यमांसाशितया साधोर्न विरुध्यन्ते । उत्सर्गतो मांसभक्षणस्य दुष्टत्वादेवेति भावः । तथाहि–" अविय इत्त लभिस्सामि पिंडं वा लोयं वा खीरं वा दहिं वा णवणीयं वा घयं वा गुलं वा तिल्लं वा महुं वा मज्जं वा मंसं वा संकुलिं वा फाणिअं वा पूअं वा सिहरणिं वा तं वा पुवामेव भुच्चा पडिग्गहं च संलिहिय संमज्जिय तओ पच्छा

भिक्खूहिं सद्धिं गाहावइकुलं पिंडवायपडियाए पविसिस्सामि वा णिक्खमिस्सामि वा माइट्ठाणं संफासे" इत्यत्र नवरं मद्यमांसे छेदसूत्राभिप्रायेण व्याख्येये इति वृत्तिकृद्व्याख्यातवान्, अथवा कश्चिदतिप्रमादावष्टब्धोऽत्यन्तगृद्धतया मद्यमांसान्यप्याश्रयेत्तस्तदुपादानमिति मातृस्थानस्पर्शयोग्यतया नेदमपि विरुध्यते। तथा–" से भिक्खू वा भिक्खूणी वा से जं पुण जाणिज्जा बहुअट्ठियं मंसं वा मच्छं वा बहुकंटयं" इत्यादिकं सूत्रमपि बहुपरित्यजनधर्मकमांसाग्रहणस्य गृहस्थामंत्रणादिविधेर्ग्रहणे सत्यपि कंटकादिपरिष्ठापनविधेश्च प्रतिपादक। " अस्योपादानं कश्चिल्लूताद्युपशमनार्थं सद्वैद्योपदेशतो बाह्यपरिभोगेन स्वेदादिना ज्ञानाद्युपकारकत्वात् फलवद्दृष्टं, भुजिश्चात्र बहिः परिभोगार्थः"। इति व्याख्यया न विरुद्ध। तथा–" से भिक्खू वा भिक्खूणी वा जाव समाणे से जं पुण जाणिज्जा मंसं वा मच्छं वा भज्जिज्जमाणं पेहाए तिल्लपूयं वा आएसाए उवक्खडिज्जमाणं पेहाए नो खद्धं खद्धं उवसंकमित्तु ओभासिज्ज नन्नत्थ गिलाणाए" इत्यत्र चान्यत्र ग्लानादिकार्यादित्यनेनात्यन्तापवाद एव छेदसमसूत्रविषय इति न कश्चिद्विरोधः श्रुतपरिष्कृतचेतसां प्रतिभाति ॥ ७ ॥

नप्राण्यङ्गसमुत्थं चेत्यादिना योपि वारितम्। लंकावतारसूत्रादौ तदित्येतद्वृथोदितम् ॥ ८ ॥

नेति–न प्राण्यंगसमुत्थमित्यादिना च "न प्राण्यंगसमुत्थं मोहादपि भेषजमश्नीयात्" इत्यादिग्रन्थेन च योऽपि युष्माकमपि लंकावतारसूत्रादौ। तन्मांसभक्षणं वारितं निषिद्धं। आदिना शीलपटलादिशास्त्रपरिग्रहः। इत्येतन्मांसभक्ष्यत्वं वृथोदितं परेण ॥ ८ ॥

अविकृतार्थ एव वाद्यन्तरमतनिरासायोपक्रमते–

न मांसभक्षणे दोषो न मद्ये न च मैथुने । प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥ ९ ॥

नेति–न नैव मांसभक्षणे दोषः कर्मबन्धलक्षणः । न मद्ये पीयमान इति गम्यते । न च मैथुने सेव्यमान इति गम्यते । यतः प्रवृत्तिः स्वभाव एषा मांसभक्षणादिका भूतानां प्राणिनां । निवृत्तिर्विरमणं पुनर्मांसभक्षणादिभ्यो महदभ्युदयलक्षणं फलं यस्याः सा ॥ ९ ॥

भक्ष्यं मांसं परः प्राहानालोच्य वचनादतः । जन्मान्तरार्जनाद्दुष्टं न चैतद्वेद यत्स्मृतम् ॥१०॥

भक्ष्यमिति–परो द्विजन्मजातीयः । अतो वचनात् । अनालोच्य पूर्वापरशास्त्रन्यायविरुद्धतां । मांसं भक्ष्यं प्राह । न चैतन्मांसभक्षणं । जन्मान्तरार्जनात् अन्यभवोत्पादनात् दुष्टं वेद जानाति । यत् स्मृतं मनुना ॥ १० ॥

मां सभक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥ ११ ॥

मामिति–अत्र हि भक्षकस्य भक्षितेन भक्षणीयत्वप्राप्तिनिबन्धनजन्मान्तरार्जनादेव व्यक्तं मांसभक्षणस्य दुष्टत्वं प्रतीयत इति तददुष्टत्वप्रतिपादकं वचनमनेनैव विरुध्यते ॥ ११ ॥

निषेधः शास्त्रबाह्योऽस्तु विधिः शास्त्रीयगोचरः । दोषो विशेषतात्पर्यान्नन्वेवं न यतः स्मृतम् ॥ १२ ॥

निषेध इति–ननु शास्त्रबाह्ये मांसभक्षणे निषेधोऽस्तु, निरुक्तबलप्राप्तनिषेधे विध्यर्थोऽन्वेतु, विधिश्च शास्त्रीयगोचरो वचनोक्तमांसभक्षणविषयोऽस्तु, एवं विशेषतात्पर्याद्विधिनिषेधवाक्यार्थयोर्विधेयनिषेध्ययोः सामानाधिकरण्येनान्वये तात्प-

र्यश्च दोषः । " न मांसभक्षणे दोष " इत्यत्र मांसभक्षणसामान्ये दोषाभावप्रतिपादनात्, अन्यथा " ज्योतिष्टोमेन स्वर्गकामो यजेत " इत्यादावपि स्वर्गादिसामान्ये यागादिकार्यताप्रसंगात् । उक्तं च–" इत्थंजन्मैव दोषोऽत्र न शास्त्राद्भक्षणम् । प्रतीत्यैव निषेधश्च न्याय्यो वाक्यान्तराश्रितेः ॥ १ ॥ " इत्यत्र नेत्यादौ पूर्वपक्षाभिप्रायेण । नैव, यतः शास्त्राद्ब्राह्मभक्षणे प्रतीत्यैव जन्मलक्षणो दोषो निषेधश्च निरुक्तन्यायापेक्ष इति पूर्वव्याख्यानमेवादृतं । शास्त्राद्ब्राह्मभक्षण प्रतीत्य सामान्यत इत्यर्थः, नैष निषेध इति तु व्याख्यानं विशेषतात्पर्ये परस्येष्टमेव, विशेषतात्पर्यग्रहणमदोषायमाह–यतः स्मृतम् ॥ १२ ॥

प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानां च काम्यया । यथाविधि नियुक्तस्तु प्राणानामेव चात्यये ॥ १३ ॥

प्रोक्षितमिति–प्रोक्षितं वैदिकमन्त्राभ्युक्षितं । भक्षयेदश्नीयात् । मांसं पिशितं । ब्राह्मणानां च काम्ययेच्छया । द्विजस्तु-कायशेषं प्रति तदनुज्ञया विधिर्न्यायो यत्र यागश्राद्धमधुपर्कादौ प्रक्रिया तस्यानतिक्रमेण यथाविधि । तत्र यागविधिः पशुमेधाश्वमेधादिशास्त्रसिद्धः श्राद्धविधिस्तु द्वौ मासौ मत्स्यमांसेनेत्यादिप्रसिद्धः । मधुपर्कविधिस्तु याज्ञवल्क्योक्तोऽयं–" महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेदिति " तथा नियुक्तस्तु गुरुभिर्व्यापारित एव । तथा प्राणानामेवेन्द्रियादीनामेव चात्यये विनाशे उपस्थिते इति शेषः । आत्मा हि रक्षणीयः यदाह–" सर्वत एवात्मानं गोपयेदिति" ॥ १३ ॥

नैतन्निवृत्त्ययोगेन तस्याः प्राप्तिनियंत्रणात् । प्राप्ता चास्य निषेधेन यत एतदुदाहृतम् ॥ १४ ॥

नैतदिति–एतद्विशेषपरत्वेन विधिनिषेधोभयसमाधानं प्रकृते न युक्तं। निवृत्त्ययोगेन मांसभक्षणनिवृत्त्यसंभवेन। तस्या निवृत्तेः। प्राप्तिनियंत्रणात् प्राप्तिनियमनात्, प्राप्तमेव प्रतिषिध्यत इति न्यायात्। तर्हि प्रोक्षितादिविधिना प्राप्तमेव निषिध्यतां, न, प्राप्तेर्निवृत्तेर्निषेधेन निषिद्धकर्मकरणे पापप्रचयस्यैव संभवात् तस्या महाफलत्वानुपपत्तेः। यत एतदुदाहृतं भवग्रन्थे ॥ १४ ॥

यथाविधि नियुक्तस्तु यो मांसं नात्ति वै द्विजः। स प्रेत्य पशुतां याति संभवानेकविंशतिम्॥१५॥

यथाविधीति–यथाविधि शास्त्रीयन्यायानतिक्रमेण। नियुक्तो गुरुभिर्व्यापारितः। तुः पुनरर्थः, तस्य चैवं प्रयोगः–अविधिना मांसमखादन्निर्दोष एव, यथाविधि नियुक्तः पुनः। यो मांसं नात्ति। वै इति निपातो वाक्यालंकारार्थः। द्विजो विप्रः। स प्रेत्य परलोके। पशुतां तिर्यग्भावं याति। संभवनानि संभवा जन्मानि तान् एकविंशतिम् ॥ १५ ॥

अधिकारपरित्यागात् पारिव्राज्येऽस्तु तत्फलम्। इति चेत्तदभावे नादुष्टतेत्यपि संकटम् ॥ १६ ॥

अधिकारेति–अधिकारस्य गृहस्थभावलक्षणस्य परित्यागात्। पारिव्राज्ये मस्करित्वे। तत्फलं मांसभक्षणनिवृत्तिफलमस्तु। अयमभिप्रायः–गृहस्थतायां प्रोक्षितादिविशेषणं मांसं भक्षणीयमेव, तस्माच्च पारिव्राज्यप्रतिपत्तिद्वारेण विनिवर्तत इत्येवं प्राप्तिपूर्विका निवृत्तिर्मासंभक्षणस्य स्यात्, सा च सफला। इति चेत्तदभावे पारिव्राज्याभावे नादुष्टता, प्राप्तिपूर्वकनिवृत्त्या अभावेऽभ्युदयादिफलाभावापत्तिलक्षणदोषपरिहार इत्यपि संकटमायुष्मतः। यदाह–"पारिव्राज्यं निवृत्तिश्चेद्-

त्वप्रतिपत्तितः । फलाभावः स एवास्य दोषो निर्दोषतैव न ॥ १ ॥" ननु प्राप्तिः प्रमाणपरिच्छेद एव स चाशास्त्रीयमांसभ-क्षणेऽप्यस्तीति तन्निवृत्तेः फलवत्त्वमनायासं, अन्यथा " मांसमेव प्रतिषिध्यत " इति मंत्रपाठप्रसङ्गात्प्रयाजादौ निवृत्तिरपि सिध्ये-त्तन्निवृत्तेस्तत्र सत्त्वात्, वस्तुतो निषिद्धनिवृत्तिर्न धर्मजननी किं त्वधर्माभावप्रयोजिका, निषिद्धप्रवृत्तेः अधर्महेतुत्वेन तद-भावे तदनुत्पत्तेः । निवृत्तिपदं चात्र पारिभाष्यपरमेव सर्वकर्मन्यासरूपस्य तस्य महाफलत्वोपपत्तेरिति न कोऽप्यत्र दोषः, इति चेत्, तथापि " न मांसभक्षणे दोष " इत्यत्र मांसभक्षणपदस्य शास्त्रीयमांसभक्षणपरत्वे तदनुष्ठत्वे साध्ये भूतप्रवृ-त्तिविषयत्वस्य हेतोरनैकान्तिकत्वात्, प्रवृत्तौ विहितत्वविशेषणप्रक्षेपे च विशेष्यभागस्य वैयर्थ्यात्, फलतः पक्षहेत्वोरविशे-षापत्तेश्च । किं चोत्सर्गतो निषिद्धं पुष्टालम्बनसमावेशेन कथंचित्कदाचित्कस्यचिद्गुणावहमपि स्वरूपतोऽदुष्टतां न परित्यजति । यथा वैद्यकनिषिद्धं स्वेदकर्म ज्वरापनयनाय विधीयमाने । न चात्र किंचिदालम्बनं पश्यामो विनाऽधर्मप्रवृत्तिकुतूहलादि-ति । अधिकं मत्कृतस्याद्वादकल्पलतायाम् ॥ १६ ॥

मद्येऽपि प्रकटो दोषः श्रीह्रीनाशादिरैहिकः । सन्धानजीवसंमिश्रत्वान्महानामुष्मिकोऽपि च ॥ १७ ॥

मद्येऽपीति–मद्येऽपि मधुन्यपि । प्रकटो दोषः । श्रीर्लक्ष्मीः, ह्रीर्लज्जा, आदिना विवेकादिग्रहः, तन्नाशात् । ऐहिक इहैव विपाकप्रदर्शकः । तथाऽऽमुष्मिकोऽपि परभवे विपाकप्रदर्शकोऽपि । महान् दोषः । सन्धानेन जलमिश्रितमधुरूप्यसं-स्थापनेन जीवमिश्रत्वात् जीवसंसक्तिमत्त्वात् । सन्धानवत्यप्यारनालादाविव नात्र दोष इति चेत्, शास्त्रोपनीतदुष्टत्वप्रबोध-नात् । तदाह–" मद्यं पुनः प्रमादाङ्गं तथा सच्चित्तनाशनं । सन्धानदोषवत्तत्र न दोष इति साहसम् ॥ १ ॥ " मद्यस्या-

तिद्धत्वं च पुराणकथास्वपि श्रूयते। तथाहि–" कश्चिदपिस्तपस्तेपे भीत इन्द्रः सुरस्त्रियः। क्षोभाय प्रेषयामास तस्यागत्य च तास्तकम् ॥१॥ विनयेन समाराध्य वरदाभिमुखं स्थितम्। जगुर्मद्यं तथा हिंसां सेवस्वाब्रह्म वेच्छया ॥ २ ॥ स एवं गदितस्ताभिर्द्वयोर्नरकहेतुताम्। आलोच्य मद्यरूपं च शुद्ध(द्धि)कारणपूर्वकम् ॥ ३ ॥ मद्यं प्रपद्य तद्भोगान्नष्टधर्मस्थितिर्मदात्। विदंशार्थमजं हत्वा सर्वमेव चकार सः ॥ ४ ॥ ततश्च भ्रष्टसामर्थ्यः स मृत्वा दुर्गतिं गतः। इत्थं दोषाकरो मद्यं विज्ञेयं धर्मचारिभिः ॥ ५ ॥" इति ॥ १७ ॥

**नियमेन सरागत्वाद्दुष्टं मैथुनमप्यहो। मूलमेतदधर्मस्य निषिद्धं योगिपुङ्गवैः ॥ १८ ॥**

नियमेनेति–नियमेन निश्चयेन। सरागत्वात् " न तं विणा रागदोसेहिं " इति वचनात्। अहो मैथुनमपि दुष्टं। एतदधर्मस्य मूलं " मूलमेयमहम्मस्स " इत्याद्यागमात्। योगिपुंगवैर्भगवद्भिर्निषिद्धं भगवत्यां तस्य महाऽसंयमकारित्वप्रतिपादनात्। तदुक्तं " मेहुणं भंते सेवमाणस्स केरिसए असंजमे कज्जति ? गोयमा। से जहा णामए· केइ पुरिसे वूरनलियं वा रूअनलियं वा तत्तेणं अजकणएणं समभिधंसिज्जा मेहुणं सेवमाणस्स एरिसए असंजमे कज्जइ त्ति " ॥१८॥

**धर्मार्थं पुत्रकामस्य स्वदारेष्वधिकारिणः। ऋतुकाले न तद्दुष्टं क्षुधादाविव भोजनम् ॥ १९ ॥**

धर्मार्थमिति– धर्मार्थं धर्मनिमित्तं। पुत्रकामस्य सुतार्थिनः। "अपुत्रस्य हि धर्मो न भवति " " अपुत्रस्य गतिर्नास्ति " इत्यादिवचनात्। स्वदारेषु स्वकलत्रे। परकलत्रे वेश्यायां च तदधिगमस्यानर्थहेतुत्वात्। अधिकारिणो गृहस्थस्य। ऋतुकाले आर्तवसंभवावसरे, अन्यदा दोषभावात्। यदाह–" ऋतुकाले व्यतिक्रान्ते यस्तु सेवेत मैथुनम्। ब्रह्महत्याफलं

तस्य सूतकं च दिने दिने ॥ १ ॥ " तन्मैथुनं न दुष्टं । भोजनमिव क्षुधादौ । उक्तकारणाश्रितं मैथुनमदुष्टं, गतरागप्रवृत्तित्वात् वेदनादिकारणाश्रितभोजनवदिति प्रयोगः ॥ १९ ॥

नैवमिह स्वरूपेण दुष्टत्वान्निषिद्धापदि । श्रमांसभक्षणस्येवापवादिकनिमित्तत. ॥ २० ॥

नैवमिति—एव यथोक्तं प्राक्, तत्र, इथ पुत्रोत्पत्तिगुणार्थमाश्रयणे । आपवादिकनिमित्ततो विशेषविध्यर्थमायत्वात् । निषिद्धापदि श्रमांसभक्षणस्येव । स्वरूपेण दुष्टत्वात् । अयमभिप्रायः—यद्यप्यपवादेन श्रमांसाशनमिष्यते तथापि तत्स्वरूपेण निर्दोषं न भवति । किं तर्हि, गुणान्तरकारणत्वेन गुणान्तरार्थिना तदाश्रीयते । एवं मैथुन स्वरूपेण सदोषमप्याकौमाराद्यतित्वपालनासहिष्णुर्गुणान्तरापेक्षी समाश्रयते, सर्वथा निर्दोषत्वे त्वाकुमारत्वाद्यतित्वपालनोपदेशोऽनर्थकः स्यात् गार्हस्थ्यत्यागोपदेशश्चेति । धर्मार्थिनोऽपि पुंसो मैथुने मेहनविकारिणः कामोदयस्य तथाभिचारं भपरिग्रहयोश्च दोषयोरवश्यंभावो दृश्यते । न च कामोद्रेकं विना मेहनविकारविशेषः संभवति भयाद्यवस्थायामिवेति । तदिदमुक्त—"नापवादिकमट्स्याप्येकान्तेनेत्यसगतं " ॥ २० ॥

उक्तार्थे मानमाह—

वेदं ह्यधीत्य स्नायाद्यत्तत्रैवाधीत्यसंगतः । व्याख्यातस्तदसामर्थ्यो ब्रूते हीनां गृहस्थताम् ॥ २१ ॥

वेदं हीति—यद्यस्मात् । वेद ऋगादिकं । हिशब्दो वाक्यालंकारार्थः । अधीत्य पठित्वा । स्नायात् कलत्रसंग्रहाय स्नानं

कुयात् । इत्यत्र वेदवाक्ये वेदव्याख्यातृभिरेवाध्याहृत एवकारः । अधीत्य संगतः अधीत्यपदसमभिव्याहृतो व्याख्यातः । वेदानधीत्यैव स्नायात्, न त्वनधीत्येत्यवधारणात्तत्स्माद्वेदमधीत्य स्नायादेवेत्यनवधारणात् । असावर्थो गृहस्थतां कलत्रसंग्रहलक्षणां हीनामौत्सर्गिकमैथुनपरिहारापेक्षया जघन्यामापवादिकीं ब्रूते । तदुक्तं–"वेदं ह्यधीत्य स्नायाद्यदधीत्यैवेति शासितम् । स्नायादेवेति न तु यत्ततो हीनो गृहाश्रमः ॥ १ ॥ तत्र चैतदिति" ॥ २१ ॥

**अदोषकीर्तनादस्य प्रशंसा तदसंगता । विध्युक्तेरिष्टसंसिद्धेर्बहुलोकप्रवृत्तितः ॥ २२ ॥**

अदोषेति–तत्तस्मात् । अस्य मैथुनस्य । अदोषकीर्तनात् दोषाभावप्रतिपादनात् । "न च मैथुन" इति वचनेन प्रशंसाऽसंगताऽन्याय्या । विध्युक्तेराप्तत्वाभिमतकृतप्रशंसया विध्युन्नयनात् । इष्टसंसिद्धेरिष्टसाधनत्वनिश्चयात् । परलोकभयनिवृत्तेर्बहूनां लोकानां तत्र प्रवृत्तितः ॥ २२ ॥

**निवृत्तिः किं च युक्ता नो सावद्यस्येतरस्य वा । आद्ये स्याद्दुष्टता तेषामन्त्ये योगाद्यनादरः ॥२३॥**

निवृत्तिरिति–किं च नोः सावद्यस्य कर्मणो निवृत्तिर्युक्ता धर्मकारिणीतरस्यानवद्यस्य वा ? आद्ये पक्षे तेषां मांसमद्यमैथुनानां दुष्टता स्यात्, अन्त्ये पक्षे योगादेरनादरः स्यात्, अनवद्यस्य मांसादेरिव निवृत्तेः, इष्टत्वादिति न किंचिदेतत् ॥२३॥

**माध्यस्थ्यं केचिदिच्छन्ति गम्यागम्याविवेकतः । तन्नो विपर्ययादेवानर्गलेच्छानिरोधतः ॥ २४ ॥**

माध्यस्थ्यमिति–केचिन्संरूढतंत्रवादिनः । गम्यागम्ययोरविवेकतो व्यवस्थानात् माध्यस्थ्यमिच्छन्ति । अन्यथा गम्यायां

रागेण अगम्यायां च द्वेषादिना माध्यस्थ्यभंगात् । सम्यक्प्रवृत्तौ च न संक्लेश इति । तन्नो नैव युक्त । विपर्ययादेव गम्या गम्यविवेकादेव । अनर्गलाया अमर्यादाया इच्छाया मोहविकाररूपाया निरोधतः । निरुद्धायाश्चेच्छायाः स्वल्पेन्धनाग्नेरिव स्वल्पकालस्थितिकत्वादेशनिवृत्तिगर्भत्वेन च माध्यस्थ्यबीजत्वमिति गम्यागम्यविवेकधर्मादितशुद्धाशयादेव चाचिरेण परममाध्यस्थ्यमप्युपपद्यत इति भावः ॥ २४ ॥

नाद्रियन्ते तप. केचिद्दुःखरूपतयाऽबुधाः ॥ आर्तध्यानादिहेतुत्वात्कर्मोदयसमुद्भवात् ॥ २५ ॥

नेति—केचिदबुधा । तपो दुःखरूपतया नाद्रियन्ते, सर्वेषामेव दुःखिनां तपस्वित्वाविशेषापत्तेः, दुःखविशेषेण च तद्विशेषप्रसङ्गात् । तदाह—"सर्व एव च दुःख्येवं तपस्वी संप्रसज्यते । विशिष्टस्तद्विशेषेण सुधनेन धनी यथा ॥ १ ॥ महातपस्विनश्चैवं तन्नीत्या नारकादयः । शमसौख्यप्रधानत्वाद् योगिनस्त्वतपस्विनः ॥ २ ॥" इति । दुःखरूपस्य चोपवासादिरूपस्य तपसः कायपीडारूपस्यार्तध्यानादिहेतुत्वात् । तदाह—"आहारवर्जिते देहे धातुक्षोभः प्रजायते । तत्र चाधिकसत्त्वोऽपि चित्तभ्रंशं समश्नुते ॥ १ ॥" तथा कर्मोदयात् असातवेदनीयोदयात् समुद्भवादुत्पत्तेः ज्वरादिवत् । ततश्चानर्थहेतुत्वात्त्याज्यमेव न तु लोकरूढ्या कर्तव्यमिति भावः ॥ २५ ॥

यथासमाधानविधेरन्तः सुखनिषेकत. । नैतज्ज्ञानादियोगेन क्षायोपशमिकत्वतः ॥ २६ ॥

यथेति—नैतत्परोक्तं युक्तं । यथासमाधानं मनइन्द्रिययोगानां समाधिमनतिक्रम्य विधेः "सो य तवो कायव्वो जेण

मणो मंगुलं ण चिंतेइ । जेण ण इंदियहाणी जेण य जोगा ण हायंति ॥ १ ॥" इत्यागमेन विधानात् । अन्तर्मनसि ज्ञानारोग्यलाभसंभावनातः । सुखस्य निषेकतो निक्षेपात् । इत्थमपि कदाचित्कस्यचिद्भवन्त्या अपि देहपीडाया आर्तध्यानाद्यहेतुत्वात् बंहीयसा मानससुखेनाल्पीयस्याः कायपीडायाः प्रतिरोधात् । तदुक्तं–"मनइन्द्रिययोगानामहानिश्चोदिता जिनैः । यतोऽत्र तत्कथं न्वस्य युक्त्या(क्ता)स्याद्दुःखरूपता॥१॥यापि चानशनादिभ्यः कायपीडा मता (मनाक्) क्वचित् । व्याधिक्रियासमा सापि नेष्टसिद्ध्यात्र बाधनी ॥ २ ॥ दृष्टा चेष्टार्थसंसिद्धौ कायपीडा ह्यदुःखदा । रत्नादिवणिगादीनां तद्वदत्रापि भाव्यताम् ॥ ३ ॥" इति । तथा ज्ञानादीनां आदिना शमसंवेगसुखब्रह्मगुप्त्यादिग्रहः, योगेन संबन्धेन । क्षायोपशमिकत्वतश्चारित्रमोहनीयकर्मक्षयोपशमसमुद्भवत्वान्न तप औदयिकत्वादनादरणीयं । तदाह— " विशिष्टज्ञानसंवेगशमसारमतस्तपः । क्षायोपशमिकं ज्ञेयमव्याबाधसुखात्मकम् ॥ १ ॥" शमादय एव क्षायोपशमिका न तु तप इति चेन्न गुणसमुदायरूपस्य तपसोऽशविवेचनेन पृथक्करणेऽतिप्रसंगात् । क्रोधादिदोषविरोधेन शमादीनामिव प्रमादादिदोषविरोधेन तपसोऽप्यात्मगुणत्वाच्च । क्वचिदार्तध्यानादिदोषसहचरितत्वदर्शनेन तपसस्त्याज्यत्वे च क्वचिदहंकारादिसहचरितत्वाज्ज्ञानमपि त्याज्यं स्यात् । विवेकिनां ज्ञानं न तथेति चेद्विवेकिनां तपोऽप्येवमिति समानमुत्पश्यामः ॥ २६ ॥

**दयापि लौकिकी नेष्टा षट्कायानवबोधतः । ऐकान्तिकी च नाज्ञानान्निश्चयव्यवहारयोः ॥ २७ ॥**

दयापीति–लौकिकी लोकमात्रप्रसिद्धा अरण्यवासिनां तापसादीनां दयापि षट्कायानवबोधतः पृथिव्यादिजीवापरिज्ञानात् नेष्टा न फलवती, दयाया ज्ञानसाध्यत्वात् " पढमं नाणं तओ दया " इति वचनात् । निश्चयव्यवहारयोरज्ञानादैका-

न्तिकी च स्थूलव्यवहारमात्रानिमत्तलोकोत्तराचा सापि दया नेष्टा, तदनिमित्ताया हिंसाया पचातिप्रसक्तस्मात् तदभाव-स्यानिमानिकत्याशादशदयासज्ञायेऽपि तस्यज्ञानाभावसज्ञायाश्चेति न्यायः ॥ २७ ॥

व्यवहारात्परप्राणरक्षणं यतनावतः । निश्चयान्निर्विकल्पस्वभावप्राणावनं तु सा ॥ २८ ॥

व्यवहारादिति–यतनावतः सूत्रोक्तयतनाशालिनः परेषां प्राणानां रक्षणं व्यवहाराद्दया लोकसमतार्थग्राहित्याद्व्यवहारनयस्य । निश्चयतः परप्राणिसाध्यपरप्राणरक्षणे स्वसाध्यत्वशुभसंकल्पानुविद्धत्वाच्च । निश्चयनयात्तु निर्विकल्पो विकल्पपवननिवृत्त्या स्तिमितोदधिदशास्थानीयो यः स्वस्य भावप्राणः तदवनं तद्रक्षणं सा दया, परप्राणरक्षणावसरेऽपि तदविनाभाविना शुभसंकल्पेनाशुभसंकल्पाद्दुदयौ निमज्जतो विषमतरकूलाज्जैनेय स्वभावभावप्राणेनैव निश्चयेन दयाभ्युपगमात् । अत एवोक्तमागमे–"आया चेव अहिंसा आया हिंसत्ति णिच्छओ एसो । जो होइ अप्पमत्तो अहिंसओ हिंसओ इयरो ॥१॥" नैगमस्य हि जीवेष्वजीवेषु च हिंसा तथा च व्यवहारो भवन्ति–" जीवोऽनेन हिंसितो घटोऽनेन हिंसितः " इति । इत्थं च हिंसाशब्दानुगमाज्जीवेष्वजीवेषु च हिंसेति एवमहिंसाऽपि । संग्रहव्यवहारयोश्च षड्जीवनिकायेषु हिंसा, संग्रहोऽत्र देशग्राही गृह्यते सामान्यरूपस्य नैगमेऽन्तर्भावात्, व्यवहारश्च स्थूलविशेषग्राही लोकव्यवहरणशीलश्च, लोको हि बाहुल्येन षट्सु जीवनिकायेष्वेव हिंसामिच्छतीति । ऋजुसूत्रश्च प्रत्येकं प्रत्येकं जीवहिंसां व्यतिरिक्तामिच्छति । शब्दसमभिरूढैवंभूतनयानां चात्मैव हिंसा निजगुणप्रतिपक्षप्रमादपरिणतः, स्वभावपरिणतश्चात्मैवाहिंसेति नयविभागः ॥ २८ ॥

विशिष्टव्यवहारविधेर्विशेष्यबाधेऽपि विशेषणोपसंक्रमाच्च व्याघात इत्याह–

**यततो जीवरक्षार्था तत्पीडापि न दोषकृत् । अपीडनेऽपि पीडैव भवेदयतनावतः ॥ २९ ॥**

यतत इति–यततः सूत्रोक्तयतनया । जीवरक्षार्था स्वरसतो जीवरक्षोद्देशप्रवृत्ता । तत्पीडापि जीवपीडापि । न दोषकृत् न सांपरायिककर्मबन्धकृत् ।यत उक्तं–" अप्पन्तविसोहीए जीवनिकाएहिं संथडे लोए । देसियमहिंसगत्तं जिणेहिं तेलुक्कदेसीहिं ॥ १ ॥ " तथा–" तस्स असंवेयओ संवेयओ अ जाइसत्ताइं । जोगं पप्प विणस्संति णत्थि हिंसाफलं तस्स ॥ १ ॥" अयतनावतो यतनावर्जितस्य । अपीडनेऽपि दैवात्परप्राणिपीडनाभावेऽपि । तत्त्वतः पीडैव भवति । तदुक्तं–" जे वि ण वाविज्जंति णियमा तेसिं पि हिंसगो सो उ । सावज्जो उ पओगेण सव्वभावेण सो जह्मा ॥ १ ॥ " ॥ २९ ॥

इत्थं परिणामप्राधान्यमेव व्यवस्थितमित्याह–

**रहस्यं परमं साधोः समग्रश्रुतधारिणः । परिणामप्रमाणत्वं निश्चयैकाग्रचेतसः ॥ ३० ॥**

रहस्यमिति–रहस्यं तत्त्वं । परमं सर्वोत्कृष्टं । साधोः समग्रश्रुतधारिणः स्वभ्यस्तगणिपिटकोपनिषदः । परिणामस्य चित्तभावस्य प्रमाणत्वं फलं प्रति स्वातंत्र्यलक्षणं । निश्चये निश्चयनये एकाग्रमव्याक्षिप्तं चेतो यस्य ( तस्य ) ॥ ३० ॥

ननु यद्ययं निश्चयस्तदा किं परप्राणरक्षणया लोकमात्रप्रत्ययप्रयोजनया इत्यत आह–

**तिष्ठतो न शुभो भावो ह्यसदायतनेषु च । गन्तव्यं तत्सदाचारभावाभ्यन्तरवर्त्मना ॥ ३१ ॥**

तिष्ठत इति–असदायतनेषु प्राणव्यपरोपणादिषु । तिष्ठतो हि शुभो भाव एव न भवति । अतः परिणामशुद्ध्यर्थमेव

परमाचरणं साधूनामिति भावः । तदुक्तं—"जो पुण हिंसायतणेसु वट्टइ तस्स णणु परीणामो । दुट्ठो न य त लिंगं होइ विसुद्धस्स जोगस्स ॥ १ ॥ तम्हा सया विसुद्धं परिणामं इच्छया सुविहिएणं । हिंसायतणा सव्वे परिहरियव्वा पयत्तेणं ॥२॥" ये त्वेकान्तनिश्चयमेवाद्रियन्ते ते निश्चयतो निश्चयमेव न जानते, हेतुस्वरूपानुबन्धशुद्धतत्त्वाज्ञानात् । तदाह—"णिच्छय-मवलम्बंता णिच्छयदो णिच्छयं अयाणंता । णासंति चरणकरणं बाहिरकरणालसा केई ॥ १ ॥" तस्मात् सदाचारः परिशुद्धभावपवनो भावश्च शुद्धपरिणामः ताभ्यामन्यन्तरवर्त्मना गन्तव्यं मुमुक्षुणा, तथैव दयाविशेषसिद्धेरिति हितोपदेशः ॥ ३१ ॥

विदित्वा लोकमुत्क्षिप्य लोकसंज्ञां च लभ्यते । इत्थं व्यवस्थितो धर्मः परमानन्दकन्दभूः ॥ ३२ ॥

विदित्वेति—विदित्वा ज्ञात्वा । लोकं स्वेच्छाकल्पिताचारसक्तं जनं । उत्क्षिप्य निराकृत्य । लोकसंज्ञां बहुभिर्लोकैराचीर्ण-मेवास्माकमाचरणीयमित्येवंरूपां च । लभ्यते प्राप्यते । इत्थमुक्तरीत्या । व्यवस्थितः प्रमाणप्रसिद्धः धर्मः । परमानन्द एव कन्दस्तस्य भूरुत्पत्तिस्थानम् ॥ ३२ ॥

॥ इति धर्मव्यवस्थाद्वात्रिंशिका ॥ ७ ॥

## ॥ अथ वादद्वात्रिंशिका ॥ ८ ॥

धर्मव्यवस्थातो वादः प्रादुर्भवतीति तत्स्वरूपमिहोच्यते—

**शुष्कवादो विवादश्च धर्मवादस्तथाऽपरः । कीर्तितस्त्रिविधो वाद इत्येवं तत्त्वदर्शिभिः ॥ १ ॥**

शुष्केति—स्पष्टः ॥ १ ॥

**परानर्थो लघुत्वं वा विजये च पराजये । यत्रोक्तौ सह दुष्टेन शुष्कवादः स कीर्तितः ॥ २ ॥**

परेति—यत्र दुष्टेनात्यन्तमानक्रोधोपेतचित्तेन सहोक्तौ सत्यां । विजये सति । परस्य प्रतिवादिनः परः प्रकृष्टो वाऽनर्थो मरणचित्तनाशवैरानुबन्धसंसारपरिभ्रमणरूपः साध्वतिपातनशासनोच्छेदादिरूपो वा । पराजये च सति लघुत्वं वा "जितो जैनोऽतोऽसारं जैनशासनं" इत्येवमवर्णवादलक्षणं भवति । स शुष्कवादो गलतालुशोषमात्रफलत्वात् कीर्तितः ॥ २ ॥

**छलजातिप्रधानोक्तिर्दुःस्थितेनार्थिना सह । विवादोऽत्रापि विजयालाभो वा विघ्नकारिता ॥ ३ ॥**

छलेति—दुःस्थितेन दरिद्रेण । अर्थिना लाभख्यात्यादिप्रयोजनिना सह । छलमन्याभिप्रायेणोक्तस्य शब्दस्याभिप्रायान्तरेण दूषणं, जातिश्चासदुत्तरं, ताभ्यां प्रधानोक्तिः । विवादो विरुद्धो वादः । अत्रापि विवादेऽपि । विजयालाभः परस्यापि छलजात्याद्युद्भावनपरत्वात् । वा अथवा । विघ्नकारिता अत्यन्ताप्रमादितया छलादिपरिहारेऽपि प्रतिवादिनोऽ

र्थिनः पराभूतस्य लाघवात्यादिविपातप्रौव्यात् । बाधते च परापायनिमित्तत्वात्तपस्विनः परलोकसाधनमिति । नात्रोभयथापि फलमिति भावः ॥ ३ ॥

ज्ञातस्वशास्त्रतत्त्वेन मध्यस्थेनाघभीरुणा । कथाबन्धस्तत्त्वधिया धर्मवादः प्रकीर्तितः ॥ ४ ॥

ज्ञातेति—ज्ञात स्वशास्त्रस्याभ्युपगतदर्शनस्य तत्त्वं येन, एवंभूतो हि स्वदर्शनं दूषितमदूषितं वा जानीते । मध्यस्थेन आत्यन्तिकस्वदर्शनानुरागपरदर्शनद्वेषरहितेन, एवंभूतस्य हि सुप्रतिपाद तत्त्वं भवति । तथा अघभीरुणा पातकभयशीलेन, एवंभूतो ह्यसमंजसपक्षा न भवतीति । सहेति गम्यते । तत्त्वधिया तत्त्वबुद्ध्या । यः कथाबन्धः स धर्मवादो धर्मप्रधानो वादः प्रकीर्तितः ॥ ४ ॥

वादिनो धर्मबोधादि विजयेऽस्य महत्फलम् । आत्मनो मोहनाशश्च प्रकटस्तत्पराजये ॥ ५ ॥

वादिन इति—वादिनो विजये सति । अस्य प्रागुक्तविशेषणविशिष्टस्य प्रतिवादिनो धर्मः श्रुतचारित्रलक्षणस्तस्य बोधः प्रतिपत्तिस्तदादि । आदिनाऽद्वेषपक्षपातावर्णवादादिग्रहः । महदुत्कृष्टं फलं भवति । ततः प्रतिवादिनः सकाशात् पराजये चात्मनोऽधिकृतवादिनो मोहस्यातत्त्वादौ तत्त्वाध्यवसायलक्षणस्य नाशश्च प्रकट इत्युभयथापि फलवानयमिति भावः ॥५॥

अयमेव विधेयस्तत्तत्त्वज्ञेन तपस्विना । देशाद्यपेक्ष्यान्योऽपि विज्ञाय गुरुलाघवम् ॥ ६ ॥

अयमेवेति—तत्तस्मात् तत्त्वज्ञेन तपस्विना । अयमेव धर्मवाद एव विधेयः । अपवादमाह—देशो नगरग्रामजनपदादिः,

आदिना कालराजसभ्यप्रतिवाद्यादिग्रहः, तदपेक्षया तदाश्रयणेन। गुरुलाघवं दोषगुणयोरल्पबहुत्वं विज्ञाय। अन्योऽपि विवादः कार्यः ॥ ६ ॥

**अत्र ज्ञातं हि भगवान् यत्स नाभाव्यपर्षदि। दिदेश धर्ममुचिते देशेऽन्यत्र दिदेश च ॥ ७ ॥**

अत्रेति–अत्र देशाद्यपेक्षायां ज्ञातमुदाहरणं हि भगवान् श्रीवर्धमानस्वामी। यत् स न अभाव्यपर्षदि प्रथमसमवसरणेऽयोग्यसदसि धर्मं दिदेश। अन्यत्र चोचिते प्रतिबोध्यजनकलिते देशे धर्मं दिदेश ॥ ७ ॥

**विषयो धर्मवादस्य धर्मसाधनलक्षणः। स्वतंत्रसिद्धः प्रकृतोपयुक्तोऽसद्ग्रहव्यये ॥ ८ ॥**

विषय इति–धर्मवादस्य विषयो धर्मसाधनलक्षणः स्वतंत्रसिद्धः। सांख्यादीनां षष्टितंत्रादिशास्त्रसिद्धः। असद्ग्रहस्याशोभनपक्षपातस्य व्यये सति, प्रकृतोपयुक्तः प्रस्तुतमोक्षसाधकः। धर्मवादेनैवासद्ग्रहनिवृत्त्या मार्गाभिमुखभावादिति भावः ॥ ८ ॥

**यथाहिंसादयः पञ्च व्रतधर्मयमादिभिः। पदैः कुशलधर्माद्यैः कथ्यन्ते स्वस्वदर्शने ॥ ९ ॥**

यथेति–यथाऽहिंसादयः, आदिना सूनृतास्तेयब्रह्मापरिग्रहपरिग्रहः, पंच। स्वस्वदर्शने व्रतधर्मयमादिभिः, तथा कुशलधर्माद्यैः पदैः कथ्यन्ते। तत्र महाव्रतपदेनैतानि जैनैरभिधीयन्ते। व्रतपदेन च भागवतैः, यदाहुस्ते–"पंच व्रतानि पंचोपव्रतानि," व्रतानि यमाः, उपव्रतानि नियमाः" इति। धर्मपदेन तु पाशुपतैः, यतस्तेदश धर्मानाहुः–"अहिंसा सत्यव-

चनमस्तैन्यं चाप्यकल्पना । ब्रह्मचर्यं तथाऽक्रोधो ह्यार्जवं शौचमेव च ॥ १॥ सन्तोषो गुरुशुश्रूषा इत्येते दश कीर्तिताः ।" सांख्यैश्चापि समतानुसारिभिश्च यमपदेनाभिधीयन्ते–"पंच यमाः पंच नियमाः" तत्र यमाः–"अहिंसा सत्यमस्तैन्य ब्रह्मचर्यमव्यवहारश्चेति," नियमास्तु–"अक्रोधो गुरुशुश्रूषा शौचमाहारलाघवम् । अप्रमादश्चेति" । कुशलधर्मपदेन च बौद्धैरभिधीयन्ते, यदाहुस्ते–"दशाकुशलानि, तद्यथा–हिंसा स्तेयान्यथाकाम पैशुन्यं परुषानृतम् । संभिन्नालापं व्यापादमभिध्या दृग्विपर्ययम् ॥ १ ॥ पापकर्मेति दशधा कायवाङ्मानसैस्त्यजेत् । इति" अत्र चान्यथाकामः पारदार्यं, संभिन्नालापोऽसंबद्धभाषणं, व्यापादः परपीडाचिन्तनं, अभिध्या धनादिष्वसन्तोषः परिग्रह इति यावत्, दृग्विपर्ययो मिथ्याभिनिवेशः, एतद्विपर्ययाश्च दश कुशलधर्मा भवन्तीति । आदिपदाच्च ब्रह्मादिपक्षग्रहः । एतान्येव वैदिकादिभिर्ब्रह्मादिपदेनाभिधीयन्ते इति ॥ ९ ॥

मुख्यवृत्त्या क युज्यन्ते न वैतानि क दर्शने । विचार्यमेतन्निपुणैरव्यग्रेणान्तरात्मना ॥ १० ॥

मुख्येति–एतानि अहिंसादीनि क दर्शने युज्यन्ते, क वा दर्शने न युज्यन्ते । एतन्मुख्यवृत्त्याऽनुपचारेण निपुणैर्धर्मविचारनिष्णातैर्विचारणीयं । नान्यद्वस्त्वन्तरविचारणे, धर्मवादाभावप्रसंगात् । अव्यग्रेण स्वशास्त्रनीतिप्रणिधानादव्याक्षिप्तेन । अन्तरात्मना मनसा । शास्त्रान्तरनीत्या लोकशास्त्रोक्तप्रकाराणामहिंसादीनामप्रयुज्यमानता स्फुटमेव प्रतीयत इति स्वतंत्रनीतिप्रणिधानेनैव विषयव्यवस्था विचार्यमाणा फलवतीति भावः ॥ १० ॥

ननु स्वतंत्रनीत्यापि धर्मसाधनविचारणे प्रमाणप्रमेयादिलक्षणप्रणयने परतंत्रादिविचारणमप्यावश्यकमिति व्यग्रताऽनुपरमे कदा प्रस्तुतविचारावसर इत्यत आह–

**प्रमाणलक्षणादेस्तु नोपयोगोऽत्र कश्चन । तन्निश्चयेऽनवस्थानादन्यथार्थस्थितेर्यतः ॥ ११ ॥**

प्रमाणेति–प्रमाणं प्रत्यक्षादि तस्य लक्षणं स्वपराभासिज्ञानत्वादि तदादेः । आदिना प्रमेयलक्षणादिग्रहः । तस्य त्वधर्मसाधनविषये कश्चनोपयोगो नास्ति । अयमभिप्रायः–प्रमाणलक्षणेन निश्चितमेव प्रमाणमर्थग्राहकमिति तदुपयोग इति, न चायं युक्तः, यतस्तल्लक्षणं निश्चितमनिश्चितं वा स्यात् ? । आद्ये किमधिकृतप्रमाणेन प्रमाणान्तरेण वा ? । यदि तेनैव तदेतरेतराश्रयः, अधिकृतप्रमाणाल्लक्षणनिश्चयः तन्निश्चयाच्चाधिकृतप्रमाणनिश्चय इति । यदि च प्रमाणान्तरेण तन्निश्चयस्तदाह–तन्निश्चये प्रमाणान्तरेण तल्लक्षणनिश्चयेऽनवस्थानात्तन्निश्चायकप्रमाणेऽपि प्रमाणान्तरापेक्षाऽविरामात् । यदि च प्रमाणान्तरेणानिश्चितमेव लक्षणं प्रमाणनिश्चये उपयुज्यते इतीष्यते, तदाह–अन्यथाऽन्यतोऽनिश्चितस्य लक्षणस्योपयोगेऽर्थस्थितेरन्यतोऽनिश्चितेनैव प्रमाणेनार्थसिद्धेः । तदुक्तं हरिभद्राचार्येण–"प्रमाणेन विनिश्चित्य तदुच्येत न वा ननु । अलक्षितात्कथं युक्ता न्यायतोऽस्य विनिश्चितिः ॥ १ ॥ सत्यां चास्यां तदुक्त्या किं तद्वद्विषयनिश्चितेः । तत एवाविनिश्चित्य तस्योक्तिर्ध्यान्ध्यमेव हि ॥ २ ॥ " इत्थमत्र प्रमाणलक्षणादेरनुपयोगः समर्थितः । इममेव सिद्धसेनसंमत्या दृढयन्नाह–यत इति, यत आह वादी सिद्धसेन इत्यर्थः ॥ ११ ॥

**प्रसिद्धानि प्रमाणानि व्यवहारश्च तत्कृतः । प्रमाणलक्षणस्योक्तौ ज्ञायते न प्रयोजनम् ॥ १२ ॥**

प्रसिद्धानीति–प्रसिद्धानि लोके स्वत एव रूढानि, न तु प्रमाणलक्षणप्रणेतृवचनप्रसाधनीयानि । प्रमाणानि प्रत्यक्षादीनि । तथा व्यवहरणं व्यवहारः स्नानपानदहनपचनादिका क्रिया । चशब्दः प्रसिद्धत्वसमुच्चयार्थः । तत्कृतः प्रमाणप्रसाध्यः प्रमाणलक्षणामवीणानामपि गोपालबालाबलादीनां तथाव्यवहारदर्शनात् । ततश्च प्रमाणलक्षणस्याविसंवादिज्ञानं प्रमाणमित्यादेरुक्तौ प्रतिपादने । ज्ञायते ह्युपलभ्यते न नैव प्रयोजनं फलं वर्तते । नेति वक्तव्ये 'ज्ञायते नेति' यदुक्तमाचार्येण तद्विरचनपारुष्यपरिहारार्थं । यस्त्वत्रायमुदयनस्योपालम्भ - ये तु प्रमाणमेव सर्वस्य व्यवस्थापकं, न तु लक्षणं, तदपेक्षायामनवस्थेत्याहुस्तेषां "निन्दामि च पिबामि चेति" न्यायापातः । यतो व्याप्त्यतिव्याप्तिपरिहारेण तत्तदर्थव्यवस्थापकं तत्तद्व्यवहारव्यवस्थापकं च प्रमाणमुपाददते तदेव तु लक्षणं । अनुवादः स इति चेदसाकमप्यनुवाद एव, न काल्पनिकमिह किंचिदुच्यते । न चानवस्था वैद्यके रोगादिलक्षणवद्व्याकरणादौ शब्दादिवच्च व्यवस्थोपपत्तेः, तत्रापि संमुग्धव्यवहारमाश्रित्य लक्षणैरेव व्युत्पादनादिति । स त्वत्र न शोभते, यतो वय प्रमाणस्यार्थव्यवस्थापकत्वे व्यवहारव्यवस्थापकत्वे वा लक्षणं न प्रयोजकमिति ब्रूमो न तु सर्वत्रैव तदप्रयोजकमिति । समानासमानजातीयव्यवच्छेदस्य तदर्थस्य तत्र तत्र व्यवस्थितत्वात् । सामान्यतो व्युत्पन्नस्य तच्छास्त्रादधिकृतविशेषप्रतीतिपर्यवसानेनानवस्थाभावात् केवलं केवलव्यतिरेक्येव लक्षणमिति नादरः, प्रमेयत्वादेरपि पदार्थलक्षणत्वव्यवस्थितेः इत्यन्यत्र विस्तरः । वस्तुतो धर्मवादे लक्षणस्य नोपयोगः, स्वतन्त्रसिद्धाहिंसादीनां तादृशधर्मान्तरसंशयजिज्ञासाविचारद्वारकतत्त्वज्ञानेनासम्प्रदनिवृत्तेः । अन्यथैवोपपत्तेरितरजिज्ञास्येन ज्ञानस्य तत्साध्यस्यात्रानुपयोगात्संमुग्धज्ञानेनैव कार्यसिद्धिरित्यत्र तात्पर्यम् ॥ १२ ॥

नन्वर्थनिश्चयार्थमेव लक्षणोपयोगः, तेन ज्ञानप्रामाण्यसंशयनिवृत्तौ तन्मूलार्थसंशयनिवृत्त्याऽर्थनिश्चयसिद्धेः इत्याशंकायामाह—

**न चार्थसंशयापत्तिः प्रमाणेऽतत्त्वशंकया। तत्राप्येतदविच्छेदाद्धेत्वभावस्य साम्यतः ॥ १३ ॥**

न चेति—न च प्रमाणेऽतत्त्वशंकयाऽप्रामाण्यशंकया अर्थसंशयापत्तिः। लक्षणं विनेति गम्यं। तत्रापि प्रमाणलक्षणेऽपि। एतदविच्छेदादप्रामाण्यशंकायाः स्वरसोत्थापिताया अनुपरमात्। हेत्वभावस्य शंकाकारणाभावस्य। साम्यतः तुल्यत्वात्। प्रमाणलक्षण इव प्रमाणेऽपि शंकाकारणाभावे शंकाया अनुत्पत्तेरित्यर्थः ॥ १३ ॥

अहिंसादिधर्मसाधनग्राहकं हि प्रमाणं परेषां षष्टितंत्रादिकं स्वस्वशास्त्रमेव तत्र चाहिंसादिग्रहणांशे सर्वतंत्रप्रसिद्धत्वेन न कदापि संशयस्तद्विशेषांशे तु भवन्नयमनुकूल एव, न चैकांशे शंकितप्रामाण्यज्ञानमितरांशस्याप्यनिश्चायकमिति युक्तं, घट-पटसमूहालंबनात् घटांशे प्रामाण्यसंशये पटस्याप्यनिश्चयापत्तेरित्याशयवानाह—

**अर्थयाथात्म्यशंका तु तत्त्वज्ञानोपयोगिनी। शुद्धार्थस्थापकत्वं च तंत्रं सद्दर्शनग्रहे ॥ १४ ॥**

अर्थेति—अर्थस्याहिंसादेर्याथात्म्यस्य स्वतंत्रप्रसिद्धनित्याश्रयवृत्तित्वानित्याश्रयवृत्तित्वादेः शंका तु विचारप्रवृत्त्या तत्त्व-ज्ञानोपयोगिनी। ततश्च प्रतीयमानं शुद्धार्थस्य सर्वथा शुद्धविषयस्य व्यवस्थापकत्वं( स्थापकत्वं) प्रमितिजनकत्वं। सद्दर्शनस्य शोभनागमस्य ग्रहे स्वीकारे। तंत्रं प्रयोजकं। तद्ग्रहे च तत एव धर्मसाधनोपलंभात् किं लक्षणेनेति भावः ॥ १४ ॥

॥ ४९ ॥

तत्रात्मा नित्य एवेति येषामेकान्तदर्शनम् । हिंसादयः कथं तेषां कथमप्यात्मनोऽव्ययात् ॥ १५ ॥

तत्रेति–तत्र धर्मसाधने विचारणीये । आत्मा नित्य एव इति येषां सांख्यादीनामेकान्तदर्शनं । तेषां हिंसादयः कथं मुख्यवृत्त्या युज्यन्त इति शेषः । कथमपि स्वकृतशरीरावयवैकपरिणामेनापि आत्मनोऽव्ययादर्शनात् । न हि बुद्धिगतदुःखोत्पादरूपा हिंसा सांख्यानामात्मनि प्रतिबिम्बोदयेनानुपचरिता संभवति । न वा नैयायिकानां स्वभिन्नदुःखरूपगुणरूपा सा, आत्मनि समवायेन प्रतिबिम्बसमवाययोरेव काल्पनिकत्वात् । न च कथमपि स्वपर्यायविनाशाभावे हिंसाव्यवहारः कल्पनाशतेनाप्युपपादयितुं शक्यत इति । तदिदमाह–"निष्क्रियोऽसौ ततो हन्ति हन्यते वा न जातुचित् । कंचित्केनचिदित्येवं न हिंसाऽस्योपपद्यते" ॥ १५ ॥

मनोयोगविशेषस्य ध्वंसो मरणमात्मनः । हिंसा तच्चेन्न तत्त्वस्य सिद्धेरर्थसमाजतः ॥ १६ ॥

मन इति–मनोयोगविशेषस्य स्मृत्यजनकज्ञानजनकमनःसंयोगस्य ध्वंस आत्मनो मरणं तद्धिंसा । इयं चात्मनोऽव्ययेऽप्युपपत्स्यते । अविशाक्षिस्यादेव हि शरीरसंरूनादात्मापि खण्डित इति लोकानामभिमानो नायं विशेषदर्शिभिरादरणीय इति चेन्न, तच्चस्योक्तध्वंसत्वस्य अर्थसमाजतोऽर्थवशादेव सिद्धेः । स्मृतिहेत्वभावादेव स्मृत्यजननाच्चरममनःसंयोगस्यापि संयोगान्तरवदेव नाशात् । तथा च नेयं हिंसा केनचित् कृता स्यादिति सुस्थितमेव सकलं जगत् स्यात् ॥ १६ ॥

आत्मन एकान्तनित्यत्वाभ्युपगमे दूषणान्तरमाह–

**शरीरेणापि संबन्धो नित्यत्वेऽस्य न संभवी । विभुत्वेन च संसारः कल्पितः स्यादसंशयम् ॥ १७ ॥**

शरीरेणापीति–नित्यत्वे सति अस्य आत्मनः शरीरेणापि समं संबन्धो न संभवी । नित्यस्य हि शरीरसंबन्धः पूर्वरूपस्य त्यागे वा स्यादत्यागे वा ? आद्ये स्वभावत्यागस्यानित्यलक्षणत्वान्नित्यत्वहानिः । अन्त्ये च पूर्वस्वभावविरोधाच्छरीरासंबन्ध एवेति । विभुत्वेन चाभ्युपगम्यमानेन हेतुना संसारोऽसंशयं कल्पितः स्यात्, सर्वगतस्य परलोकगमनरूपमुख्यसंसारपदार्थानुपपत्तेः । अथवा विभुत्वे च संसारो न स्यात्, स्याच्चेदसंशयं कल्पितः स्यादिति योजनीयं । तदिदमुक्तं-"शरीरेणापि संबन्धो नात एवास्य संगतः । तथा सर्वगतत्वाच्च संसारश्चाप्यकल्पितः ॥ १ ॥" इति ॥ १७ ॥

परः शंकते–

**अदृष्टाद्देहसंयोगः स्यादन्यतरकर्मजः । इत्थं जन्मोपपत्तिश्च न तद्योगाविवेचनात् ॥ १८ ॥**

अदृष्टादिति–अदृष्टात् प्राग्जन्मकृतकर्मणो लब्धवृत्तिकात् । देहसंयोगोऽन्यतरकर्मजः स्यात् । आत्मनो विभुत्वेनोभयकर्माभावेऽपि देहस्य मूर्तत्वेनान्यतरकर्मसंभवादिति । इत्थं जन्मनः संसारस्योपपत्तिः ऊर्ध्वलोकादौ शरीरसंबन्धादेवोर्ध्वलोकगमनादिव्यपदेशोपपत्तेः । इत्थमपि विभुत्वाव्ययात् पूर्वशरीरत्यागोत्तरशरीरोपादानैकस्वभावत्वाच्च न नित्यत्वहानिः, एकत्र ज्ञाने नीलपीतोभयाकारवदेकत्रोक्तैकस्वाभाव्याविरोधात् कार्यक्रमस्य च सामग्र्यायत्तत्वादित्याशयः । सिद्धान्तयति–न तद्योगस्य शरीरसंयोगस्याविवेचनात् । तथाहि–किमयमात्मशरीरयोर्भिन्नो वा स्यादभिन्नो वा ? आद्ये तत्संबन्धभेदादिकल्पनायामनवस्था । अन्त्ये च धर्मिव्यातिरिक्तसंबन्धाभावेऽतिप्रसंग इति ॥ १८ ॥

आत्मक्रियां विना च स्यान्मिताणुमहणं कथम् । कथं संयोगभेदादिकल्पना चापि युज्यते ॥ १९ ॥

आत्मेति–आत्मनो व्यापकस्य प्रदेशैरेकदेशावगाढपुद्गलग्रहणव्यापाररूपां क्रियां विना च । मिताणूनां नियतशरीरारम्भकपरमाणूनां ग्रहणं कथं स्यात् ? । संबन्धस्याविशेषे हि लोकस्थाः सर्व एव ते गृह्येरन् न वा केचिदपि अविशेषात् । अदृष्टविशेषान्मिताणुग्रहोपपत्तिर्भविष्यतीति चेन्न, अदृष्टे पुण्यपापरूपे सांकर्याज्जातिरूपस्य विशेषस्यासिद्धेः । मिताणुग्रहार्थस्य विशेषस्य जातिरूपस्यादृष्टकल्पनापेक्षया क्रियाख्यस्वरूपस्यात्मन्येव कल्पयितुं युक्तत्वात् । तत्संकोचविकोचादिकल्पनागौरवस्योत्तरकालिकत्वेनाबाधकत्वाच्छरीरावच्छिन्नपरिणामानुभवस्य सार्वजनीनत्वेन प्रामाणिकत्वाच्चेति भावः । तथा आत्मनः क्रियां विना नियतशरीरानुप्रवेशानभ्युपगमे सर्वेषां शरीराणां संयोगाविशेषेण सर्वभोगावच्छेदकत्वापत्तिर्भिया तदात्मभोगे तदीयादृष्टविशेषप्रयोज्यसंयोगभेदादिकल्पनापि कथं युज्यते ? अनन्तसंयोगभेदादिकल्पने गौरवात् । अवच्छेदकतया तदात्मवृत्तिजन्यगुणस्यावच्छिन्नं प्रति तादात्म्येन तच्छरीरत्वेन हेतुत्वे तु वाय्वादिभेदेन शरीरभेदाद्व्यभिचारः । अवच्छिन्नत्वसंबन्धेन तद्व्यक्तिविशिष्टे तद्व्यक्तित्वेन हेतुत्वे तु सुतरां गौरवमिति न किंचिदेतदधिकं खतायाम् ॥ १९ ॥

अनित्यैकान्तपक्षेऽपि हिंसादीनामसंभवः । नाशहेतोरयोगेन क्षणिकत्वस्य साधनात् ॥ २० ॥

अनित्येति–अनित्यैकान्तपक्षेऽपि क्षणिकज्ञानसन्तानरूपात्माभ्युपगमेऽपि हिंसादीनामसंभवो मुख्यवृत्त्याऽयोगः । नाशहेतोरयोगेन क्षयकारणस्यायुज्यमानत्वेन । क्षणिकत्वस्य क्षणक्षयित्वस्य साधनात् । इय हि परेषां व्यवस्था–नाशहेतुनिर्घटा-

देर्नाशस्ततो भिन्नोऽभिन्नो वा विधीयेत ? आद्ये घटादेस्तादवस्थ्यं । अन्त्ये च घटादिरेव कृतः स्यात् इति स्वभावत एवोदयानन्तरं विनाशिनो भावा इति । इत्थं च हिंसा न केनचित्क्रियत इत्यनुपप्लवं जगत्स्यादिति भावः ॥ २० ॥

ननु जनक एव हिंसकः स्यादतो न दोष इत्यत्र जनकः किं सन्तानस्य क्षणस्य वा इति विकल्प्याद्ये दोषमाह–

**न च सन्तानभेदस्य जनको हिंसको मतः । सांवृतत्वादजन्यत्वाद्भावत्वनियतं हि तत् ॥ २१ ॥**

न चेति–न च सन्तानभेदस्य हिंस्यमानशूकरक्षणसन्तानच्छेदेनोत्पत्स्यमानमनुष्यादिक्षणसन्तानस्य जनको लुब्धकादिर्हिंसको भवेत्, तद्विसदृशसन्तानोत्पादकत्वेनैव तद्धिंसकत्वव्यवहारोपपत्तेरिति वाच्यं, सांवृतत्वात् काल्पनिकत्वात् सन्तानभेदस्य । अजन्यत्वात् लुब्धकाद्यसाध्यत्वात् । तद्धि जन्यत्वं हि भावत्वनियतं सत्त्वव्याप्तं, सांवृतं च खरविषाणादिवदसदेवेति भावः ॥ २१ ॥

द्वितीये त्वाह–

**नरादिक्षणहेतुश्च शूकरादेर्न हिंसकः । शूकरान्त्यक्षणेनैव व्यभिचारप्रसंगतः ॥ २२ ॥**

नरादीति–नरादिक्षणहेतुश्च लुब्धकादिः शूकरादेर्हिंसको न भवति, शूकरान्त्यक्षणेनैव व्यभिचारस्य हिंसकत्वातिव्याप्तिलक्षणस्य प्रसंगतः । म्रियमाणशूकरान्त्यक्षणोऽपि ह्युपादानभावेन नरादिक्षणहेतुरिति लुब्धकवत् सोपि स्वहिंसकः स्यादितिभावः ॥ २२ ॥

॥ ५१ ॥

इष्टापत्तौ व्यभिचारपरिहारे स्याह—

अनन्तरक्षणोत्पादे बुद्धलुब्धकयोस्तुला । नैवं तद्विरतिः क्वापि ततः शास्त्राद्यसंगतिः ॥ २३ ॥

अनन्तरेति—अनन्तरक्षणोत्पादे स्वाव्यवहितोत्तरविसदृशक्षणोत्पादे हिंसकत्वप्रयोजकेऽभ्युपगम्यमाने इति गम्यं । बुद्धलुब्धकयोस्तुला साम्यमापद्येत, बुद्धलुब्धकयोरनन्तरक्षणोत्पादकत्वाविशेषात् । एवमुक्तप्रकारेण तद्विरतिर्हिंसाविरतिः क्वापि न स्यात् । ततः शास्त्रादीनामहिंसाप्रतिपादकशास्त्रादीनामसंगतिः स्यात् । न चैतदिष्टं परस्य—"सत्त्वेऽस्य संति वैरानां सर्वेसिं जीवितं पियं । अत्तानं उपमं कत्वा नेव हने न घातये ॥ १ ॥" इत्याद्यागमस्य परैरभ्युपगमात् ॥ २३ ॥

घटन्ते न विनाऽहिंसां सत्यादीन्यपि तत्त्वतः । एतस्या वृत्तिभूतानि तानि यद्भगवाञ्जगौ ॥ २४ ॥

घटन्त इति—अहिंसां विना सत्यादीन्यपि न घटन्ते । यत एतस्या अहिंसाया वृत्तिभूतानि तानि सत्यादीनि भगवान् जगौ सर्वज्ञो गदितवान् । न च सत्यादिपालनीयान्नाये वृत्तौ विद्वान् यतत इति । ननु हन्मीति संकल्प एव हिंसा, तद्योगादेव च हिंसकत्वं, तदभावाच्चाहिंसायास्ततश्च तद्वृत्तिभूतसत्यादीनां नानुपपत्तिरिति चेन्न, हन्मीति संकल्पक्षणस्यैव सर्वथाऽनन्वये कालान्तरभाविफलजनकत्वानुपपत्तेः, कथंचिदन्वये चास्मत्सिद्धान्तप्रवेशापाताच्चेत्यधिकमन्यत्र ॥२४॥

मौनीन्द्रे च प्रवचने युज्यते सर्वमेव हि । नित्यानित्ये स्फुटं देहाद्भिन्नाभिन्ने तथात्मनि ॥ २५ ॥

मौनीन्द्र इति—मौनीन्द्रे वीतरागप्रतिपादिते च वचने सर्वमेव हि हिंसाहिंसादिकं युज्यते । नित्यानित्ये तथा स्फुटं

प्रत्यक्षं देहाद्भिन्नाभिन्ने आत्मनि सति । तथाहि—आत्मत्वेन नित्यत्वमात्मनः प्रतीयते, अन्यथा परलोकाद्यभावप्रसंगात् । मनुष्यादिना चानित्यत्वं, अन्यथा मनुष्यादिभावानुच्छेदप्रसंगात् । धर्मिग्राहकमानेन तत्र नित्यत्वसिद्धावनित्यत्वधियः शरीरादिविषयकत्वमेवास्त्विति चेन्न, धर्मिग्राहकमानेन त्रैलक्षण्यकलितस्यैव तस्य सिद्धेर्घटाद्युपादानस्येव ज्ञानाद्युपादानस्य पूर्वोत्तरपर्यायनाशोत्पादान्वितध्रुवत्वनियतत्वात् । यथा च भ्रान्तत्वाभ्रान्तत्वे परमार्थसंव्यवहारापेक्षया परेषां न ज्ञानस्य विरुद्धे, यथा चैकत्र संयोगतदभावौ, तथा द्रव्यतो नित्यत्वं पर्यायतश्चानित्यत्वं नास्माकं विरुद्धं । अनपेक्षितविशिष्टरूपं हि द्रव्यं, अपेक्षितविशिष्टरूपं च पर्याय इति । तथा शरीरजीवयोर्मूर्तामूर्तत्वाभ्यां भेदः, देहकंटकादिस्पर्शे वेदनोत्पत्तेश्चाभेद इति । तदुक्तं—"जीवसरीराणं पि हु भेआभेओ तहोवलंभाओ । मुत्तामुत्तत्तणओ छिक्कंमि य वेयणाओ अ ॥ १ ॥" न चेदेवं ब्राह्मणो नष्टो ब्राह्मणो जानातीत्यादिव्यवहारानुपपत्तिः विना ब्राह्मणस्य व्यासज्यवृत्तित्वमित्यादिकमुपपादितमन्यत्र ॥ २५ ॥

**पीडाकर्तृत्वतो देहव्यापत्त्या दुष्टभावतः । त्रिधा हिंसागमप्रोक्ता न हीत्थमपहेतुका ॥ २६ ॥**

पीडेति—पीडाकर्तृत्वतः पीडायां स्वतंत्रव्यापृतत्वात् । देहस्य व्यापत्तिर्विनाशस्तया कथंचित्तद्व्यापत्तिसिद्धिरिति भावः । दुष्टभावतो हन्मीति संक्लेशात् । त्रिधा जिनप्रोक्ता हिंसा । इत्थमुक्तरूपात्माभ्युपगमे । न ह्यपहेतुका हेतुरहिता भवति ॥ २६ ॥

अत्रैव प्रकारान्तरेणासंगतत्वं दूषयितुमुपन्यस्यति–

**हन्तुर्जन्मिति को दोषो हिंसनीयस्य कर्मणि । प्रसक्तिस्तदभावे चान्यत्रापीति मुधा वचः ॥ २७ ॥**

हन्तुरिति–हिंसनीयस्य कर्मणि हिंसानिमित्तादृष्टे । जाग्रति बन्धवृत्तिके सति । हन्तुः को दोषः ? स्वकर्मणैव प्राणिनो हतत्वात्, तत्कर्मप्रेरितस्य च हन्तुरस्वतंत्रत्वेनादुष्टत्वव्यवहारात् । तदभावे च हिंसनीयकर्मविपाकाभावे च । अन्यत्राप्यहिंसनीयेऽपि प्राणिनि प्रसक्तिः हिंसापत्तिरिति हिंसाऽसंगतत्वप्रतिपादकं वचो मुधाऽनर्थकम् ॥ २७ ॥

**हिंस्यकर्मविपाके यद्दुष्टाशयनिमित्तता । हिंसकत्वं न तेनेदं वैद्यस्य स्याद्रिपोरिव ॥ २८ ॥**

हिंस्येति–हिंस्यस्य प्राणिनः कर्मविपाके सति । यद्यस्मात् । दुष्टाशयेन हन्मीति संक्लेशेन निमित्तता प्रधानहेतुकर्मोदय साध्या हिंसां प्रति निमित्तभावो हिंसकत्वं । तेन कारणेनेदं हिंसकत्वं रिपोरिव वैद्यस्य न स्यात्, तस्य हिंसां प्रति निमित्तभावेऽपि दुष्टाशयाभावत्वात् । तदिदमाह–"हिंस्यकर्मविपाकेऽपि निमित्तत्वनियोगतः । हिंसकस्य भवेदेषा दुष्टा दुष्टानुबन्धतः ॥ १ ॥" परप्रेरितस्यापि चाभिमरादेरिव दुष्टत्वं व्यपदिश्यत एव । हिंस्यकर्मनिर्जरणसहायत्वेऽपि च तथाविधाशयाभावाश्च हिंसकस्य वैयावृत्त्यकरत्वव्यपदेश इति द्रष्टव्यम् ॥ २८ ॥

**इत्थं सदुपदेशादेस्तन्निवृत्तिरपि स्फुटा । सोपक्रमस्य पापस्य नाशात्स्वाशयवृद्धितः ॥ २९ ॥**

इत्थमिति–इत्थं परिणामिन्यात्मनि हिंसोपपत्तौ । सतां ज्ञानगुरूणामुपदेशादेः । आदिना अभ्युत्थानादिपरिग्रह ।

तदाह—"अणुव्वाणे विणए परक्कमे साहुसेवणाए य । संमदंसणलंभो विरयाविरईइ विरईए ॥ १ ॥" सोपक्रमस्यापवर्तनीयस्य । पापस्य चारित्रमोहनीयस्य नाशात् । तन्निवृत्तिरपि हिंसानिवृत्तिरपि । स्फुटा प्रकटा । स्वाशयस्य शुभाशयस्य न कमपि हन्मीत्याकारस्य वृद्धितोऽनुबन्धात् ॥ २९ ॥

**तथारुचिप्रवृत्त्या च व्यज्यते कर्म तादृशम् । संशयं जानता ज्ञातः संसार इति हि श्रुतिः ॥ ३० ॥**

तथारुचीति—तथारुच्या सदाचारश्रद्धया प्रवृत्त्या च । तादृशं स्वप्रयत्नोपक्रमणीयं कर्म व्यज्यते । प्रवृत्तिरेवोपक्रमणीयकर्मानिश्चयादुपायसंशये कथं स्यादिति चेदर्थानर्थसंशययोः प्रवृत्तिनिवृत्त्यंगत्वादित्याशयवानाह—संशयमर्थानर्थगतं जानता हेयोपादेयनिवृत्तिप्रवृत्तिभ्यां परमार्थतः संसारो ज्ञात इति हि स्थितिः प्रेक्षावतां मर्यादा । तथा चाचारसूत्रं—" संसयं परिजाणतो संसारे परिन्नाते भवति, संसयं अपरिजाणतो संसारे अपरिन्नाते भवतीति " ॥ ३० ॥

**अपवर्गतरोर्बीजं मुख्याहिंसेयमुच्यते । सत्यादीनि व्रतान्यत्र जायन्ते पल्लवा नवाः ॥ ३१ ॥**

अपवर्गेति—स्पष्टः ॥ ३१ ॥

**विषयो धर्मवादस्य निरस्य मतिकर्दमम् । संशोध्यः स्वाशयादित्थं परमानन्दमिच्छता ॥ ३२ ॥**

विषय इति—मतिकर्दममादावेव प्रमाणलक्षणप्रणयनादिप्रपंचम् ॥ ३२ ॥

॥ इति वादद्वात्रिंशिका ॥ ८ ॥

## ॥ अथ कथाद्वात्रिंशिका ॥ ए ॥

वादनिरूपणानन्तर तत्सजातीया कथा निरूप्यते–

अर्थकामकथा धर्मकथा मिश्रकथा तथा । कथा चतुर्विधा तत्र प्रथमा यत्र वर्ण्यते ॥ १ ॥

अर्थेति–अर्थकथा कामकथा धर्मकथा तथा मिश्रकथा एवं चतुर्विधा कथा । तत्र प्रथमाऽर्थकथा सा । यत्र यस्या वर्ण्यते प्रतिपाद्यते ॥ १ ॥

विद्या शिल्पमुपायश्चानिर्वेदश्चापि सञ्चयः । दक्षत्वं सामभेदश्च दंडो दानं च यत्नतः ॥ २ ॥

विद्येति–विद्यादयोऽर्थोपाया यत्र वर्ण्यन्ते साऽर्थकथेति भावः ॥ २ ॥

रूपं वयश्च वेषश्च दाक्षिण्यं चापि शिक्षितम् । दृष्टं श्रुतं चानुभूतं द्वितीयायां च संस्तवः ॥ ३ ॥

रूपमिति–रूपं सुन्दरं, वयश्चोदग्रं, वेषश्चोज्ज्वलः, दाक्षिण्यं च मार्दवं, शिक्षितमपि विषयेषु, दृष्टमद्भुतदर्शनमाश्रित्य, श्रुतं चानुभूतं च, संस्तवश्च परिचयश्च, द्वितीयायां कामकथायां । रूपादिवर्णनप्रधाना कामकथेत्यर्थः ॥ ३ ॥

तृतीयाक्षेपणी चैका तथा विक्षेपणी परा । अन्या संवेजनी निर्वेजनी चेति चतुर्विधा ॥ ४ ॥

तृतीयेति–तृतीया धर्मकथा च एका आक्षेपणी, तथा परा विक्षेपणी, अन्या संवेजनी, च पुनर्निर्वेजनी इति चतुर्विधा ॥४॥

**आचाराद्व्यवहाराच्च प्रज्ञप्तेर्दृष्टिवादतः । आद्या चतुर्विधा श्रोतुश्चित्ताक्षेपस्य कारणम् ॥ ५ ॥**

आचारादिति–आचारं व्यवहारं प्रज्ञप्तिं दृष्टिवादं चाश्रित्य आद्याक्षेपणी चतुर्विधा । श्रोतुः चित्ताक्षेपस्य तत्त्वप्रतिपत्त्याभिमुखलक्षणस्य अपूर्वशमरसवर्णिकास्वादलक्षणस्य वा कारणम् ॥ ५ ॥

**क्रिया दोषव्यपोहश्च संदिग्धे साधुबोधनम् । श्रोतुः सूक्ष्मोक्तिराचारादयो ग्रन्थान् परे जगुः ॥ ६ ॥**

क्रियेति–क्रिया लोचास्नानादिका । दोषव्यपोहश्च कथंचिदापन्नदोषशुद्ध्यर्थंप्रायश्चित्तलक्षणः । संदिग्धे संशयापन्नेऽर्थे । साधु मधुरालापपूर्वं । बोधनमुत्तरप्रदानं । श्रोतुः सूक्ष्मोक्तिः सूक्ष्मजीवादिभावकथनं । आचारादयः क्रमेणाचारव्यवहारप्रज्ञप्तिदृष्टिवादा अभिधीयन्ते । परे आचार्या आचारादीन् ग्रन्थान् जगुः तैराचाराद्यभिधानादिति भावः ॥ ६ ॥

**एतैः प्रज्ञापितः श्रोता चित्रस्थ इव जायते । दिव्यास्त्रवन्न हि क्वापि मोघाः स्युः सुधियां गिरः ॥७॥**

एतैरिति–व्यक्तः ॥ ७ ॥

**विद्या क्रिया तपो वीर्यं तथा समितिगुप्तयः । आक्षेपणीकल्पवल्ल्या मकरन्द उदाहृतः ॥ ८ ॥**

विद्येति–विद्या ज्ञानमत्यन्तापकारिभावतमोभेदकं । क्रिया चारित्रं । तपोऽनशनादि । वीर्यं कर्मशत्रुविजयानुकूलः पराक्रमः । तथा समितय ईर्यासमित्याद्याः । गुप्तयो मनोगुप्त्याद्याः । आक्षेपणीकल्पवल्ल्या मकरन्दो रस उदाहृतः । विद्यादिबहुमानजननेनैवेयं फलवतीति भावः ॥ ८ ॥

स्वपरश्रुतमिथ्यान्यवादोक्त्या सक्रमोत्क्रमम् । विक्षेपणी चतुर्धा स्याहजोर्मार्गाभिमुख्यकृत् ॥ ९ ॥

स्वेति–स्वपरश्रुते स्वसमयपरसमयौ, मिथ्यान्यवादौ मिथ्यावादसम्यग्वादौ, तयोरुक्त्या प्रतिपादनेन । संक्रमोत्क्रम पूर्वानुपूर्वीपश्चानुपूर्वीसहितं यथा स्यात्तथा । चतुर्धा विक्षेपणी स्यात् । तथा च संप्रदाय–"विक्खेवणी सा चउव्विहा पण्णत्ता, तं जहा–ससमयं कहित्ता परसमयं कहेइ, परसमयं कहित्ता ससमय कहेइ, मिच्छावायं कहित्ता सम्मावायं कहेइ, सम्मावायं कहित्ता मिच्छावायं कहेइ । तत्थ पुव्विं ससमयं कहित्ता परसमय कहेइ ससमयगुणे दीवेइ परसमयदोसे उवदंसेत्ति, एसा पढमा विक्खेवणी गता । इयाणिं बितिया भण्णति–पुव्विं परसमयं कहित्ता तस्सेव दोसे उवदंसेति पुणो ससमयं कहेति गुणे य से उवदंसेति, एसा बितिया विक्खेवणी गया । इयाणिं ततिया–परसमयं कहित्ता तेसु चेव परसमएसु जे जिणप्पणीयभावेहिं सह विरुद्धा असंता चेव विकप्पिया ते पुव्वं कहित्ता दोसा तेसिं णाऊण पुणो जे जिणप्पणीयभावसरिसा घुणक्खरमिव कहवि सोभणा भणिआ ते कहेति, अहवा मिच्छावादो णात्थितं भण्णति, सम्मावादो अत्थित्तं भण्णति । तत्थ पुव्विं णाहियवादीण दिट्ठीओ कहित्ता पच्छा अत्थित्तपक्खवादीण दिट्ठीओ कहेइ, एसा ततिआ विक्खेवणी गया । इदाणिं चउत्था विक्खेवणी–सा वि एवं चेव, णवरं पुव्विं सोभणे कहेइ पच्छा इतरेत्ति । एवं विक्खिवइ सोयारं" । इयं च ऋजोर्मुग्धस्य । मार्गाभिमुख्यकृत् स्वरूपतो मार्गरुचिकर्त्री ॥ ९ ॥

१० अतिप्रसिद्धसिद्धान्तशून्या लोकादिगा हि सा। ततो दोषदृगाशंका स्याद्वा मुग्धस्य तत्त्वधीः ॥१०॥

अतिप्रसिद्धेति–हि यतः सा विक्षेपणी । अतिप्रसिद्ध आचारादिवत्सांप्रतमपि प्रसिद्धो यः सिद्धान्तस्तच्छून्या, अन्यथा हि विधिप्रतिषेधद्वारेण विश्वव्यापकत्वात् स्वसिद्धान्तस्य तच्छून्यकथाया एवाप्रसिद्धिः । लोकपदार्थो रामायणादिः, आदिना वेदसांख्यशाक्यसिद्धान्तादिग्रहः, तेषु गच्छतीति लोकादिगा । तत उक्तहेतोर्ऋजुमते रामायणादिकथायां श्रूयमाणायां कथकदत्तया दोषदृशा "अहो मत्सरिण एते" इत्येवंरूपा शंका स्यादेकेन्द्रियप्रायस्य, स्याद्वा तत्र शोभनार्थश्रवणादियमपि प्रमाणमेवेति तत्त्वधीरचिरेण सिद्धान्तप्रामाण्यधीविरोधिनी ॥ १० ॥

अस्या अकथने प्राप्ते विधिमाह–

**क्षिप्त्वा दोषान्तरं दद्यात्स्वश्रुतार्थं परश्रुते । व्याक्षेपे चोच्यमानेऽस्मिन्मार्गाप्तो दूषयेददः ॥ ११ ॥**

क्षिप्त्वेति–स्वश्रुतार्थं परश्रुते क्षिप्त्वा तत्र दोषान्तरं दद्यात् यथा स्वश्रुतस्य दार्ढ्यं भवति परश्रुतस्य चाप्रतिपत्तिरिति । तथाहि–यथाऽस्माकमहिंसादिलक्षणो धर्मः सांख्यादीनामप्येवं हिंसानाम भवेद्धर्मो न भूतो न भविष्यतीत्यादि वचनात् । किं त्वसावपरिणामिन्यात्मनि न युज्यते, एकान्तनित्यानित्ययोर्हिंसाया अभावादिति । भाऽथवाऽस्मिन् परश्रुते उच्यमाने शोभनोऽहं शास्त्रिनः श्रोतुर्व्याक्षेपे मार्गाभिमुख्यलक्षणे जातेऽदः परश्रुतं दूषयेत् । इत्थं हि दूषणार्थं केवलस्यापि तस्य कथनं प्राप्तं । तदिदमुक्तं–"जा समएण पुव्विं अक्खाया तं छुभेज्ज परसमए । परसासणवक्खेवा परस्स समयं परिकहेइ ॥ १ ॥" ११ ॥

श्रोतुः परसमयरूपणे माध्यस्थ्यं ज्ञात्वैव विक्षेपणी कथनीयेति कथितमाह—

**कटुकौषधपानाद्यां कारयित्वा रुचिं सता । इयं देयान्यथा सिद्धिर्न स्यादिति विदुर्बुधाः ॥ १२ ॥**

कटुकेति—स्पष्टः ॥ १२ ॥

**मता संवेजनी स्वान्यदेहेहप्रेत्यगोचरा । यया संवेज्यते श्रोता विपाकविरसत्वतः ॥ १३ ॥**

मतेति—यया कथया । विपाकविरसत्वतो विपाकवैरस्यात् प्रदर्शितात् । श्रोता संवेज्यते संवेगं ग्राह्यते । सा संवेजनी । स्वान्यदेहेहप्रेत्यगोचरा स्वशरीरपरशरीरेहलोकपरलोकविषया चतुर्विधा मता । अत्रायं संप्रदायः—"संवेयणी कहा चउव्विहा पन्नत्ता, तं जहा—आयसरीरसंवेयणी, परसरीरसंवेयणी, इहलोअसंवेयणी, परलोअसंवेयणी । तत्थ आयसरीरसंवेयणी जहा—जमेयं अम्हच्चयं सरीरं एयं सुक्कसोणियमंसवसामेदमज्जट्ठिण्हारुचम्मकेसरोमणहदंतअंतादिसंघातनिप्फण्णत्तणेण मुत्तपुरीसभायणत्तणेण असुइत्ति कहेमाणो सोयारस्स संवेगं उप्पाएइत्ति, एसा अत्तसरीरसंवेयणी । एवं परसरीरसंवेयणी वि परसरीरं एरिसं चेव असुइ । अहवा परस्स सरीरं वण्णेमाणो सोआरस्स संवेगमुप्पाएइ, परसरीरसंवेयणी गता । इदाणीं इहलोअसंवेयणी जहा—सव्वमेव माणुसत्तणं असारमधुवं कदलीथंभसमाणं एरिसं कहं कहेमाणो धम्मकही सोतारस्स संवेगमुप्पाएति, इहलोअसंवेयणी गया । इयाणिं परलोगसंवेयणी जहा—देवा वि इस्साविसायमयकोहलोहाइएहिं दुक्खेहिं अभिभूया किमंग पुण तिरियनारया एयारिसं कहं कहेमाणो धम्मकही सोआरस्स संवेगमुप्पाए त्ति, एसा परलोअसंवेयणी गता" इति ॥ १३ ॥

वैक्रियर्ध्यादयो ज्ञानतपश्चरणसंपदः । शुभाशुभोदयध्वंसफलमस्या रसः स्मृतः ॥ १४ ॥

वैक्रियेति–वैक्रियर्ध्यादयो गुणा इति गम्यं । तत्र वैक्रियर्द्धिर्वैक्रियनिर्माणलक्षणा। आदिना जंघाचारणादिलब्धिग्रहः । तथा ज्ञानतपश्चरणसंपदः तत्र ज्ञानसंपच्चतुर्दशपूर्विण एकस्माद्घटादेर्घटादिसहस्रनिर्माणलक्षणा । तपःसंपच्च "जं अन्नाणी कम्मं खवेइ" इत्यादिलक्षणा । चरणसंपच्च सकलफलसिद्धिरूपा । एते गुणाः संपदश्च । शुभोदयस्याशुभध्वंसस्य च फलमस्याः संवेजन्या रसः स्मृतः ॥ १४ ॥

चतुर्भंगीं समाश्रित्य प्रेत्येहफलसंश्रयाम् । पापकर्मविपाकं या ब्रूते निर्वेजनी तु सा ॥ १५ ॥

चतुर्भंगीमिति–या कथा पापकर्मविपाकं । प्रेत्येहफलसंश्रयामिहलोकपरलोकभोगाश्रितां । चतुर्भंगीं समाश्रित्य ब्रूते । सा तु निर्वेजनी चतुर्भिरेव भंगैः प्रतिपाद्यमानैश्चतुर्विधेति भावः । अत्रायं संप्रदायः-"इदाणिं निव्वेदणी-सा चउव्विहा पन्नत्ता, तं जहा-इहलोए दुच्चिन्नाइं कम्माइं इहलोए दुहविवागसंजुत्ताइ भवंति । तं जहा-चोराणं पारदारियाणं एवमादी एसा पढमा निवेदणी । इदाणिं बितिया निव्वेदणी-इहलोए दुच्चिणा कम्मा परलोए दुहविवागसंजुत्ता भवंति, तं जहा-नेरइयाणं अन्नंमि भवे कयं कम्मं निरयभावफलं देइ, एसा बितिया निवेयणी । इयाणिं ततिआ निवेदणी-परलोए दुच्चिन्ना कम्मा इहलोए दुहविवागसंजुत्ता भवंति, कहं ? जहा-बालप्पभितिमेव अंतकुलेसु उप्पन्ना खयकोढाइएहिं रोगेहिं दारिद्देण य अभिभूया दीसंति, एसा ततिया निवेदणी । इदाणिं चउत्था निवेदणी-परलोए दुच्चिन्ना कम्मा परलोए

दुहविवागसंजुत्ता भवंति, कहं ? अत्रा-पुनि दुक्खिसेहिं कम्मेहिं जीवा संकासतुनेहिं पत्तीहि छवधकावि तछ ते नरयप्पा-छगाणि कम्माणि अ सपुण्णाणि ताए आतीए पूरिंति, पूरिक्रण नरयजवे वेदिंति, एसा चउत्था निवेयणीगया । एवं इह-लोगो परलोगो य पणयर्य पजुष्ठ जयति । तत्थ पजययस्स मणुस्सजयो इहलोगो, सेसा उ तिणि वि गईउ परलोगो" ॥१५॥

स्तोकस्यापि प्रमादस्य परिणामोऽतिदारुण. । वर्ण्यमान. प्रबन्धेन निर्वेजन्या रस· स्मृतः ॥ १६ ॥

स्तोकस्यापीति–स्पष्टः ॥ १६ ॥

आदावाक्षेपणीं दद्याच्छिष्यस्य धनसन्निभाम् । विक्षेपणीं गृहीतेऽर्थे शृष्युपायमिवादिशेत् ॥ १७ ॥

आदाविति–स्पष्टः ॥ १७ ॥

आक्षेपण्या किलाक्षिप्ता जीवा सम्यक्त्वभागिन. । विक्षेपण्यास्तु भजना मिथ्यात्वं वातिदारुणम् ॥१८॥

आक्षेपण्येति–आक्षेपण्याक्षिप्ता आवर्जिताः किल जीवाः। सम्यक्त्वभागिनो योगेन सम्यक्त्वलाभवन्तोऽसति प्रतिबन्धे तथावर्जनेन मिथ्यात्वमोहनीयकर्मक्षयोपशमोपपत्ते । विक्षेपण्यास्तु सकाशात् फलप्राप्तौ भजना कदाचिदतः सम्यक्त्व लभन्ते कदाचिन्नेति । सम्रूयणासथाविधपरिणामानियमादतिदारुणं महाभयंकर मिथ्यात्वं वा ततः स्यात् । अक्रमती नामजिनिविष्टानां । तदुक्तं–" अक्खेवणियक्खित्ता जे जीवा ते लहंति सम्मत्तं । विक्खेवणीइ भजं गाढयरागं व मिच्छत्तं ॥ १ ॥ " ॥ १८ ॥

विक्षेपण्याः परिकर्मितताया एव गुणावहत्वं नान्यथेति समर्थयन्नाह–

**आद्या यथा शुद्धं भावं सूते नान्या कथा तथा । यादृग्गुणः स्यात्पीयूषात्तादृशो न विषादपि ॥ १९ ॥**

आद्येति–पीयूषवन्नेयं स्वरूपतो गुणावहा, किं तु वत्सनागवत्परिकर्मितैवेति तात्पर्यम् ॥ १९ ॥

**धर्मार्थकामाः कथ्यन्ते सूत्रे काव्ये च यत्र सा । मिश्राख्या विकथा तु स्याद्भक्तस्त्रीदेशराजगता ॥२०॥**

धर्मेति–यत्र सूत्रे काव्ये च धर्मार्थकामा मिलिताः कथ्यन्ते । सा मिश्राख्या कथा, संकीर्णपुरुषार्थाभिधानात् । विकथा कथालक्षणविरहिता तु स्यात् । भक्तस्त्रीदेशराजगता भक्तादिविषया । यदाह–"इत्थिकहा भत्तकहा रायकहा चोरजणवयकहा य । नडनट्टजल्लमुट्ठियकहा उ एसा भवे विकहा ॥ १ ॥" ॥ २० ॥

**प्रज्ञापकं समाश्रित्य कथा एता अपि क्रमात् । अकथा विकथा वा स्युः कथा वा भावभेदतः ॥२१॥**

प्रज्ञापकमिति–प्रज्ञापकं वक्तृपुरुषविशेषं समाश्रित्य एता उक्तलक्षणाः कथा अपि अकथा विकथाः कथा वा स्युः । भावभेदत आशयवैचित्र्यात् सम्यक्श्रुतादिवत् । तत एव पुरुषार्थप्रतिपत्त्यभावतद्विरोधतत्प्रतिपत्तिफलभेदात् । तदुक्तं–"एया चेव कहाओ पन्नवगपरूवगं समासज्ज । अकहा कहा व विकहा हविज्ज पुरिसंतरं पप्प ॥ १ ॥" अत्र प्रज्ञापकप्ररूपकमित्यत्र कर्मधारयाश्रयणादवबोधकप्ररूपको व्याख्यातो घरट्टभ्रमणकल्पश्च व्यवच्छिन्नो, द्वन्द्वाश्रयणे तु द्वित्वे बहुवचनापत्तिरित्यवधेयम् ॥ २१ ॥

मिथ्यात्वं वेदयन् ब्रूते लिंगस्थो वा गृहस्थित । यस्साऽकथाशयोभूते· श्रोतुर्भक्त्रनुसारतः ॥ २२ ॥

मिथ्यात्वमिति–मिथ्यात्वं वेदयन् विपाकेनानुभवन् । लिंगस्थो रूप्यमभजितोऽङ्गारमर्दकादिप्रायो, गृहस्थितो वा कश्चिद् ब्रूते साऽकथा । श्रोतुर्वक्त्रनुसारतो वक्त्राशयानुगुण्येनैवाशयोभूतेः भावोत्पत्तेः प्रतिविशिष्टफलाभावात् । तदिदमुक्तं–"मिच्छत्तं वेयंतो जं अन्नाणी कहं परिकहेइ । लिंगत्थो य गिही वा सा अकहा देसिआ समए ॥ १ ॥" ॥ २२ ॥

ज्ञानक्रियातपोयुक्ता सद्भावं कथयन्ति यत् । जगज्जीवहितं सेय कथा धीरैरुदाहृता ॥ २३ ॥

ज्ञानेति–ज्ञानक्रियातपोनियुक्ताः । सद्भावं परमार्थं यत् कथयन्ति जगज्जीवहितं । सेयं धीरैः कथोदाहृता, निर्जरास्यफलसाधनात्, पक्कुः श्रोतुश्च कुशलपरिणामोत्पादनात्, अन्यथा तु तत्र भजनापि स्यादिति । तदिदमुक्तं–"तवसंजमगुणधारी जं चरणरया कहंति सब्भावं । सव्वजगज्जीवहिअं सा उ कहा देसिआ धम्मे ॥ १ ॥" ॥ २३ ॥

य संयत प्रमत्तस्तु ब्रूते सा विकथा मता । कर्तृश्रोत्राशये तु स्याद्भजना नेदमश्नुति ॥ २४ ॥

य इति–यः संयतः प्रमत्तः कषायादिवशगः तु ब्रूते । सा विकथा मता । तथाविधपरिणामनिबन्धनत्वात् । तदुक्तं–"जो संजओ पमत्तो रागद्दोसवसगो परिकहेइ । सा उ विकहा पवयणे पन्नत्ता धीरपुरिसेहिं ॥ १ ॥" कर्तृश्रोत्राशये तु नेदमश्नुति सति भजना स्यात्, त प्रति कथान्तरापत्तेः ॥ २४ ॥

सन्धुक्षयन्ति मदनं शृंगारोक्तैरुदर्चिषम् । कथनीया कथा नैव साधुना सिद्धिमिछता ॥ २५ ॥
तपोनियमसारा तु कथनीया विपश्चिता । संवेदं वापि निर्वेदं यां श्रुत्वा मनुजो व्रजेत् ॥ २६ ॥
महार्थापि कथा कथ्या परिक्लेशेन धीमता । अर्थं हन्ति प्रपंचो हि पिठदमामिव पादपः ॥ २७ ॥
प्रपञ्चितज्ञशिष्यस्यानुरोधे सोऽप्यदोषकृत् । सूत्रार्थादिक्रमेणातोऽनुयोगस्त्रिविधः स्मृतः ॥ २८ ॥
विध्युद्यमजयोत्सर्गापवादोजयवर्णकैः । कथयन्न पटुः सूत्रमपरिछिद्य केवलम् ॥ २९ ॥
एवं ह्येकान्तबुद्धिः स्यात्सा च सम्यक्त्वघातिनी । विजय वादिनो युक्ता कथायामधिकारिता ॥३०॥
विधिना कथयन् धर्मं हीनोऽपि श्रुतदीपनात् । वरं न तु क्रियास्थोऽपि मूढो धर्माध्वतस्करः ॥३१॥
इत्थं व्युत्पत्तिमात्रायां कथयन् पंडितः कथाम् । स्वसामर्थ्यानुसारेण परमानन्दमश्नुते ॥ ३२ ॥

संधुक्षयन्तीत्याद्यारभ्याष्टश्लोकी प्रायः सुगमा विधिसूत्रादिविवेकश्चान्यत्र प्रपंचित इति ॥ ३२ ॥

॥ इति कथाद्वात्रिंशिका ॥ ९ ॥

# ॥ अथ योगलक्षणद्वात्रिंशिका ॥ १० ॥

कथानिरूपणानन्तरं तत्फलभूतस्य योगस्य लक्षणं निरूप्यते–

मोक्षेण योजनादेव योगो ह्यत्र निरुच्यते । लक्षणं तेन तन्मुख्यहेतुव्यापारतास्य तु ॥ १ ॥

मोक्षेणेति–योगो हि योगशब्दो हि । अत्र लोके प्रवचने वा । मोक्षेण योजनादेव निरुच्यते व्युत्पाद्यते । तेनास्य योगस्य तु तन्मुख्यहेतुव्यापारता लक्षणं । निरुक्तार्थस्याप्यनतिप्रसक्तस्य लक्षणत्वानपायात् ॥ १ ॥

मुख्यत्वं चान्तरङ्गत्वात् फलाक्षेपाच्च दर्शितम् । चरमे पुद्गलावर्ते यत एतस्य संभवः ॥ २ ॥

मुख्यत्वं चेति–मुख्यत्वं च अन्तरङ्गत्वात् मोक्षं प्रत्युपादानत्वात् । फलाक्षेपात् फलजननं प्रत्यविलंबत्वाच्च । दर्शितं प्रवचने । यतो यस्माच्चरमे पुद्गलावर्ते एतस्य योगस्य संभवः । इत्थं च भवाभिनन्दिकृतक्रियाव्यवच्छेदः कृतो भवति, एकस्य मोक्षानुपादानत्वादन्यस्य च फलविलंबनादिति ध्येयम् ॥ २ ॥

न सन्मार्गाभिमुख्यं स्यादावर्तेषु परेषु तु । मिथ्यात्वच्छन्नबुद्धीनां दिङ्मूढानामिवाङ्गिनाम् ॥ ३ ॥

नेति–स्पष्टः ॥ ३ ॥

तदा भवाभिनन्दी स्यात्संज्ञाविष्कम्भणं विना । धर्मकृत् कश्चिदेवाङ्गी लोकपंक्तिकृतादरः ॥ ४ ॥

तदेति–तदाऽचरमेष्वावर्तेषु । अंगी प्राणी । संज्ञाविष्कंजणं आहारादिसंज्ञोदयवंचनलक्षणं विना । कश्चिदेव धर्मकृत् लौकिकलोकोत्तरप्रव्रज्यादिधर्मकारी । लोकपंक्तौ लोकसदृशभावसंपादनरूपायां कृतादरः कृतयत्नः स्यात् ॥ ४ ॥

**क्षुद्रो लोभरतिर्दीनो मत्सरी भयवान् शठः । अज्ञो भवाभिनन्दी स्यान्निष्फलारंभसंगतः ॥ ५ ॥**

क्षुद्र इति–क्षुद्रः कृपणः । लोभरतिर्याच्ञाशीलः । दीनः सदैवादृष्टकल्याणः । मत्सरी परकल्याणदुःस्थितः । भयवान् नित्यभीतः । शठो मायावी । अज्ञो मूर्खः । भवाभिनन्दी " असारोऽप्येष संसारः सारवानिव लक्ष्यते । दधिदुग्धांबुतांबूलपण्यपण्यांगनादिभिः ॥ १ ॥ " इत्यादिवचनैः संसाराभिनन्दनशीलः । स्याद्भवेत् । निष्फलारंभसंगतः सर्वत्रातत्त्वाभिनिवेशादवन्ध्यक्रियासंपन्नः ॥ ५ ॥

**लोकाराधनहेतोर्या मलिनेनान्तरात्मना । क्रियते सत्क्रिया सा च लोकपंक्तिरुदाहृता ॥ ६ ॥**

लोकेति–लोकाराधनहेतोः लोकचित्तावर्जननिमित्तं । या मलिनेन कीर्तिस्पृहादिमालिन्यवता अन्तरात्मना चित्तरूपेण क्रियते सत्क्रिया शिष्टसमाचाररूपा । सा च योगनिरूपणायां लोकपंक्तिरुदाहृता योगशास्त्रज्ञैः॥ ६ ॥

**महत्यल्पत्वबोधेन विपरीतफलावहा । भवाभिनन्दिनो लोकपंक्त्या धर्मक्रिया मता ॥ ७ ॥**

महतीति–महति अधरीकृतकल्पद्रुचिन्तामणिकामधेनौ धर्मे । अल्पत्वबोधेन अतितुच्छकीर्त्यादिमात्रहेतुत्वज्ञानेन विप-

रीतफलदायका दुरन्तसंसारानुबन्धिनी। भवाभिनन्दिनो जीवस्य। लोकपंक्त्या धर्मक्रिया मता। नात्र केवलमफलत्वमेव किं तु विपरीतफलत्वमिति भावः ॥ ७ ॥

**धर्मार्थं सा शुभायापि धर्मस्तु न तदर्थिन। क्लेशोऽपीष्टो धनार्थं हि क्लेशार्थं जातु नो धनम् ॥ ८॥**

धर्मार्थमिति–धर्मार्थं सम्यग्दर्शनादिमोक्षबीजाधाननिमित्त। सा लोकपङ्क्तिः दानसम्मानोचितसंभाषणादिभिश्चित्रैरुपायैः शुभाय कुशलानुबन्धाय अपि। धर्मस्तु तदर्थिनो लोकपंक्त्यर्थिनो न शुभाय। हि यतो धनार्थं क्लेशोऽपीष्टो धनार्थिनो राजसेवादौ प्रवृत्तिदर्शनात्। क्लेशार्थं जातु कदाचित् धनं नेष्टं, न हि "धनान्मे क्लेशो जायतु" इति कोऽपीच्छति प्रेक्षावान्। तदिदमुक्तं–"धर्मार्थं लोकपङ्क्तिः स्यात् कल्याणाङ्गं महामतेः। तदर्थं तु पुनर्धर्मः पापायाल्पधियामलम् ॥ १ ॥" तथा "(युक्तं)जनप्रियत्वं शुद्धं सद्धर्मसिद्धिफलदमलं। ध (सद्ध)र्मप्रशंसनादेर्बीजाधानादिभावेनेति ॥ ८ ॥

**अनाभोगवतः सापि धर्महानिकृतो वरम्। शुभा तत्त्वेन नैकापि प्रणिधानाद्यभावतः ॥ ९ ॥**

अनाभोगयत इति–अनाभोगवतः सन्मूर्छनजप्रायस्य स्वभावत एव वैनयिकप्रकृतेः सापि लोकपङ्क्त्या धर्मक्रियापि। धर्महानिकृतो धर्मे महत्त्वस्यैव यथास्थितस्याज्ञानाल्लघोत्कटेच्छाया अभावेन प्रवृत्त्यल्पत्वाप्रतिपत्तेर्धर्मलाघवकारिणो वरमस्यापेक्षया मनाक् सुन्दरा। तत्त्वेन तत्त्वतः पुनर्नैकापि प्रणिधानाद्यभावतो नैकापि वरं। प्रणिधानादीनां क्रियाशुद्धिहेतुत्वात् ॥९॥

तानेवाह–

**प्रणिधानं प्रवृत्तिश्च तथा विघ्नजयस्त्रिधा। सिद्धिश्च विनियोगश्च एते कर्मशुभाशयाः ॥ १० ॥**

प्रणिधानमिति–कर्मणि क्रियायां शुभाशयाः स्वपुष्टिशुद्ध्यनुबन्धहेतवः शुभपरिणामाः । पुष्टिरुपचयः, शुद्धिश्च ज्ञानादिगुणविघातिघातिकर्महासोत्थनिर्मलतेत्यवधेयम् ॥ १० ॥

**प्रणिधानं क्रियानिष्ठमधोवृत्तिकृपानुगम् । परोपकारसारं च चित्तं पापविवर्जितम् ॥ ११ ॥**

प्रणिधानमिति–प्रणिधानं क्रियानिष्ठं अधिकृतधर्मस्थानादविचलितस्वभावं । अधोवृत्तिषु स्वप्रतिपन्नधर्मस्थानादधस्ताद्वर्तमानेषु प्राणिषु कृपानुगं करुणान्वितं । न तु हीनगुणत्वेन तेषु द्वेषसमन्वितं । परोपकारसारं च परार्थनिष्पत्तिप्रधानं च । चित्तं पापविवर्जितं सावद्यपरिहारेण निरवद्यवस्तुविषयम् ॥ ११ ॥

**प्रवृत्तिः प्रकृतस्थाने यत्नातिशयसंभवा । अन्याभिलाषरहिता चेतःपरिणतिः स्थिरा ॥ १२ ॥**

प्रवृत्तिरिति–प्रवृत्तिः प्रकृतस्थानेऽधिकृतधर्मविषये । यत्नातिशयसंभवा पूर्वप्रयत्नाधिकोत्तरप्रयत्नजनिता । अन्याभिलाषेणाधिकृतेतरकार्याभिलाषेण रहिता । चेतसोऽन्तरात्मनः परिणतिः स्थिरा एकाग्रा स्वविषय एव यत्नातिशयाज्जाता तत्रैव च तज्जननीत्यर्थः ॥ १२ ॥

**बाह्यान्तर्व्याधिमिथ्यात्वजयव्यंग्याशयात्मकः । कंटकज्वरमोहानां जयैर्विघ्नजयः समः ॥ १३ ॥**

बाह्येति–बाह्यव्याधयः शीतोष्णादयः अन्तर्व्याधयश्च ज्वरादयः मिथ्यात्वं भगवद्वचनाश्रद्धानं, तेषां जयस्तत्कृतवैक्लव्यनिराकरणं तद्व्यंग्याशयात्मकः । कंटकज्वरमोहानां जयैः समो विघ्नजयः । इत्थं च हीनमध्यमोत्कृष्टत्वेनास्य त्रिविधत्वं

प्रागुक्तं व्यक्तीकृतं । तथाहि-कस्यचित्पुंसः कंटकाकीर्णमार्गावतीर्णस्य कंटकविघ्नो विशिष्टगमनविघातहेतुः, तदपहते तु पथि प्रवृत्तस्य निराकुलं गमनं संजायते, एवं कंटकविघ्नजयसमः प्रथमो विघ्नजयः । तथा तस्यैव ज्वरवेदनाभिभूतशरीरस्य विह्वलपादन्यासस्य निराकुलं गमनं चिकीर्षोरपि तत्कर्तुमशक्नुवतः कंटकविघ्नादप्यधिको ज्वरविघ्नः, तज्जयस्तु निराकुलप्रवृत्तिहेतुः, एष ज्वरविघ्नसमो द्वितीयो विघ्नजयः । तस्यैव चाध्वनि जिगमिषोर्दिग्मोहकल्पो मोहविघ्नः तेनाभिभूतस्य प्रेर्यमाणस्याप्यध्वनीनैर्न गमनोत्साहः कथंचित्प्रादुर्भवति, तज्जयस्तु स्वरसतो मार्गगमनप्रवृत्तिहेतुः, एवमिह मोहविघ्नजयसमस्तृतीयो विघ्नजयः इति फलैषोऽभेयाः सम्येवे ॥ १३ ॥

सिद्धिस्तात्त्विकधर्माप्तिः साक्षादनुभवात्मिका । कृपोपकारविनयान्विता हीनादिषु क्रमात् ॥ १४ ॥

सिद्धिरिति-सिद्धिः तात्त्विकस्याभ्यासमुक्तस्य न स्वाभ्यासिकमात्रस्य धर्मस्याहिंसादेराप्तिरुपलब्धिः । साक्षादनुपचारेण । अनुभवात्मिका आत्मन आत्मना आत्मनि संवित्तिरूपा ज्ञानदर्शनचारित्रैकमूर्तिका । हीनादिषु क्रमात् कृपोपकारविनयान्विता, हीने कृपान्विता, मध्यमे उपकारान्विता, अधिके च विनययुक्ता ॥ १४ ॥

अन्यस्य योजनं धर्मे विनियोगस्तदुत्तरम् । कार्यमन्वयसंपत्त्या तदवन्ध्यफलं मतम् ॥ १५ ॥

अन्यस्येति-अन्यस्य स्वव्यतिरिक्तस्य योजनं धर्मेऽहिंसादौ विनियोगः । तदुत्तरं सिद्ध्युत्तरं कार्यं । तदन्वयसंपत्त्याऽविच्छेदसिद्ध्या । अवन्ध्यफलमव्यभिचारिफलं मतं । स्वपरोपकारशुद्धिलक्षणस्यानेकजन्मान्तरसन्ततोद्बोधेन प्रकृष्टधर्मस्यानावाप्तिहेतुत्वात् ॥ १५ ॥

**एतैराशययोगैस्तु विना धर्माय न क्रिया । प्रत्युत प्रत्यपायाय लोभक्रोधक्रिया यथा ॥ १६ ॥**

एतैरिति—एतैः प्रणिधानादिभिः आशययोगैस्तु विना धर्माय न क्रिया बाह्यकायव्यापाररूपा । प्रत्युतान्तर्मालिन्यसद्भावात्प्रत्यपायायेष्यमाणप्रतिपक्षविघ्नाय । तथा लोभक्रोधक्रिया कूटतुलादिसंग्रामादिलक्षणा । तदुक्तं—"तत्त्वेन तु पुनर्नैकाप्यत्र धर्मक्रिया मता । तत्प्रकृत्या ( वृत्त्या )दिवैगुण्याल्लोभक्रोधक्रिया यथा ॥ १ ॥" ॥ १६ ॥

**तस्मादचरमावर्तेष्वयोगो योगवर्त्मनः । योग्यत्वेऽपि तृणादीनां घृतत्वादेस्तदा यथा ॥ १७ ॥**

तस्मादिति—तस्मात्प्रणिधानाद्यभावात् । अचरमावर्तेषु । योगवर्त्मनो योगमार्गस्य । अयोगोऽसंभवः । योग्यत्वेऽपि योगस्वरूपयोग्यत्वेऽपि । तृणादीनां । तदा तृणादिकाले । यथा घृतत्वादेरयोगः । तृणादिपरिणामकाले तृणादेर्घृतादिपरिणामस्वरूपयोग्यत्वेपि घृतादिपरिणामसहकारियोग्यताभावाद्यथा न घृतादिपरिणामस्तथा प्रकृतेऽपि भावनीयं । अत एव सहकारियोग्यताभाववति तत्र काले कार्यानुपधानं तद्योग्यताभाववत्त्वेनैव साधयितुमभिप्रेत्याह हरिभद्रसूरिः—"तस्मादचरमावर्तेष्वध्यात्मं नैव युज्यते । कायस्थितितरोर्यद्वत्तज्जन्मस्वामरं सुखम् ॥ १ ॥ तैजसानां च जीवानां भव्यानामपि नो तदा । यथा चारित्रमित्येवं नान्यदा योगसंभवः ॥ २ ॥" इति ॥ १७ ॥

**नवनीतादिकल्पस्तच्चरमावर्त इष्यते । अत्रैव विमलो भावो गोपेन्द्रोऽपि यदभ्यधात् ॥ १८ ॥**

नवनीतादीति—नवनीतादिकल्पो घृतपरिणामनिबन्धननवनीतदधिदुग्धादितुल्यः । तत् तस्मात् । चरमावर्त इष्यते ।

योगपरिणामनिबन्धनं । अतैव चरमावर्त एव विमलो भावो भवाभिष्वंगाभावाद्भवति । यच्चोपेन्द्रोऽपि अन्यथाऽऽयन्तरेण ॥ १८ ॥

अनिवृत्ताधिकारायां प्रकृतौ सर्वथैव हि । न पुंसस्तत्त्वमार्गेऽस्मिञ्जिज्ञासापि प्रवर्तते ॥ १९ ॥

अनिवृत्तेति–अनिवृत्तः प्रतिलोमशक्त्यान्तरलीनोऽधिकारः पुरुषाभिभवरूपो यस्यास्तस्यां प्रकृतौ । सर्वथैव हि सर्वैरेव प्रकारैः । अपुनर्बन्धकस्थानस्याप्यप्राप्तावित्यर्थः । न नैव पुंसः तत्त्वमार्गेऽस्मिन् वस्तुमुपक्रान्ते । जिज्ञासापि ज्ञातुमिच्छापि, किं पुनस्तदभ्यास इत्यपिशब्दार्थः प्रवर्तते सञ्जायते ॥ १९ ॥

साधिकारप्रकृतिमत्यावर्ते हि नियोगतः । पथ्येच्छेव न जिज्ञासा क्षेत्ररोगोदये भवेत् ॥ २० ॥

साधिकारेति–साधिकारा पुरुषाभिभवप्रवृत्ता या प्रकृति(कृति)स्तद्वत्यावर्ते हि । नियोगतो निश्चयतः । जिज्ञासा तत्त्वमार्गपरिज्ञानेच्छा न भवेत् । क्षेत्ररोगोदय इव पथ्येच्छा । क्षेत्ररोगो नाम रोगान्तराधारभूतः कुष्ठादिरोगः । ततो यथा पथ्यापथ्यधीविपर्यासस्तथा प्रकृतेऽपि ॥ २० ॥

पुरुषाभिभव. कश्चित्तस्यामपि हि हीयते । युक्तं तेनैतदधिकमुपरिष्टाद्भणिष्यते ॥ २१ ॥

पुरुषेति–तस्यामपि हि जिज्ञासायामपि हि सत्या । कश्चित् पुरुषाभिभवः प्रकृते हीयते (प्रकृतेर्हीयते) निवर्तते । न ह्येकान्तेनाक्षीणपापस्य विमलो भावः सम्भवति । तेनैतद्योपेन्द्रोक्त युक्तं । अधिकमपरिणाम्यात्मपक्षे तदभिभवतन्निवृत्त्याद्यनुपपत्तिलक्षणमुपरिष्टादस्मिन्द्वात्रिंशिकायां भणिष्यते ॥ २१ ॥

भावस्य मोक्षहेतुत्वं तेन मोक्षे व्यवस्थितम् । तस्यैव चरमावर्ते क्रियाया अपि योगतः ॥ २२ ॥

भावस्येति–तेन भावस्यान्तःपरिणामस्य मोक्षे मुख्यहेतुत्वं व्यवस्थितं । तेन स एव योग इत्युक्तं भवति । तस्यैव योगतश्चरमावर्ते क्रियाया अपि मोक्षे मुख्यहेतुत्वं, अतस्तस्या अपि योगत्वमिति भावः ॥ २२ ॥

रसानुवेधात्ताम्रस्य हेमत्वं जायते यथा । क्रियाया अपि सम्यक्त्वं तथा भावानुवेधतः ॥ २३ ॥

रसानुवेधादिति–ताम्रस्य रसानुवेधात् सिद्धरससंपर्कात् यथा हेमत्वं जायते । तथा क्रियाया अपि भावानुवेधतः सम्यक्त्वं मोक्षसंपादनशक्तिरूपम् ॥ २३ ॥

भावसात्म्येऽत एवास्या भंगेऽपि व्यक्तमन्वयः । सुवर्णघटतुल्यां तां ब्रुवते सौगता अपि ॥ २४ ॥

भावेति–अत एवास्याः क्रियाया भावसात्म्ये स्वजननशक्त्या भावव्याप्तिलक्षणे सति । भंगेऽपि तथाविधकषायोदयान्नाशेऽपि । व्यक्तं प्रकटं । अन्वयो भावानुवृत्तिलक्षणः । तद्व्यक्त्यभावेऽपि तच्छक्त्यनपगमात् । अत एव तां भावशुद्धां क्रियां सौगता अपि सुवर्णघटतुल्यां ब्रुवते । यथा हि सुवर्णघटो भिद्यमानोऽपि न स्वर्णानुबन्धं मुञ्चति एवं शुभक्रिया तथाविधकषायोदयाद्भग्नापि शुभफलैवेति । तदिदमुक्तं–“भाववृद्धिरतोऽवश्यं सानुबन्धं शुभोदयम् । गीयतेऽन्यैरपि ह्येतत्सुवर्णघटसन्निभम् ॥ १ ॥” इति ॥ २४ ॥

शिरोदकसमो भावः क्रिया च खननोपमा । भावपूर्वादनुष्ठानाद्भाववृद्धिरतो ध्रुवा ॥ २५ ॥

शिरेति—शिरोदकसमः यथाविधकूपे सहजमस्तशिराजलतुल्यो भावः । क्रिया च खननोपमा शिराश्रयकूपादिखनन-सदृशी । अतो भावपूर्वादनुष्ठानाद्भाववृद्धिर्ध्रुवा । भाववृद्धौ कूपखननस्येव भाववृद्धौ क्रियाया हेतुत्वाद्भावस्य दग्धस्येऽपि चतुरस्रमेखनरूपाया वृद्धेस्तदन्वयव्यतिरेकानुविधानात् ॥ २५ ॥

मण्डूकचूर्णसदृशः क्लेशध्वंसः क्रियाकृतः । तद्भस्मसदृशस्तु स्याद्भावपूर्वक्रियाकृतः ॥ २६ ॥

मण्डूकेति—क्रियाकृतः केवलक्रियाजनितः । क्लेशध्वंसो रागादिपरिक्षयः । मण्डूकचूर्णसदृशः, पुनरुत्पत्तिशक्त्यन्वितत्वात् । भावपूर्वक्रियाकृतस्तु तद्भस्मसदृशो मण्डूकभस्मसदृशः स्यात्, पुनरुत्पत्तिशक्त्यभावात् । एष च क्लेशध्वंसविशेषजनकः शक्तिविशेष एव क्रियायां भाववृद्ध्यनुकूल इति फलितम् ॥ २६ ॥

तथा च—

विचित्रभावद्वारा तत् क्रिया हेतुः शिवं प्रति । अस्या व्यञ्जकताप्येषा परा ज्ञाननयोचिता ॥ २७ ॥

विचित्रेति—विचित्रो भावोऽध्यात्मादिरूपः तद्द्वारा क्रिया शिवं प्रति हेतुः । दण्ड इव चक्रभ्रमिद्वारा घटे । करणता च तस्याः शक्तिविशेषेण न तु भावपूर्वकत्वेनैव, भावस्यान्यथासिद्धिप्रसंगात् । अस्याः क्रियाया व्यंजकताप्येषा हेतुताविशेषरूपा परा । अत एव भावस्य ज्ञापकत्वरूपाभिव्यंजकता ज्ञाननयोचिता ज्ञाननयप्राधान्योपयुक्ता, न तु व्यवहारतो वास्तवी, अन्यथा सत्कार्यवादप्रसंगात् इति भावः ॥ २७ ॥

**व्यापारश्चिद्विवर्तत्वाद्वीर्योल्लासाच्च स स्मृतः । विविच्यमाना भिद्यन्ते परिणामा हि वस्तुनः ॥ २८ ॥**

व्यापार इति–स योगः चिद्विवर्तत्वाज्ज्ञानपरिणामात् । वीर्योल्लासादात्मशक्तिस्फोरणाच्च । व्यापारः स्मृतः । क्रमवतः प्रवृत्तिविषयस्य व्यापारत्वात् । एतेन द्रव्यादेर्व्यवच्छेदः । हि यतः विविच्यमाना भेदनयेन गृह्यमाणा वस्तुनः परिणामा भिद्यन्ते । तथा च न व्यापाराश्रयस्यापि व्यापारत्वमिति भावः ॥ २८ ॥

एतदेवाह–

**जीवस्थानानि सर्वाणि गुणस्थानानि मार्गणाः । परिणामा विवर्तन्ते जीवस्तु न कदाचन ॥ २९ ॥**

जीवस्थानानीति–सर्वाणि चतुर्दशापि जीवस्थानानि गुणस्थानानि तावन्त्येव मार्गणा गतीन्द्रियाद्याः परिणामा विवर्तन्ते दशाविशेषं भजन्ते, जीवस्तु कदाचन न विवर्तते, तस्य शुद्धज्ञायकभावस्यैकस्वभावत्वात् ॥ २९ ॥

**उपाधिः कर्मणैव स्यादाचारादौ श्रुतं ह्यदः । विभावानित्यभावेऽपि ततो नित्यस्वभाववान् ॥ ३० ॥**

उपाधिरिति–आचारादौ अदः श्रुतं–यदुत उपाधिः कर्मणैव स्यात् " कम्मुणा उवाही जायइ त्ति " वचनात् । ततो विभावानां मिथ्यात्वगुणस्थानादारभ्यायोगिगुणस्थानं यावत् प्रवर्तमानानामौपाधिकभावानामनित्यभावेऽपि स्वभाववानात्मा नित्यस्तस्योपाध्यजनितत्वादुपाधिनिमित्तका अप्यात्मनो भावास्तद्रूपा एव युज्यन्ते, इति चेत्सत्यं, शुद्धनयदृष्ट्या-

त्मपुद्गलयोः स्वस्वशुद्धभावजननचरितार्थत्वे संयोगजभावस्य भित्तौ खटिकाश्वैत्यमिव विभिद्यमानस्यैकत्राप्यनन्तभावने मिथ्यात्वात् ॥ ३० ॥

द्रव्यादेः स्याद्भेदेऽपि शुद्धभेदनयाद्विना । इत्थं व्युत्पादनं युक्तं नयसारा हि देशना ॥ ३१ ॥

द्रव्यादेरिति—द्रव्यादेः परिणामेभ्यः स्यात् कथंचिद्भेदेऽपि । शुद्धः केवलो यो भेदनयस्तद्वादिना । इत्थमुक्तरीत्या व्युत्पादनं युक्तं । नयसारा नयप्रधाना हि देशना शास्त्रे प्रवर्तते । अन्यथाऽनुयोगपरिणत आत्मापि योग उदीर्यत एव, परमात्मनोऽपि भगवत्यां प्रतिपादनादिति भावः ॥ ३१ ॥

योगलक्षणमित्येवं जानानो जिनशासने । परोक्षानि परीक्षेत परमानन्दमरूधीः ॥ ३२ ॥

योगलक्षणमिति—स्पष्टः ॥ ३२ ॥

॥ इति योगलक्षणद्वात्रिंशिका ॥ १० ॥



## ॥ अथ पातञ्जलयोगलक्षणविचारद्वात्रिंशिका ॥ ११ ॥

स्वकीयं योगलक्षणमन्यदीययोगलक्षणे विचारिते सति स्थिरीभवतीति तदर्थमयमारंभः—

**चित्तवृत्तिनिरोधं तु योगमाह पतञ्जलिः। द्रष्टुः स्वरूपावस्थानं यत्र स्यादविकारिणि ॥ १ ॥**

चित्तेति—पतञ्जलिस्तु चित्तवृत्तिनिरोधं योगमाह। तथा च सूत्रं—"योगश्चित्तवृत्तिनिरोध (१-२) इति"। तत्र चित्तपदार्थं व्याचष्टे-द्रष्टुः पुरुषस्य स्वरूपे चिन्मात्ररूपतायामवस्थानं यत्र यस्मिन् स्यात् अविकारिणि व्युत्पन्नविवेकख्यातेश्चित्संक्रमाभावात् कर्तृत्वाभिमाननिवृत्तौ प्रोन्मुक्तपरिणामेन। तथा च सूत्रं—"तदा द्रष्टुः स्वरूपा (पेऽ)वस्थानमिति" (१-३) ॥ १ ॥

**आपन्ने विषयाकारं यत्र चेन्द्रियवृत्तितः। पुमान् भाति तथा चन्द्रश्चलन्नीरे चलन् यथा ॥ २ ॥**

आपन्न इति—यत्र चेन्द्रियवृत्तित इन्द्रियवृत्तिद्वारा। विषयाकारमापन्ने विषयाकारपरिणते सति। पुमान् पुरुषः तथा भाति। यथा चलन्नीरे चलन् चन्द्रः स्वगतधर्माध्यारोपाधिष्ठानत्वेन प्रतीयत इत्यर्थः। तथा च सूत्रं—"वृत्तिसारूप्यमितरत्रेति" (१-४) ॥ २ ॥

**तच्चित्तं वृत्तयस्तस्य पञ्चतय्यः प्रकीर्तिताः। मानं भ्रमो विकल्पश्च निद्रा च स्मृतिरेव च ॥ ३ ॥**

तदिति–तच्चित्तं तस्य वृत्तिसमुदायलक्षणस्य अवयविनोऽवयवभूताः पञ्चतय्यो वृत्तयः प्रकीर्तिताः । तदुक्तं–"वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः" (सां २-३३) (यो १-५ अक्लिष्टाः) क्लिष्टाः क्लेशाक्रान्ताः तद्विपरीता अपि तावत्य एव । ता एवोद्दिशति–मानं प्रमाणं, भ्रमो, विकल्पो, निद्रा, च स्मृतिरेव च । तदाह–"प्रमाणविपर्ययविकल्पनिद्राः स्मृतयः" (१-६) ॥ ३ ॥

आसां क्रमेण लक्षणमाह–

मानं ज्ञानं यथार्थं स्यादतस्मिंस्तन्मतिर्भ्रमः । पुंसश्चैतन्यमित्यादौ विकल्पोऽवस्तुशाब्दधीः ॥ ४ ॥

मानमिति–मानं यथार्थं तत्त्वं तदवगाहि ज्ञानं स्यात् । तदाह–"अविसंवादि ज्ञानं प्रमाणमिति" । भ्रमोऽतस्मिंस्तदात्मकमिति तन्मतिः, यदाह–"विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठ (१-८)" संशयोऽपि स्थाणुर्वा पुरुषो वेत्यतद्रूपप्रतिष्ठत्वात्तत्रैवान्तर्भवति । पुंसश्चैतन्यमित्यादौ अवस्तुविषया शाब्दधीर्विकल्पः । अत्र हि देवदत्तस्य कम्बल इतिवच्छब्दजनिते ज्ञाने षष्ठ्यर्थो भेदोऽध्यवसीयते, तमिहाविद्यमानमपि समारोप्य प्रवर्ततेऽध्यवसायः । वस्तुतस्तु चैतन्यमेव पुरुष इति । तदाह–"शब्दज्ञानानुपाती वस्तुशून्यो (ऽसदर्थव्यवहारविषयो)विकल्प (१-९) " इति । भ्रमविशेष एवायमस्त्विति चेन्न, तथाविधशब्दजन्यजनकभावेनास्य विलक्षणत्वात्, विपयाभावज्ञानेऽपि प्रवृत्तेश्च । यत्नोक्तः–"वस्तुनस्तथात्वमनपेक्षमाणो योऽध्यवसायः स विकल्प इत्युच्यते " इति ॥ ४ ॥

निद्रा च वासनाभावप्रत्ययालंबना स्मृता । सुखादिविषया वृत्तिर्जागरे स्मृतिदर्शनात् ॥ ५ ॥

निद्रा चेति–अभावप्रत्ययालंबना भावप्रत्ययालंबनविरहिता वासना च निद्रा स्मृता। संततमुद्रिक्तत्वात्तमसः। समस्तविषयपरित्यागेन या प्रवर्तत इत्यर्थः। तदाह–"अभावप्रत्ययालंबना वृत्तिर्निद्रा" (१-१०)। इयं च जागरे जाग्रदवस्थायां स्मृतिदर्शनात् "सुखमहमस्वाप्सं" इति स्मृत्यालोचनात् सुखादिविषया वृत्तिः, स्वापकाले सुखाननुभवे तदा तत्स्मृत्यनुपपत्तेः ॥ ५ ॥

**तथानुभूतविषयासंप्रमोषः स्मृतिः स्मृता। आसां निरोधः शक्त्यान्तःस्थितिर्हेतौ बहिर्हतिः ॥ ६ ॥**

तथेति–तथाऽनुभूतविषयस्य प्रमाणविपर्ययविकल्पनिद्रानुभूतार्थस्य असंप्रमोषः संस्कारद्वारेण बुद्धावुपारोहः स्मृतिः स्मृता। तदाह–"अनुभूतविषयासंप्रमोषः स्मृतिरिति" (१–११)। आसामुक्तानां पंचानामपि वृत्तीनां। हेतौ स्वकारणे। शक्त्याशक्तिरूपतया। अन्तर्बाह्याभिनिवेशनिवृत्त्याऽन्तर्मुखतया स्थितिरवस्थानं बहिर्हतिः प्रकाशप्रवृत्तिनियमरूपविघातः। एतदुभयं निरोध उच्यते ॥ ६ ॥

**स चाभ्यासाच्च वैराग्यात्तत्राभ्यासः स्थितौ श्रमः। दृढभूमिः स च चिरं नैरन्तर्यादराश्रितः ॥ ७ ॥**

स चेति–स चोक्तलक्षणो निरोधश्च। अभ्यासात् वैराग्याच्च भवति। तदुक्तं–"अभ्यासवैराग्याभ्यां तन्निरोध इति" (१-१२)। तत्राभ्यासः, स्थितौ वृत्तिरहितस्य चित्तस्य स्वरूपनिष्ठे परिणामे, श्रमो यत्नः पुनः पुनस्तथात्वेन चेतसि निवेशनरूपः। तदाह–"तत्र स्थितौ यत्नोऽभ्यास इति" (१-१३)। स च चिरं चिरकालं नैरंतर्येण आदरेण चाश्रितो दृढभूमिः स्थिरो भवति। तदाह–स तु दीर्घकालनैरन्तर्यसत्कारसेवितो दृढभूमिरिति (१-१४) ॥ ७ ॥

या वशीकारसंज्ञा स्याद्दृष्टानुश्रविकार्थयोः । वितृष्णस्यापरं तत् स्याद्वैराग्यमनधीनता ॥ ८ ॥

येति—दृष्ट इहैवोपलभ्यमानः शब्दादिः, आनुश्रविकश्च अर्थो देवलोकादिः । अनुश्रूयते गुरुमुखादित्यनुश्रवो वेदः ततः प्रतीयमान आनुश्रविक इति व्युत्पत्तेः । तयोः । परिणामविरसत्वदर्शनात् । वितृष्णस्य विगतगर्द्धस्य या वशीकारसंज्ञा "ममैवैते वश्या नाहमेतेषां वश्यः" इत्येवं विमर्शात्मिका । तदपरं वक्ष्यमाणपरवैराग्यात्वाभास्यं वैराग्य स्यात् । अनधीनता फलतः पराधीनताजायरूपं । तदाह—"दृष्टानुश्रविकविषयवैतृष्ण्यस्य वशीकारसंज्ञा वैराग्यमिति" (१-१५) ॥ ८ ॥

तत्परं जातपुंख्यातेर्गुणवैतृष्ण्यसंज्ञकम् । यद्धि वैमुख्यमुत्पाद्य वैराग्यमुपयुज्यते ॥ ९ ॥

तदिति—जातपुंख्यातेरुत्पन्नगुणपुरुषविवेकख्यातेः । गुणवैतृष्ण्यसञ्ज्ञकं गुणेष्वपि तृष्णाजायलक्षणं । यथार्थाभिधानं परं प्रकृष्टं । तत् वैराग्य । तदाह—"तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यमिति (१-१६) " । प्रथमं हि विषयविषयं, द्वितीयं च गुणविषयमिति भेदः । यद्धि बाह्यविषये वैमुख्य दोषदर्शनजत्वात् प्रवृत्त्यजायलक्षणमुत्पाद्य वैराग्यमुपयुज्यते उपकाराशयक जयति ॥ ९ ॥

निरोधे पुनरभ्यासो जनयन् स्थिरतां दृढाम् । परमानन्दनिष्यन्दशान्तस्रोतःप्रदर्शनात् ॥ १० ॥

निरोध इति—निरोधे चित्तवृत्तिनिरोधे । अभ्यासः पुनर्दृढामविशयितां स्थिरतामवस्थितिलक्षणा जनयन् । परमानन्दनिष्यन्दस्यातिशयितसुखार्णवनिर्झरभूतस्य शान्तस्रोतसः शान्तरसप्रवाहस्य प्रदर्शनात् । उपयुज्यते इत्यन्वयः । तत्रैव सुखमग्नस्य मनसोऽन्यत्र गमनायोगात् । इयं च चित्तवृत्तिनिरोध इति योगलक्षणं सोपपत्तिकं व्याख्यातम् ॥ १० ॥

अथ तद्दूषयन्नाह–

न चैतद्युज्यते किञ्चिदात्मन्यपरिणामिनि । कूटस्थे स्यादसंसारोऽमोक्षो वा तत्र हि ध्रुवम् ॥ ११ ॥

न चैति–न चैतत् पूर्वोक्तं किंचित् अपरिणामिनि आत्मनि युज्यते । तत्रात्मनि हि कूटस्थे एकान्तिकस्वभावे सति । असंसारः संसाराभाव एव स्यात्, पुष्करपत्रवन्निर्लेपस्य तस्याविचलितस्वभावत्वात् । प्रकृतितद्विकारोपहितस्वभावे च तस्मिन् संसारदशायामभ्युपगम्यमाने । ध्रुवं निश्चितममोक्षो मोक्षाभावो वा स्यात्, मुक्तिदशायां पूर्वस्वभावस्य त्यागे कौटस्थ्यहानिप्रसंगात् ॥ ११ ॥

प्रकृतेरपि चैकत्वे मुक्तिः सर्वस्य नैव वा । जन्मायाश्च पुमर्थस्य कर्तव्यत्वमयुक्तिमत् ॥ १२ ॥

प्रकृतेरिति–प्रकृतेरपि चैकत्वेऽभ्युपगम्यमाने सर्वस्य मुक्तिः स्यात्, नैव वा कस्यचित् स्यात् । एकं प्रति विलीनोपधानायास्तस्याः सर्वान्प्रति तथात्वात्, एकं प्रत्यतादृश्याश्च सर्वान् प्रत्यतथात्वात् । अन्यथा स्वभावभेदे प्रकृतिभेदप्रसंगात् । किं चात्मनोऽव्याप्रियमाणस्य भोगसंपादनार्थमेव प्रकृतिः प्रवर्तत इति भवतामभ्युपगमः । तदुक्तं–"द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः । (२-२०)तदर्थ एव दृश्यस्यात्मेति" (२-२१) । जन्मायाश्च तस्याः पुमर्थस्य कर्तव्यत्वमयुक्तिमत् । "पुरुषार्थो मया कर्तव्य" इत्येवंविधाध्यवसायो हि पुरुषार्थकर्तव्यता, तत्स्वभावे च प्रकृतेर्जडत्वव्याघात इति ॥ १२ ॥

अत्र स्वसिद्धान्ताशयं प्रकटयन् पूर्वपक्षी शंकते—

नतु चित्तस्य वृत्तीनां सदा ज्ञाननिबन्धनात् । चिच्छायासंक्रमाद्धेतोरात्मनोऽपरिणामिता ॥ १३ ॥

नन्विति—ननु चित्तस्य वृत्तीनां प्रमाणादिरूपाणां । सदा सर्वकालमेव । ज्ञाननिबन्धनात् परिच्छेदहेतोः । चिच्छायासंक्रमाद्धेतोर्लिंगात् आत्मनोऽपरिणामिताऽनुमीयते । इदमुक्तं भवति—पुरुषस्य चिद्रूपस्य सर्वदाधिष्ठातृत्वेन सिद्धस्य यदन्तरंगं निर्मलं ज्ञेयं सत्त्वं तस्यापि सदैव व्यवस्थितत्वाचयेनार्थेनोपरक्तं भवति तथाविधस्य दृश्यस्य चिच्छायासंक्रान्तिसद्भावात् सदा ज्ञातत्वं सिद्धं भवति । परिणामित्वे त्वात्मनश्चिच्छायासंक्रमस्यासार्वदिकत्वात् सदा ज्ञातत्वं न स्यादिति । तदिदमुक्तं—"सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वादिति" (४-१८) ॥ १३ ॥

ननु चित्तमेव सत्त्वोत्कर्षाद्यदि प्रकाशकं तदा तस्य स्वप्रकाशरूपत्वादर्थस्येवात्मनोऽपि प्रकाशकत्वेन व्यवहारोपपत्तौ किं ग्रहीत्रन्तरेणेत्यत आह—

स्वाभासं खलु नो चित्तं दृश्यत्वेन घटादिवत् । तदन्यदृश्यतायां चानवस्थास्मृतिसंकरौ ॥ १४ ॥

स्वाभासमिति—चित्तं खलु नो नैव स्वाभासं स्वप्रकाश्यं किं तु द्रष्टृवेद्यम् । दृश्यत्वेन दृग्विषयत्वेन घटादिवत् । यद्यद्दृश्यं तत्तद्द्रष्टृवेद्यमिति व्याप्तेः । तदिदमुक्तं—" न तत्स्वाभासं दृश्यत्वात् (४-१९) अन्तर्बहिर्मुखव्यापारद्वयविरोधात्, तस्मिन्पाचकत्वद्वयस्यासंवेदनाच्च बहिर्मुखतयैवार्थनिष्ठत्वेन चित्तस्य संवेदनार्थनिष्ठमेव तत्कर्तृ न स्वनिष्ठमिति राजमार्तण्डः " ।

तथापि चित्तान्तरदृश्यं चित्तमस्त्वित्यत आह–तदन्यदृश्यतायां च चित्तान्तरदृश्यतायां च चित्तस्याभ्युपगम्यमानायां अनवस्थास्मृतिसंकरौ स्याताम् । तथाहि–यदि बुद्धिर्बुद्ध्यन्तरेण वेद्येत तदा सापि बुद्धिः स्वयं बुद्ध्या बुद्ध्यन्तरं प्रकाशयितुमसमर्थेति तस्या ग्राहकं बुद्ध्यन्तरं कल्पनीयं, तस्याप्यन्यदित्यनवस्थानात् पुरुषायुषःसहस्रेणापि अर्थप्रतीतिर्न स्यात् । न हि प्रतीतावप्रतीतायामर्थः प्रतीतो भवति । तथा स्मृतिसंकरोऽपि स्यात् एकस्मिन् रूपे रसे वा समुत्पन्नायां बुद्धौ तद्ग्राहिकाणामनन्तानां बुद्धीनामुत्पत्तेस्तज्जनितसंस्कारैर्युगपद्बह्वीषु स्मृतिषूत्पन्नासु कस्मिन्नर्थे स्मृतिरियमुत्पन्नेति ज्ञातुमशक्यत्वात् । तदाह–"एकसमये चोभयानवधारणं (४-२०)॥चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसंगः स्मृतिसंकरश्चेति"॥ (४-२१)१४

नन्वेवं कथं विषयव्यवहार इत्यत्राह–

**अङ्गाङ्गिभावचाराभ्यां चितिरप्रतिसंक्रमा । द्रष्टृदृश्योपरक्तं तच्चित्तं सर्वार्थगोचरम् ॥ १५ ॥**

अंगेति–चितिः पुरुषरूपा चिच्छक्तिः । अंगांगिभावचाराभ्यां परिणामपरिणामिभावगमनाभ्यां । अप्रतिसंक्रमा अन्येनासंकीर्णा । यथा हि गुणाः स्वबुद्धिगमनलक्षणे परिणामेऽङ्गिनमुपसंक्रामन्ति तद्रूपतामिवापद्यन्ते, यथा चा ( वा ) लोकपरमाणवः प्रसरन्तो विषयं व्याप्नुवन्ति, नैवं चितिशक्तिः, तस्याः सर्वदैकरूपतया स्वप्रतिष्ठितत्वेन व्यवस्थितत्वादित्यर्थः । ततस्माच्चित्तसन्निधाने बुद्धेस्तदाकारतापत्तौ चेतनायामिवोपजायमानायां बुद्धिवृत्तिप्रतिसंक्रान्तायाश्च चिच्छक्तेर्बुद्ध्यविशिष्टतया संपत्तौ स्वसंबुद्ध्युपपत्तेरित्यर्थः । द्रष्टृदृश्याभ्यामुपरक्तं द्रष्टृरूपतामिवापन्नं गृहीतविषयाकारपरिणामं च चित्तं सर्वार्थगोचरं सर्वविषयग्रहणसमर्थं भवति । तदुक्तं–"चितेरप्रतिसंक( ग )मायास्तदाकारापत्तौ स्वबुद्धिसंवेदनं

( ४-२२ ) द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ( ४-२३ )" यथा हि निर्मलं स्फटिकदर्पणाद्येव प्रतिबिम्बग्रहणसमर्थं एवं रजस्तमोभ्यामनभिभूतं सत्त्वं शुद्धत्वाच्चिच्छायाग्रहणसमर्थं, न पुनरशुद्धत्वाद्रजस्तमसी । ततो न्यग्भूतरजस्तमोरूपमङ्गितया सत्त्वं निश्चलप्रदीपशिखाकारं सदैवैकरूपतया परिणममानं चिच्छायाग्रहणसामर्थ्यादामोक्षप्राप्तेरवतिष्ठते । यथाऽयस्कान्तसन्निधाने लोहस्य चलनमाविर्भवति, एवं चिद्रूपपुरुषसन्निधाने सत्त्वस्याभिव्यंग्यमभिव्यज्यते चैतन्यमिति ॥ १५ ॥

इयं च द्विविधा चिच्छक्तिरित्याह—

**नित्योदिता त्वभिव्यंग्या चिच्छक्तिर्द्विविधा हि नः । आद्या पुमान् द्वितीया तु सत्त्वे तत्सन्निधानतः ॥१६॥**

नित्येति—नित्योदिता, तु पुनरभिव्यंग्या । द्विविधा हि नोऽस्माकं चिच्छक्तिः । आद्या नित्योदिता पुमान् पुरुष एव । द्वितीयाऽभिव्यंग्या तु तत्सन्निधानतः पुंसः सामीप्यात् सत्त्वे सत्त्वनिष्ठा । यत्रोक्तं—"अत एवास्मिन् दर्शने द्वे चिच्छक्ती नित्योदिता अभिव्यंग्या च । नित्योदिता चिच्छक्तिः पुरुषः तत्सन्निधानादभिव्यक्ताभिव्यंग्यं चैतन्यं सत्त्वमभिव्यंग्या चिच्छक्तिरिति" ॥ १६ ॥

इत्थं च भोगोपपत्तिमप्याह—

**सत्त्वे पुंस्थितचिच्छायासमाऽन्या तदुपस्थितिः । प्रतिबिम्बात्मको भोगः पुंसि भेदाग्रहादयम् ॥ १७ ॥**

सत्त्व इति—सत्त्वे बुद्धेः सात्त्विकपरिणामे । पुंस्थिता या चिच्छाया तत्समा याऽन्या सा स्वकीयचिच्छाया । तस्या उप-

स्थितिरभिव्यक्तिः । प्रतिबिंबात्मको भोगः । अन्यत्रापि हि प्रतिबिंबे प्रतिबिंब्यमानच्छायासदृशच्छायांतरोद्भव एव प्रतिबिंबशब्देनोच्यते । पुंसि पुनरयं भोगो भेदाग्रहादत्यन्तसान्निध्येन विवेकाग्रहणाद्व्यपदिश्यते । यत्तु "व्यापकस्यातिनिर्मलस्य चात्मनः कथं सत्त्वे प्रतिबिंबनमिति तन्न, व्यापकस्याप्याकाशस्य दर्पणादावप्रकृष्टनैर्मल्यवति च जलादावादित्यादीनां प्रतिबिंबदर्शनात्, स्वस्थितचिच्छायासदृशचिच्छायाभिव्यक्तिरूपस्य प्रतिबिंबस्य प्रतिबिंबान्तरवैलक्षण्याच्चेति भोजः" ॥१७॥

**इत्थं प्रत्यात्मनियतं बुद्धितत्त्वं हि शक्तिमत् । निर्वाहे लोकयात्रायास्ततः क्वातिप्रसञ्जनम् ॥ १८ ॥**

इत्थमिति–इत्थमुक्तप्रकारेण । प्रत्यात्मनियतं आत्मानमात्मानं प्रति नियतफलसंपादकं । बुद्धितत्वं हि लोकयात्राया लोकव्यवहारस्य । निर्वाहे व्यवस्थापने । शक्तिमत् समर्थं । ततः क्वातिप्रसंजनं योगादेकस्य मुक्तावन्यस्यापि मुक्त्यापत्तिरूपं । प्रकृतेः सर्वत्रैकत्वेऽपि बुद्धिव्यापारभेदेन भेदोपपत्तेः । तथा च सूत्रं–"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वादिति" ( २-२२ ) ॥ १८ ॥

यच्चोक्तं जडायाश्च पुमर्थस्येत्यादि तत्राह–

**कर्तव्यत्वं पुमर्थस्यानुलोम्यप्रातिलोम्यतः । प्रकृतौ परिणामानां शक्ती स्वाभाविके उभे ॥ १९ ॥**



कर्तव्यत्वमिति–पुमर्थस्य कर्तव्यत्वं प्रकृतौ परिणामानां महदादीनां । आनुलोम्यप्रातिलोम्यत उभे स्वाभाविके शक्ती । न त्वन्यत् । महदादिमहाभूतपर्यन्तः खल्वस्या बहिर्मुखतयानुलोमः परिणामः, पुनः स्वकारणानुप्रवेशद्वारेणा-

सिद्धान्तः प्रतिलोमः परिणामः, इत्थं च पुरुषस्य भोगपरिसमाप्तेः सहजशक्तिद्वयवत्त्वात् कृतार्था प्रकृतिः, न पुनः परिणाममारभते। एवंविधायां च पुरुषार्थकर्तव्यतायां प्रकृतेरेकत्वेन कर्तव्याध्यवसायाभावेऽपि न काचिदनुपपत्तिरिति ॥१९॥

ननु यदि प्रतिलोमशक्तिरपि सहजैव प्रधानस्यास्ति तत्किमर्थं योगिभिर्मोक्षार्थं यत्नः क्रियते ? मोक्षस्य चानर्थनीयत्वे सदुपदेशकशास्त्रस्यानर्थक्यमित्यत आह–

न चैवं मोक्षशास्त्रस्य वैयर्थ्यं प्रकृतेर्यतः । ततो दुःखनिवृत्त्यर्थं कर्तृत्वस्मयवर्जनम् ॥ २० ॥

न चेति–न चैवं मुक्तौ प्रकृतेरेव सामर्थ्ये मोक्षशास्त्रस्य वैयर्थ्यमानर्थक्यं । यतो यस्मात्ततो मोक्षशास्त्राद्दुःखनिवृत्त्यर्थं दुःखनाशाय प्रकृतेः प्रधानस्य कर्तृत्वस्मयस्य कर्तृत्वाभिमानस्य वर्जनं निवृत्तिर्भवति । अनादिरेव हि प्रकृतिपुरुषयोर्भोक्तृभोग्यभावलक्षणः सम्बन्धः । तस्मिन् सति व्यक्तमचेतनायाः प्रकृतेः कर्तृत्वाभिमानाद्दुःखानुभवे सति कथमिव दुःखनिवृत्तिरात्यन्तिकी मम स्यादिति भवत्येवाध्यवसायः । अतो दुःखनिवृत्त्युपायोपदेशकशास्त्रोपदेशापेक्षाप्यस्य युक्तिमतीति ॥ २० ॥

व्यक्तं कैवल्यपादेऽदः सर्वं साध्विति चेन्न तत् । इत्थं हि प्रकृतेर्मोक्षो न पुंसस्तदसौ वृथा ॥ २१ ॥

व्यक्तमिति–कैवल्यपादे योगानुशासनचतुर्थपादेऽद एतत् । व्यक्तं प्रकटं । सर्वमखिलं । साधु निर्दोषमिति । समाधत्ते–इति चेन्न, तत् यत् प्राक् प्रपञ्चितं । हि यत एवमुक्तरीत्या । प्रकृतेर्मोक्षः स्यात् । तस्या एव कर्तृत्वाभिमानानि-

वृत्त्या दुःखनिवृत्त्युपपत्तेः, न पुंसस्तस्यावद्धत्वेन मुक्त्ययोगात्, मुचेर्बन्धनविश्लेषार्थत्वात्। तत्तस्माददो वक्ष्यमाणं त्रव-ग्रन्थोक्तं वृथा कंठशोषमात्रफलम् ॥ २१ ॥

**पञ्चविंशतितत्त्वज्ञो यत्र तत्राश्रमे रतः। जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः ॥ २२ ॥**

पंचविंशतीति—अत्र हि पंचविंशतितत्त्वज्ञानात् पुरुषस्यैव मुक्तिरुक्ता सा च न संभवतीति। न च भोगव्यपदेशव-न्मुक्तिव्यपदेशोऽप्युपचारादेव पुंसि संभवतीति वाच्यं, एवं हि तत्र चैतन्यस्याप्युपचारेण सुवचत्वापत्तेः। वाधकाभावान्न तत्र तस्योपचार इति चेत्तत्र कृत्यादिसामानाधिकरण्यस्याप्यनुभूयमानस्य किं वाधकं? येन तेषां भिन्नाश्रयत्वं कल्प्यते। आत्मनः परिणामित्वापत्तिर्वाधिकेति चेन्न, तत्परिणामित्वेऽप्यन्वयानपायात्। अन्यथा चित्तस्यापि तदनापत्तेः। प्रति-क्षणं चित्तस्य नश्वरत्वोपलब्धेः। अतीतानागतं स्वरूपतोऽस्त्यध्वभेदो ध(द्वा)र्माणां (४-१२)ते व्यक्तसूक्ष्मगुणात्मानः (४-१३) परिणामैकत्वाद्वस्तुतत्त्वमिति (४-१४) सूत्रपर्यालोचनाद्धर्मभेदेऽपि तेषामंगांगिभावपरिणामैकत्वान्न चित्ता-न्वय इति चेत्तदेतदात्मन्येव पर्यालोच्यमानं शोभते, कूटस्थत्वश्रुतेः शरीरादिभेदपरत्वेनाप्युपपत्तेरिति सम्य-ग्विभावनीयम् ॥ २२ ॥

किं च—

**बुद्ध्या सर्वोपपत्तौ च मानमात्मनि मृग्यते। संहत्यकारिता मानं पारार्थ्यनियता च न ॥ २३ ॥**

मुख्येति–बुद्ध्या महत्त्वेन सर्वोपपत्तौ सकललोकयात्रानिर्वाहे च सति । आत्मनि मानं प्रमाणं मृग्यते । कृत्याश्रयव्यतिरिक्ते आत्मनि प्रमाणमन्वेषणीयमित्यर्थः । न च पारार्थ्यनियता परार्थत्वव्याप्या । संहत्यकारिता संभूयमिलितार्थक्रियाकारिता । मानमतिरिक्तात्मनि प्रमाणं यत्संहत्यार्थक्रियाकारि तत्परार्थं दृष्टं, यथा शय्याशयनासनादयः । सत्त्वरजस्तमांसि च चित्तलक्षणपरिणामभाञ्जि संहत्यकारीणि अतः परार्थानि । यश्च परः स पुरुष इति । तदुक्तं–" तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वादिति" ( ४-२४ ) ॥ २३ ॥

एव इत्याह–

सत्त्वादीनामपि स्वाङ्गिन्युपकारोपपत्तितः । बुद्धिर्नामैव पुंसस्तत् स्याच्च तत्त्वान्तरव्ययः ॥ २४ ॥

सत्त्वादीनामिति–सत्त्वादीनां धर्माणां स्वांगिन्यपि स्वाश्रयेऽपि । उपकारोपपत्तितः फलाधानसंभवात्फलनियमे मानाभावात् सत्त्वादौ संहत्यकारित्वस्य विलक्षणत्वात् । अन्यथा असंहतरूपपरासिद्धेर्धर्माणां साध्यत्वव्यासेश्च बुद्ध्यैव सफलत्वात् नैवमात्मा कश्चिदतिरिक्तः सिध्येदिति न्यायः । तत्तस्माद्बुद्धिः पुंसः पुरुषस्यैव नाम स्यात् । च पुनस्तत्त्वान्तरव्ययोऽहंकारादितत्त्वोच्छेदः स्यात् ॥ २४ ॥

तथाहि–

व्यापारभेदादेकस्य वायोः पञ्चविधत्ववत् । अहंकारादिसंज्ञानोपपत्तिसुकरत्वतः ॥ २५ ॥

व्यापारेति–एकस्य वायोर्व्यापारभेदादूर्ध्वगमनादिव्यापारभेदात् पंचविधत्ववत्पंच वायवः प्राणापानादिभेदादिति व्यपदेशवत् । अहंकारादिसंज्ञानानामुपपत्तेः सुकरत्वतः सौकर्यात् । तथाहि–बुद्धिरेवाहंकारव्यापारं जनयन्ती अहंकार इत्युच्यतां । सैव च प्रसुप्तस्वभावा साधिकारा प्रकृतिरिति व्यपदिश्यताम् । किमन्तर्गडुतत्त्वान्तरपरिकल्पनयेति ॥ २५ ॥

पुंसश्च व्यञ्जकत्वेऽपि कूटस्थत्वमयुक्तिमत् । अधिष्ठानत्वमेतच्चेत्तदेत्यादि निरर्थकम् ॥ २६ ॥

पुंसश्चेति–पुंसः पुरुषस्य च व्यञ्जकत्वेऽभ्युपगम्यमाने कूटस्थत्वमयुक्तिमदसंगतं । अभिव्यञ्जकत्वं ह्यभिव्यक्तिजनकत्वं । तथा च " अकारणमकार्यं च पुरुष " इति वचनं व्याहन्येतेति भावः । अधिष्ठानत्वमभिव्यक्तिदेशाश्रयत्वं एतद्व्यंजकत्वं, पुरुषस्तु सदैकरूप इति चेत्तर्हि तदेत्यादि " तदा द्रष्टुः स्वरूपावस्थानमिति " ( १-३ ) सूत्रं निरर्थकं, तदेत्यस्य व्यवच्छेद्याभावात् । काल्पनिकत्वे चैतद्विषयस्य घटादिव्यवहारविषयस्यापि तथात्वापत्तौ शून्यवादिमतप्रवेश इति भावः ॥ २६ ॥

निमित्तत्वेऽपि कौटस्थ्यमथास्यापरिणामतः । स्याद्भेदो धर्मभेदेन तथापि भवमोक्षयोः ॥ २७ ॥

निमित्तत्वेऽपीति–अथास्यात्मनो निमित्तत्वेऽपि । सत्त्वनिष्ठामभिव्यंग्यां चिच्छक्तिं प्रति । अपरिणामतः परिणामाभावात् । कौटस्थ्यमकारणमित्यस्यानुपादानकारणमित्यर्थात् उपादानकारणस्यैव परिणामित्वात् परिणामस्य चावस्थान्तरगमनलक्षणत्वादिति भावः । तथापि भवमोक्षयोः संसारापवर्गयोः । धर्मभेदेन भोगनिमित्तानिमित्तत्वधर्मभेदेन स्यात् कथं-

विभेद आवश्यकः । मोक्षेऽपि पूर्वस्वभावसत्त्वे कारणान्तराभावाच्च भोग इति को भेद इति चेत् सौम्य ! कथं तर्हि न भयमोक्षोभयस्वभावे विरोधः ? । उभयैकस्वभावस्वाभाव्यमिति चेदङ्गान्तरोक्तमेव स्याद्वाद इति किं वृथा खिद्यसे ॥ २३ ॥

प्रसंगतादवस्थ्यं च बुद्धेर्भेदेऽपि तत्त्वतः । प्रकृत्यन्ते लये मुक्तेर्न चेदव्याप्यवृत्तिता ॥ २४ ॥

प्रसंगेति—बुद्धेर्भेदेऽपि प्रत्यात्मनियतत्वेऽप्यभ्युपगम्यमाने । तत्त्वतः परमार्थतः । प्रकृत्यन्ते प्रकृतिविश्रान्ते लये बुद्धिध्वंसे सति । प्रसंगतादवस्थ्यं एकस्य मुक्तावन्यस्यापि तदापत्तिरित्यस्यापरिहार एव, प्रकृतेरेव मुक्तेरभ्युपगम्यमानत्वात्, तस्याश्च मुक्तत्वामुक्तत्वोभयविरोधात् । एकत्र वृक्षे संयोगतदभावयोरिव प्रकृतौ विभिन्नबुद्ध्यवच्छेदेन न मुक्तत्वामुक्तत्वयोर्विरोध इत्यत आह—चेद्यदि मुक्तेरव्याप्यवृत्तिता नाभ्युपगम्यत इति शेषः । तदभ्युपगमे च मुक्तेऽप्यमुक्तत्वव्यवहारापत्तिरेव दूषणं । किं चैवं मुक्तस्याप्यात्मनो भवस्थशरीरावच्छेदेन भोगापत्तिरिति तत्प्रकृतिनिवृत्तिरवश्यमभ्युपेयेति द्रष्टव्यम् ॥ २४ ॥

प्रधानभेदे चैतत्स्यात्कर्म बुद्धिगुणः पुमान् । स्याद्ध्रुवश्चाध्रुवश्चेति जयताज्जैनदर्शनम् ॥ २५ ॥

प्रधानेति—एकदेशिभिः प्रधानभेदे चाभ्युपगम्यमाने । आत्मभोगापवर्गनिर्वाहकमेतत् कर्म स्यात् । पुमान् पुरुषः बुद्धिगुणः स्यात् । बुद्धिलब्धिज्ञानानामनर्थान्तरत्वात् । स्यात् कथंचित् ध्रुवश्च द्रव्यतोऽध्रुवश्च पर्यायत इत्येवं जैनदर्शनं

जयतात् । दोषलवस्याप्यस्पर्शात् । ननु च पुंसो विषयग्रहणसमर्थत्वेनैव चिद्रूपत्वं व्यवतिष्ठत इति विकल्पात्मकबुद्धिगुणत्वं न युक्तं, अन्तर्बहिर्मुखव्यापारद्वयविरोधादिति चेन्न, अनुभूयमानक्रमिकैकोपयोगस्वभावत्वेन तद्विरोधादिति ॥ २९ ॥

**तथा च कायरोधादावव्याप्तं प्रोक्तलक्षणम् । एकाग्रतावधौ रोधे वाच्ये च प्राचि चेतसि ॥ ३० ॥**

तथा चेति—तथा च जैनदर्शनजयसिद्धौ च । प्रोक्तलक्षणं पतञ्जल्युक्तयोगलक्षणं । कायरोधादावव्याप्तं, आदिना वाग्निरोधादिग्रहः । एकाग्रतावधावेकाग्रतानिरोधमात्रसाधारणे च रोधे वाच्ये । प्राचि एकाग्रतायाः पृष्ठभाविनि । चेतस्यध्यात्मादिशुद्धेऽव्याप्तम् ॥ ३० ॥

**योगारम्भोऽथ विक्षिप्ते व्युत्थानं क्षिप्तमूढयोः । एकाग्रे च निरुद्धे च समाधिरिति चेन्न तत् ॥ ३१ ॥**

योगेति—अथ विक्षिप्ते चित्ते योगारम्भः क्षिप्तमूढयोश्चित्तयोर्व्युत्थानं । एकाग्रे च निरुद्धे च चित्ते समाधिरिति एकाग्रतापृष्ठभाविनश्चित्तस्यालक्ष्यत्वादेव न तत्राव्याप्तिः । क्षिप्तं हि रजस उद्रेकादस्थिरं बहिर्मुखतया सुखदुःखादिविषयेषु कल्पितेषु सन्निहितेषु वा रजसा प्रेरितं, तच्च सदैव दैत्यदानवादीनां । मूढं तमस उद्रेकात् कृत्याकृत्यविभागासंगतं क्रोधादिभिर्विरुद्धकृत्येष्वेव नियमितं, तच्च सदैव रक्षःपिशाचादीनां । विक्षिप्तं तु सत्त्वोद्रेकात् परिहृतदुःखसाधनेष्वेव शब्दादिषु प्रवृत्तं, तच्च सदैव देवानां । एतास्तिस्रश्चित्तावस्था न समाधावुपयोगिन्यः । एकाग्रतानिरुद्धरूपे द्वे एव सत्त्वोत्कर्षाद्यथोत्तरमवस्थितत्वाच्च समाधावुपयोगं भजेते इति चेन्न तत् ॥ ३१ ॥

योगारम्भेऽपि योगस्य निश्चयेनोपपादनात्। मदुक्तं लक्षणं तस्मात्परमानन्दकृत् सताम् ॥ ३२ ॥

योगेति—योगारम्भेऽपि योगप्रारम्भकालेऽपि । निश्चयेन निश्चयनयेन । योगस्योपपादनात्समर्थनात् । क्रियमाणं कृतमिति तदभ्युपगमात्। आद्यसमये तदनुत्पत्तावग्रिमसमयेष्वपि तदनुत्पत्त्यापत्तेः। वस्तुतो योगविशेषप्रारम्भकालेऽपि कर्मलयरूपफलान्यथानुपपत्त्या व्यवहारेणापि योगसामान्यसद्भावोऽवश्याभ्युपेय इति प्रागुक्तातिव्याप्तिर्न दूषणमिति पारिशेष्य । तस्मान्मदुक्तं लक्षणं मोक्षमुख्यहेतुव्यापार इत्येवं रूपं सतां व्युत्पन्नानामदुष्टत्वप्रतिपत्तिद्वारा परमानन्दकृत् ॥ ३२ ॥

॥ इति पातञ्जलयोगलक्षणविचारद्वात्रिंशिका ॥ ११ ॥

## ॥ अथ पूर्वसेवाद्वात्रिंशिका ॥ १२ ॥

इत्थं विचारितलक्षणस्य योगस्य प्रथमोपायभूतां पूर्वसेवामाह–

**पूर्वसेवा तु योगस्य गुरुदेवादिपूजनम् । सदाचारस्तपो मुक्त्यद्वेषश्चेति प्रकीर्तिताः ॥ १ ॥**

पूर्वसेवा त्विति–स्पष्टः ॥ १ ॥

**माता पिता कलाचार्य एतेषां ज्ञातयस्तथा । वृद्धा धर्मोपदेष्टारो गुरुवर्गः सतां मतः ॥ २ ॥**

मातेति–वृद्धाः श्रुतवयोवृद्धलक्षणाः । गुरुवर्गो गौरवबल्लोकसमुदायः ॥ २ ॥

**पूजनं चास्य नमनं त्रिसन्ध्यं पर्युपासनम् । अवर्णाश्रवणं नामश्लाघोत्थानासनार्पणे ॥ ३ ॥**

पूजनमिति–नमनं कदाचिद्द्रव्यतः तदभावेऽपि भावतो मनस्यारोपणेन । नाम्नः श्लाघा स्थानास्थानग्रहणाग्रहणाभ्यां । उत्थानासनार्पणे अभ्युत्थानासनप्रदाने आगतस्येति गम्यम् ॥ ३ ॥

**सर्वदा तदनिष्टेष्टत्यागोपादाननिष्ठता । स्वपुमर्थमनाबाध्य साराणां च निवेदनम् ॥ ४ ॥**

सर्वदेति–स्वपुमर्थं धर्मादिकमनाबाध्यानतिक्रम्य । यदि च तदनिष्टेभ्यो निवृत्तौ तदिष्टेषु च प्रवृत्तौ धर्मादयः पुरुषार्था बाधन्ते तदा न तदनुवृत्तिपरेण भाव्यं । किं तु पुरुषार्थाराधनपरेण, अतिदुर्लभत्वात् पुरुषार्थाराधनकालस्येत्यर्थः । साराणामुत्कृष्टानामलंकारादीनां निवेदनं समर्पणम् ॥ ४ ॥

तद्धित्तयोजनं तीर्थे तन्मृत्यनुमतेर्भिया । तदासनाद्यभोगश्च तद्बिंबस्थापनार्चने ॥ ५ ॥

तद्वित्तेति–तद्वित्तस्य गुरुवर्गोलंकारादिरूपस्य । योजने नियोगः । तीर्थे देवतायतनादौ । तन्मृत्यनुमतेस्तन्मरणानु-मोदनाद्भिया भयेन । तत्संभवे तन्मरणानुमतिप्रसंगात् । तदासनादीनां आसनशयनभोजनपात्रादीना अभोगोऽपरि-भोगः । तद्बिंबस्य स्थापनार्चने विन्यासपूजे ॥ ५ ॥

देवानां पूजनं ज्ञेयं शौचश्रद्धादिपूर्वकम् । पुष्पैर्विलेपनैर्धूपैर्नैवेद्यैः शोभनैः स्तवैः ॥ ६ ॥

देवानामिति–व्यक्तः ॥ ६ ॥

अधिमुक्तिवशान्मान्या अविशेषेण वा सदा । अनिर्णीतविशेषाणां सर्वे देवा महात्मनाम् ॥ ७ ॥

अधिमुक्तीति–अनिर्णीत कुतोऽपि मतिमोहादनिश्चितो विशेष इतरदेवतापेक्षोऽतिशयो यैस्तेषां । महात्मना परलोक-साधनप्रधानतया प्रशस्तात्मनां गृहिणां । सर्वे देवाः सदाऽविशेषेण पारगतहरिहरहिरण्यगर्भादिसाधारणवृत्त्या मान्या वा अथवा अधिमुक्तिवशादतिशायितश्रद्धानुसारेण ॥ ७ ॥

सर्वान् देवान्नमस्यन्ति नैकं देवं समाश्रिताः । जितेन्द्रिया जितक्रोधा दुर्गाण्यतितरन्ति ते ॥ ८ ॥

सर्वानिति–सर्वान् देवान् नमस्यन्ति नमस्कुर्वते । नैकं कंचन देवं समाश्रिता स्वमत्याभिनिवेशेन प्रतिपन्नवन्तः । जितेन्द्रिया निगृहीतहृषीकाः । जितक्रोधा, अभिभूतकोपाः । दुर्गाणि नरकपातादीनि व्यसनानि । अतितरन्ति अतिक्रामन्ति ते सर्वदेवनमस्कर्तारः ॥ ८ ॥

ननु सर्वेऽपि न मुक्तिप्रदायिन इति कथमविशेषेण नमस्करणीया इत्यत आह–

**चारिसञ्जीविनीचारन्यायादेवं फलोदयः। मार्गप्रवेशरूपः स्याद्विशेषेणादिकर्मणाम् ॥ ९ ॥**

चारीति–चारिसंजीविनीचारन्यायात्प्रागुपदर्शितात्। एवं सर्वदेवनमस्कारेऽनुषंगत इष्टप्राप्तौ, तत एव शुभाध्यवसायविशेषात्। मार्गप्रवेशरूपः शुद्धदेवभक्त्यादिलक्षणः। फलोदयः स्यात्। विशेषेणानुषंगप्राप्तवीतरागगुणाधिक्यपरिज्ञानेन। आदिकर्मणां प्रथममेवारब्धस्थूलधर्माचाराणां। ते ह्यत्यन्तमुग्धतया कंचन देवताविशेषमजानाना विशेषवृत्तेरद्यापि न योग्याः, किं तु सामान्यरूपाया एवेति ॥ ९ ॥

**अधिज्ञातविशेषाणां विशेषेऽप्येतदिष्यते। स्वस्य वृत्तविशेषेऽपि परेषु द्वेषवर्जनात् ॥ १० ॥**

अधीति–अधिज्ञातो विशेषो गुणाधिक्यं यैस्तेषां। विशेषेऽप्यर्हदादौ। एतत्पूजनमिष्यते। परेषु पूज्यमानव्यतिरिक्तेषु। द्वेषस्य मत्सरस्य वर्जनात्। स्वस्यात्मनः। वृत्तविशेषेऽप्याचाराधिक्येऽपि सति। देवतान्तराणि प्रतीत्य ॥ १० ॥

**नातुरापथ्यतुल्यं यद्दानं तदपि चेष्यते। पात्रे दीनादिवर्गे च पोष्यवर्गाविरोधतः ॥ ११ ॥**

नेति–यत् आतुरापथ्यतुल्यं ज्वरादिरोगविधुरस्य घृतादिदानसदृशं मुशलादिदानं दायकग्राहकयोरपकारि न भवति तद्दानमपि चेष्यते। पात्रे दीनादिवर्गे च पोष्यवर्गस्य मातापित्रादिपोषणीयलोकस्याविरोधतो वृत्तेरनुच्छेदात् ॥ ११ ॥

**लिंगिनः पात्रमपचा विशिष्य स्वक्रियाकृतः। दीनान्धकृपणादीनां वर्गः कार्यान्तराक्षमः ॥ १२ ॥**

लिङ्गिन इति—लिङ्गिनो व्रतस्थास्तथाविधनेपथ्यवन्तः सामान्यतः पात्रं आदिधार्मिकस्य । विशिष्य विशेषतोऽपचाः स्वयमपाचकाः, उपलक्षणात् परैरपाचयितारः पच्यमानाननुमन्तारश्च । स्वक्रियाकृतः स्वशास्त्रोक्तानुष्ठानाप्रमत्ताः । तदुक्तं—“व्रतस्था लिङ्गिनः पात्रमपचास्तु विशेषतः । स्वसिद्धान्ताविरोधेन वर्तन्ते ये सदैव हि ॥ १ ॥” दीनान्धकृपणादीनां वर्गः समुदायः कार्यान्तराक्षमो भिक्षातिरिक्तनिर्वाहहेतुव्यापारासमर्थः । यत उक्तं—“दीनान्धकृपणा ये तु व्याधिग्रस्ता विशेषतः । निःस्वाः क्रियान्तराशक्ता एतद्वर्गो हि मीलकः ॥ १ ॥” इति । दीनाः क्षीणसकलपुरुषार्थशक्तयः । अन्धा नयनरहिताः । कृपणाः स्वभावत एव सतां कृपास्थानं । व्याधिग्रस्ताः कुष्ठाद्यभिभूताः । निःस्वा निर्धना ॥ १२ ॥

सुदाक्षिण्य दयालुत्वं दीनोद्धारः कृतज्ञता । जनापवादभीरुत्वं सदाचारः प्रकीर्तिता ॥ १३ ॥

सुदाक्षिण्यमिति—सुदाक्षिण्यं गम्भीरधीरचेतसः प्रकृत्यैव परकृत्याभियोगपरता । दयालुत्वं निरुपधिपरदुःखप्रहाणेच्छा । दीनोद्धारो दीनोपकारव्यसनं । कृतज्ञता परकृतोपकारपरिज्ञानं । जनापवादान्मरणाभिर्विशिष्यमाणाद्भीरुत्वं भीतभावः ॥ १३ ॥

रागो गुणिनि सर्वत्र निन्दात्यागस्तथापदि । अदैन्यं सत्प्रतिज्ञत्वं सपत्तावपि नम्रता ॥ १४ ॥

राग इति—गुणिनि गुणवति पुंसि रागः । सर्वत्र अधन्यमध्यमोत्तमेषु निन्दात्यागः परिवादापनोदः । तथा आपदि विपत्तौ अदैन्यमदीनभावः । सत्प्रतिज्ञत्वं प्रतिपन्नक्रियानिर्वाहणं । संपत्तावपि विभवसमागमेऽपि नम्रता औचित्येन नमनशीलता ॥ १४ ॥

**अविरुद्धकुलाचारपालनं मितभाषिता । अपि कंठगतैः प्राणैरप्रवृत्तिश्च गर्हिते ॥ १५ ॥**

अविरुद्धेति–अविरुद्धस्य धर्माद्यप्रतिपन्थिनः कुलाचारस्य पालनं अनुवर्तनं । मितभाषिता प्रस्तावे स्तोकहितजल्पनशीलता । कंठगतैरपि प्राणैर्गर्हिते लोकनिन्दिते कर्मण्यप्रवृत्तिश्च ॥ १५ ॥

**प्रधानकार्यनिर्बन्धः सद्व्ययोऽसद्व्ययोज्झनम् । लोकानुवृत्तिरुचिता प्रमादस्य च वर्जनम् ॥ १६ ॥**

प्रधानेति–प्रधानकार्ये विशिष्टफलदायिनि प्रयोजने निर्बन्ध आग्रहः । सद्व्ययः पुरुषार्थोपयोगी वित्तविनियोगः । असद्व्ययस्य तद्विपरीतस्योज्झनं त्यागः । लोकानुवृत्तिर्लोकचित्ताराधना । उचिता धर्माविरुद्धा । प्रमादस्य मद्यपानादिरूपस्य च वर्जनम् ॥ १६ ॥

**तपश्चान्द्रायणं कृच्छ्रं मृत्युघ्नं पापसूदनम् । आदिधार्मिकयोग्यं स्यादपि लौकिकमुत्तमम् ॥ १७ ॥**

तप इति–लौकिकमपि लोकसिद्धमपि । अपिर्लोकोत्तरं संचिनोति। उत्तमं स्वभूमिकोचितशुभाध्यवसायपोषकम् ॥१७॥

**एकैकं वर्धयेद्ग्रासं शुक्ले कृष्णे च हापयेत् । भुञ्जीत नामावास्यायामेष चान्द्रायणो विधिः ॥ १८ ॥**

एकैकमिति–एकैकं वर्धयेद्ग्रासं कवलं । शुक्ले पक्षे प्रतिपत्तिथेरारभ्य यावत् पौर्णमास्यां पंचदश कवलाः । कृष्णे च पक्षे हापयेत् हीनं कुर्यात् एकैकं कवलं । ततो भुञ्जीत न अमावास्यायां, तस्यां सकलकवलक्षयात् । एष चान्द्रायणः चन्द्रेण वृद्धिभाजा क्षयभाजा च सहेयते गम्यते यत्तचन्द्रायणं तस्यायं विधिः करणप्रकार इति ॥ १८ ॥

सन्तापनादिभेदेन कृच्छ्रमुक्तमनेकधा । अकृच्छ्रादतिकृच्छ्रेषु हन्त सन्तारणं परम् ॥ १९ ॥

सन्तापनादीति–सन्तापनादिभेदेन कृच्छ्रं कृच्छ्रनामकं तपोऽनेकधोक्तं । आदिना पादसंपूर्णकृच्छ्रग्रहः । तत्र सन्तापनकृच्छ्रं यथा–"त्र्यहमुष्णं पिबेदम्बु त्र्यहमुष्णं घृतं पिबेत् । त्र्यहमुष्णं पिबेन्मूत्रं त्र्यहमुष्णं पिबेत्पयः ॥ १ ॥" इति । पादकृच्छ्रं त्वेतत्–"एकभक्तेन नक्तेन तथैवायाचितेन च । उपवासेन चैकेन पादकृच्छ्रं विधीयते ॥ १ ॥" इति । संपूर्णकृच्छ्रं पुनरेतदेव चतुर्गुणितमिति । अकृच्छ्रादकष्टात् । अतिकृच्छ्रेषु नरकादिपातफलेषु अपराधेषु । हन्तेति प्रत्यवधारणे । संतारणं संतरणहेतुः । परं प्रकृष्टं प्राणिनाम् ॥ १९ ॥

मासोपवासमित्याहुर्मृत्युघ्नं तु तपोधनाः । मृत्युञ्जयजपोपेतं परिशुद्धं विधानतः ॥ २० ॥

मासेति–मासं यावदुपवासो यत्र तत्तथा । इत्येतदाहुः । मृत्युघ्नं तु मृत्युघ्ननामकं तु । तपोधनास्तपःप्रधाना मुनयः । मृत्युंजयजपेन परमेष्ठिनमस्कारेणोपेतं सहितं । परिशुद्धमिहलोकाद्याशंसादिपरिहारेण । विधानतः कषायनिरोधब्रह्मचर्यदेवपूजादिरूपाद्विधानात् ॥ २० ॥

पापसूदनमप्येवं तत्तत्पापाद्यपेक्षया । चित्रमंत्रजपप्रायं प्रत्यापत्तिविशोधितम् ॥ २१ ॥

पापेति–पापसूदनमप्येवं परिशुद्धं विधानतश्च ज्ञेयं । तत्तद्विचित्ररूपं यत्पापादि साधुघातादि तदपेक्षया । यथार्य(र्जुन)मुनिराजस्यांगीकृतप्रव्रज्यस्य साधुवधस्मरणे तद्दिनप्रतिपन्नाभोजनाभिग्रहस्य षण्मासान् यावज्जातव्रतपर्यायस्य सम्यक्सं-

पन्नाराधनस्य किल न क्वचिद्दिने भोजनमभूदिति चित्रो नानाविधः " ह्रीं असिआउसा नम " इत्यादिमंत्रस्मरणरूपो मंत्रजपः प्रायो बहुलो यत्र तत् प्रत्यापत्तिः तत्तदपराधस्थानान्महता संवेगेन प्रतिक्रान्तिस्तया विशोधितं विशुद्धिमानीतम् ॥ २१ ॥

मोक्षः कर्मक्षयो नाम भोगसंक्लेशवर्जितः । तत्र द्वेषो दृढाज्ञानादनिष्टप्रतिपत्तितः ॥ २२ ॥

मोक्ष इति–दृढाज्ञानादबाध्यमिथ्याज्ञानात् । भवाभिष्वंगाभावेनानिष्टाननुबन्धिन्यपि मोक्षेऽनिष्टानुबन्धित्वेनानिष्टप्रतिपत्तेः ॥ २२ ॥

भवाभिनन्दिनां सा च भवशर्मोत्कटेच्छया । श्रूयन्ते चैतदालापा लोके शास्त्रेऽप्यसुन्दराः ॥ २३ ॥

भवेति–सा च मोक्षेऽनिष्टप्रतिपत्तिश्च । भवाभिनन्दिनामुक्तलक्षणानां । भवशर्मणो विषयसुखस्योत्कटेच्छया भवति, द्वयोरेकदोषजन्यत्वात् ॥ २३ ॥

मदिराक्षी न यत्रास्ति तारुण्यमदविह्वला । जडस्तं मोक्षमाचष्टे प्रिया स इति नो मतम् ॥ २४ ॥

मदिराक्षीति–लोकालापोऽयम् ॥ २४ ॥

वरं वृन्दावने रम्ये क्रोष्टुत्वमभिवाञ्छितम् । न त्वेवाविषयो मोक्षः कदाचिदपि गौतम ॥ २५ ॥

वरमिति–गौतमेति गालवस्य शिष्यामंत्रणं । ऋषिवचनमिदमिति शास्त्रालापोऽयम् ॥ २५ ॥

द्वेषोऽयमस्यनर्थाय तदभावस्तु देहिनाम् । भवानुत्कटरागेण सहजाल्पमलत्वतः ॥ २६ ॥

द्वेष इति—अयं मुक्तिविषयो द्वेषोऽस्यनर्थाय बहुलसंसारवृद्धये । तदभावस्तु मुक्तिद्वेषाभावः पुनर्देहिनां प्राणिनां । भवानुत्कटरागेण भवोत्कटेच्छाभावेन । सहजं स्वाभाविकं यदल्पमलत्वं ततः । मोक्षरागजनकगुणाभावेन तदभावेऽपि गाढतरमिथ्यात्वदोषाभावेन तद्द्वेषाभावो भवतीत्यर्थः ॥ २६ ॥

मलस्तु योग्यता योगकषायाख्यात्मनो मता । अन्यथाऽतिप्रसंगः स्याज्जीवत्वस्याविशेषतः ॥ २७ ॥

मलस्त्विति—मलस्तु योगकषायाख्यात्मनो योग्यता मता । तस्या एव बहुत्वाल्पत्वाभ्यां दोषोत्कर्षापकर्षोपपत्तेः । अन्यथा जीवत्वस्याविशेषतः सर्वत्र साधारणत्वादतिप्रसंगः मुक्तेष्वपि बन्धापत्तिलक्षणः स्यात् ॥ २७ ॥

प्रागबन्धान्न बन्धश्चेत् किं तत्रैव नियामकम् । योग्यतां तु फलोन्नेयां बाधते दूषणं न तत् ॥ २८ ॥

प्रागिति—प्राक् पूर्वमबन्धाद्बन्धाभावाज्जीवत्वस्याविशेषेऽपि न बन्धो मुक्तस्य चेत् । किं तत्रैव प्रागबन्धे एव नियामकं । योग्यतावैर्यं विना योग्यतां तु फलोन्नेयां फलबललकल्पनीयां तद्दूषणं न बाधते तत्र कुतो न योग्यता ? इत्यत्र फलाभावस्यैवोत्तरत्वात् । युक्तं चैतत् बन्धस्य बध्यमानयोग्यतापेक्षत्वनियमाद्वस्त्रादीनां मंजिष्ठादिरागरूपबन्धने तथादर्शनात् वैचित्र्येण फलभेदोपपत्तेस्तस्या अन्तरङ्गत्वात्तत्परिपाकार्थमेव हेत्वन्तरापेक्षणादित्याचार्याः ॥ २८ ॥

दिदृक्षा भवबीज चाविद्या चानादिवासना । मंग्येषैवाश्रिता सांख्यशैववेदान्तिसौगतैः ॥ २९ ॥

दिदृक्षेति—पुरुषस्य प्रकृतिविकारान् द्रष्टुमिच्छा दिदृक्षा सैवेयमिति सांख्याः । भवबीजमिति शैवाः । अविद्येति वेदान्तिकाः । अनादिवासनेति सौगताः ॥ २९ ॥

**प्रत्यावर्तं व्ययोऽप्यस्यास्तदल्पत्वेऽस्य संभवः । अतोऽपि श्रेयसां श्रेणी किं पुनर्मुक्तिरागतः ॥ ३० ॥**

प्रत्यावर्तमिति—प्रत्यावर्तं प्रतिपुद्गलावर्तं । व्ययोऽपि अपगमोऽपि । अस्या योग्यतायाः । दोषाणां क्रमह्रासं विना भव्यस्य मुक्तिगमनाद्यनुपपत्तेः । तदल्पत्वे योग्यताल्पत्वे । अस्य मुक्त्यद्वेषस्य । संभव उपपत्तिः । तदुक्तं—"एवं चापगमोऽप्यस्याः प्रत्यावर्तं सुनीतितः । स्थित एव तदल्पत्वे भावशुद्धिरपि ध्रुवा ॥ १ ॥" अतोऽपि मुक्त्यद्वेषादपि । श्रेयसां श्रेणी कुशलानुबन्धसन्ततिः । किं पुनर्वाच्यं मुक्तिरागतस्तदुपपत्तौ ॥ ३० ॥

**न चायमेव रागः स्यान्मृदुमध्याधिकत्वतः । तत्रोपाये च नवधा योगिभेदप्रदर्शनात् ॥ ३१ ॥**

न चेति—न चायमेव मुक्त्यद्वेष एव रागः स्यात् मुक्तिरागो भवेदिति वाच्यं । मृदुमध्यादिकत्वतो जघन्यमध्यमोत्कृष्टभावात् । तत्र मुक्तिरागे उपाये च नवधा नवभिः प्रकारैर्योगिभेदस्य प्रदर्शनादुपवर्णनात् । तथाहि—मृदूपायो मृदुसंवेगः, मध्योपायो मृदुसंवेगः, अध्युपायो मृदुसंवेगः, । मृदूपायो मध्यसंवेगः, मध्योपायो मध्यसंवेगः, अध्युपायो मध्यसंवेगः । मृदूपायो अधिसंवेगः, मध्योपायोऽधिसंवेगः, अध्युपायोऽधिसंवेगश्चेति नवधा योगिन इति योगाचार्याः ॥ ३१ ॥

**द्वेषस्याभावरूपत्वादद्वेषश्चैक एव हि । रागात् क्षिप्रं क्रमाच्चातः परमानन्दसंभवः ॥ ३२ ॥**

द्वेषस्येति—अद्वेषश्च द्वेषस्याभावरूपत्वादेक एव हि । अतो न तेन योगिभेदोपपत्तिरित्यर्थः । फलभेदेनापि भेदमुपपादयति—ततो मुक्तिरागात् क्षिप्रमनतिव्यवधानेन अतो मुक्त्यद्वेषात्क्रमेण मुक्तिरागापेक्षया बहुवारपरंपरालक्षणेन परमानन्दस्य निर्वाणसुखस्य संभवः ॥ ३२ ॥ इति पूर्वसेवाद्वात्रिंशिका ॥ १२ ॥

## ॥ अथ मुक्त्यद्वेषप्राधान्यद्वात्रिंशिका ॥ १३ ॥

उक्तेषु पूर्वसेवाभेदेषु मुक्त्यद्वेषं प्राधान्येन पुरस्कुर्वन्नाह–

**उक्तभेदेषु योगीन्द्रैर्मुक्त्यद्वेषः प्रशस्यते । मुक्त्युपायेषु नो चेष्टा भवनायैव यत्ततः ॥ १ ॥**

उक्तभेदेष्विति–भवनायैव विनाशनिमित्तमेव तद्धि भयोपायोत्कटेच्छया स्यात् । सा च न मुक्त्यद्वेष इति मुक्त्युपायभवनाभावप्रयोजकोऽयम् ॥ १ ॥

**विषान्नतृप्तिसदृशं तद्यतो भवदुर्ग्रहः । उक्तः शास्त्रेषु शस्त्राग्निव्यालदुर्ग्रहसन्निभः ॥ २ ॥**

विषेति–तन्मुक्त्युपायभवनं विषान्नतृप्तिसदृशम् आपाततः सुखाभासहेतुत्वेऽपि बहुतरदुःखानुबन्धित्वात् । यद्यस्माद्व्रतानां दुर्ग्रहोऽसम्यगङ्गीकार उक्तः शास्त्रेषु योगस्वरूपनिरूपकग्रन्थेषु शस्त्राग्निव्यालानां यो दुर्ग्रहो दुर्गृहीतत्वं तेन सन्निभः सदृशोऽसुन्दरपरिणामत्वात् ॥ २ ॥

ननु दुर्गृहीतादपि श्रामण्यात्सुरलोकलाभः केषांचिद्भवतीति कथमत्रासुन्दरतेत्यत्राह–

**ग्रैवेयकाप्तिरप्यस्माद्विपाकविरसाऽहिता । मुक्त्यद्वेषश्च तत्रापि कारणं न क्रियैव हि ॥ ३ ॥**

ग्रैवेयकाप्तिरिति–अस्माद्व्रतदुर्ग्रहात् । ग्रैवेयकाप्तिरपि शुद्धसमाचाररतेषु साधुषु चक्रवर्त्यादिभिः पूज्यमानेषु दृष्टेषु

संपन्नतरपूजास्पृहाणां तथाविधान्यकारणवतां च केषांचिद्व्यापन्नदर्शनानामपि प्राणिनां नवमग्रैवेयकप्राप्तिरपि विपाकविरसा बहुतरदुःखानुबन्धबीजत्वेन परिणतिविरसा अहिता अनिष्टा । तत्त्वतश्चौर्यार्जितबहुविभूतिवदिति द्रष्टव्यं । तत्रापि नवमग्रैवेयकप्राप्तावपि च मुक्त्यद्वेषः कारणं न केवला क्रियैव हि अखंडद्रव्यश्रामण्यपरिपालनलक्षणा । तदुक्तं-"अनेनापि प्रकारेण द्वेषाभावोऽत्र तत्त्वतः । हितस्तु यत्तदेतेऽपि तथाकल्याणभागिनः ॥ १ ॥ " इति ॥ ३ ॥

लाभाद्यर्थितयोपाये फले चाप्रतिपत्तितः । व्यापन्नदर्शनानां हि न द्वेषो द्रव्यलिंगिनाम् ॥ ४ ॥

लाभेति-व्यापन्नदर्शनानां हि द्रव्यलिंगिनां उपाये चारित्रक्रियादौ लाभाद्यर्थितयैव न द्वेषो रागसामग्र्यां द्वेषानवकाशात् । फले च मोक्षरूपेऽप्रतिपत्तित एव न द्वेषः । न हि ते मोक्षं स्वर्गादिसुखाद्भिन्नं प्रतीयन्ति यत्र द्वेषावकाशः स्यात् । स्वर्गादिसुखाभिन्नत्वेन प्रतीयमाने तु तत्र तेषां राग एव । वस्तुतो भिन्नस्य तस्य प्रतीतावपि स्वेष्टविघातशंकया तत्र द्वेषो न स्यादिति द्रष्टव्यम् ॥ ४ ॥

मुक्तौ च मुक्त्युपाये च मुक्त्यर्थं प्रस्थिते पुनः । यस्य द्वेषो न तस्यैव न्याय्यं गुर्वादिपूजनम् ॥ ५ ॥

मुक्तौ चेति-स्पष्टः ॥ ५ ॥

गुरुदोषवतः स्वल्पा सत्क्रियापि गुणाय न । भौतहन्तुर्यथा तस्य पदस्पर्शनिषेधनम् ॥ ६ ॥

गुर्विति-गुरुदोषवतोऽधिकदोषवतः । स्वल्पा स्तोका सत्क्रियापि सच्चेष्टापि गुणाय न भवति । यथा भौतहन्तुर्भस-

प्रतिपातकस्य तस्य भौतस्य पदस्पर्शनस्य चरणसंघट्टनस्य निषेधन । कस्यचित् खलु शबरस्य कुतोऽपि प्रस्तावात्तपोधनानां पादेन स्पर्शनं महतेऽनर्थाय संपद्यत इति श्रुतधर्मशास्त्रस्य कदाचिन्मयूरपिच्छैः प्रयोजनमजायत । यदाऽसौ निपुणमन्वेषमाणो न लेभे, तदा श्रुतमनेन यथा भौतसाधुसमीपे तानि सन्ति, ययाचिरे च तानि तेन तेभ्यः, परं न किंचिल्लेभे । ततोऽसौ शस्त्रव्यापारपूर्वकं तान्निगृह्य जग्राह तानि, पादेन स्पर्शं च परिहृतवान् । यथाऽस्य पादस्पर्शपरिहारो गुणोऽपि शस्त्रव्यापारेणोपहतत्वान्न गुणः, किं तु दोष एव । एवं मुक्तिद्वेषिणां गुरुदेवादिपूजनं योजनीयम् ॥ ६ ॥

मुक्त्यद्वेषान्महापापनिवृत्त्या यादृशो गुणः । गुर्वादिपूजनात्तादृक् केवलान्न भवेत्क्वचित् ॥ ७ ॥

मुक्त्यद्वेषादिति—स्पष्टः ॥ ७ ॥

एकमेव ह्यनुष्ठानं कर्तृभेदेन भिद्यते । सरुजेतरभेदेन भोजनादिगतं यथा ॥ ८ ॥

एकमेवेति—एकमेव अनुष्ठानं देवतापूजनादि । कर्तृभेदेन चरमाचरमावर्तगतजन्तुकर्तृकतया । भिद्यते विशिष्यते । सरुजेतरयोः सरोगनीरोगयोर्भोक्त्रोर्भेदेन । भोजनादिगतं भोजनपानशयनादिगतं यथाऽनुष्ठानं । एकस्य रोगवृद्धिहेतुत्वात्, अन्यस्य बलोपचायकत्वादिति । सहकारिभेद एवाय न तु वस्तुभेद इति चेन्न, इतरसहकारिसमवधानित्वे न फलव्याप्यतापेक्षया तदवच्छेदकं कारणं भेदस्यैव कल्पनौचित्यात्तथैवानुभवादिति कल्पलतायां विपञ्चितत्वात् ॥ ८ ॥

भवाभिष्वंगतस्तेनानाभोगाच्च विषादिषु । अनुष्ठानत्रयं मिथ्या द्वयं सत्यं विपर्ययात् ॥ ९ ॥

भवेति—तेन कर्तृभेदादनुष्ठानभेदेन भेदनं । भवाभिष्वंगतः संसारसुखाभिलाषात् । अनाभोगतः सम्मूर्छनजप्रवृत्तितुल्यतया च । विषादिष्वनुष्ठानेषु मध्ये । अनुष्ठानत्रयमादिमं मिथ्या निष्फलं । द्वयमुत्तरं च सफलं । विपर्ययात् भवाभिष्वंगानाभोगाभावात् ॥ ९ ॥

**इहामुत्र फलापेक्षा भवाभिष्वङ्ग उच्यते । क्रियोचितस्य भावस्यानाभोगस्त्वतिलङ्घनम् ॥ १० ॥**

इहेति—प्रागेव शब्दार्थकथनाज्ज्ञातार्थोऽयम् ॥ १० ॥

**विषं गरोऽननुष्ठानं तद्धेतुरमृतं परम् । गुर्वादिपूजानुष्ठानमिति पञ्चविधं जगुः ॥ ११ ॥**

विषमिति—पंचानामनुष्ठानानामयमुद्देशः ॥ ११ ॥

**विषं लब्ध्याद्यपेक्षातः क्षणात्सच्चित्तमारणात् । दिव्यभोगाभिलाषेण गरः कालान्तरे क्षयात् ॥१२॥**

विषमिति—लब्ध्याद्यपेक्षातो लब्धिकीर्त्यादिस्पृहातो यदनुष्ठानं तद्विषमुच्यते । क्षणात्तत्कालं चित्तस्य शुभान्तः–करणपरिणामस्य नाशनात् तदात्तभोगेनैव तत्क्षयात् । अन्यदपि हि स्थावरजंगमभेदभिन्नं विषं तदानीमेव नाशयति । दिव्यभोगस्याभिलाष ऐहिकभोगनिरपेक्षस्य सतः स्वर्गसुखवांछालक्षणस्तेन अनुष्ठानं गर उच्यते । कालान्तरे भवान्तरलक्षणे क्षयाद्भोगात्पुण्यनाशेनानर्थसंपादनात् । गरो हि कुद्रव्यसंयोगजो विषविशेषः, तस्य च कालान्तरे विषविकारः प्रादुर्भवतीति उभयापेक्षाजनितमतिरिच्यते नोभयापेक्षायामप्यधिकस्य बलवत्त्वादिति संभावयामः ॥ १२ ॥

संमोहादननुष्ठानं सदनुष्ठानरागतः । तद्धेतुरमृतं तु स्याच्छ्रद्धया जैनवर्त्मनः ॥ १३ ॥

संमोहादिति–संमोहात् सन्निपातोपहतस्येव सर्वतोऽनध्यवसायादननुष्ठानमुच्यते, अनुष्ठानमेव न भवतीति कृत्वा । सदनुष्ठानरागतः सात्त्विकदेवपूजाद्याचारभावबहुमानादि धार्मिककालभाविदेवपूजाद्यनुष्ठानं तद्धेतुरुच्यते । मुक्त्यद्वेषेण मनाग् मुक्त्यनुरागेण वा शुभभावलेशसंगमादस्य सदनुष्ठानहेतुत्वात् । जैनवर्त्मनो जिनोदितमार्गस्य श्रद्धया इदमेव तत्त्वमित्यध्यवसायलक्षणया त्वनुष्ठानममृतं स्यात् अमरणहेतुत्वात् । तदुक्तं–"जिनोदितमिति त्वाहुर्भावसारमदः पुनः । संवेगगर्भमत्यन्तममृतं मुनिपुङ्गवाः ॥ १ ॥" ॥ १३ ॥

चरमे पुद्गलावर्ते तदेवं कर्तृभेदतः । सिद्धमन्यादृशं सर्वं गुरुदेवादिपूजनम् ॥ १४ ॥

चरम इति–निगमनं स्पष्टम् ॥ १४ ॥

सामान्ययोग्यतैव प्राक् पुंसः प्रवृत्ते किल । तदा समुचिता सा तु संपन्नेति विभाव्यताम् ॥ १५ ॥

सामान्येति–सामान्ययोग्यता मुक्त्युपायस्वरूपयोग्यता । समुचितयोग्यता तु तत्सहकारियोग्यतेति विशेषः । पूर्वं ह्येकान्तेन योग्यस्यैव देवादिपूजनमासीत्, चरमावर्ते तु समुचितयोग्यभावस्येति चरमावर्तदेवादिपूजनस्यान्यावर्तदेवादिपूजनादन्यादृशत्वमिति योगबिन्दुवृत्तिकारः ॥ १५ ॥

चतुर्थं चरमावर्ते प्रायोऽनुष्ठानमिष्यते । अनाभोगादिभावे तु जातु स्यादन्यथापि हि ॥ १६ ॥

चतुर्थमिति–चरमावर्तें प्रायो बाहुल्येन । चतुर्थं तद्धेतुनामकं । अनुष्ठानमिष्यते । अनाभोगादिभावे तु जातु कदाचिदन्यथाऽपि स्यादिति प्रायोग्रहणफलम् ॥ १६ ॥

शंकते–

**नन्वद्वेषोऽथवा रागो मोक्षे तद्धेतुतोचितः । आद्ये तत्स्यादभव्यानामन्त्ये न स्यात्तदद्विषाम् ॥ १७ ॥**

नन्विति–मुक्त्यद्वेषप्रयुक्तानुष्ठानस्य तद्धेतुत्वेऽभव्यानुष्ठानविशेषेऽतिव्याप्तिः, नवमग्रैवेयकप्राप्तेर्मुक्त्यद्वेषप्रयुक्तत्वप्रदर्शनात् । मुक्तिरागप्रयुक्तानुष्ठानस्य तत्त्वे तु मनाग् रागप्राक्कालीनमुक्त्यद्वेषप्रयुक्तानुष्ठानेऽव्याप्तिरित्यर्थः ॥ १७ ॥

**न चाद्वेषे विशेषस्तु कोऽपीति प्राग् निदर्शितम् । ईषद्रागाद्विशेषश्चेदद्वेषोपक्षयस्ततः ॥ १८ ॥**

न चेति–अद्वेषे विशेषस्तु न च कोऽप्यस्ति अभावत्वादिति प्राक् पूर्वद्वात्रिंशिकायां निदर्शितं । ईषद्रागाच्चेद्विशेषस्तर्हि तत एवाद्वेषस्योपक्षयः । विशेषणेनैव कार्यसिद्धौ विशेष्यवैयर्थ्यात् । इत्थं च मुक्त्यद्वेषेण मनाग् मुक्त्यनुरागेण वा तद्धेतुत्वमिति वचनव्याघात इति भावः ॥ १८ ॥

**उत्कटानुत्कटत्वाभ्यां प्रतियोगिकृतोऽस्त्वयम् । नैवं सत्यामुपेक्षायां देशमात्रवियोगतः ॥ १९ ॥**

उत्कटेति–अभव्यानां मुक्तौ उत्कटद्वेषाभावेऽप्यनुत्कटद्वेषो भविष्यति । अन्येषां तु द्वेषमात्राभावादेवानुष्ठानं तद्धेतुः स्यादिति पूर्वार्धार्थः । नैवं, उपेक्षायां सत्यां द्वेषमात्रस्य वियोगतः । अन्यथा स्वेष्टसांसारिकसुखविरोधित्वेनोत्कटोऽपि द्वेषस्तेषां मुक्तौ स्यादित्युत्तरार्धार्थः ॥ १९ ॥

समाधत्ते—

**सत्य बीजं हि तद्धेतोरेतदन्यतरार्जितः । मुक्त्यद्वेषो (क्रियारागो) न तेनातिप्रसंगः कोऽपि दृश्यते ॥२०॥**

सत्यमिति—तद्धेतोरनुष्ठानस्य हि बीजं । एतयोर्मुक्त्यद्वेषरागयोरन्यतरेणार्जितो जनितः क्रियारागः सदनुष्ठानरागः । तेनातिप्रसंगः कोऽपि न दृश्यते । अभव्यानामपि स्वर्गप्राप्तिहेतुमुक्त्यद्वेषसत्त्वेऽपि तस्य सदनुष्ठानरागाप्रयोजकत्वाद्बाध्य-फलापेक्षासहकृतस्य सदनुष्ठानरागानुबन्धित्वात् ॥ २० ॥

**अपि बाध्या फलापेक्षा सदनुष्ठानरागकृत् । सा च प्रज्ञापनाधीना मुक्त्यद्वेषमपेक्षते ॥ २१ ॥**

अपीति—बाध्या बाधनीयस्वभावा । फलापेक्षाऽपि सौभाग्यादिफलवांछापि । सदनुष्ठाने रागकृत् रागकारिणी । सा च-बाध्यफलापेक्षा च । प्रज्ञापनाधीना उपदेशायत्ता । मुक्त्यद्वेषमपेक्षते कारणत्वेन ॥ २१ ॥

यतः—

**अबाध्या सा हि मोक्षार्थशास्त्रश्रवणघातिनी । मुक्त्यद्वेषे तदन्यस्यां बुद्धिर्मार्गानुसारिणी ॥ २२ ॥**

अबाध्येति—अबाध्या हि सा फलापेक्षा । मोक्षार्थशास्त्रश्रवणघातिनी तत्र विरुद्धत्वबुद्ध्याधानाद्भ्रमदर्शनाच्च तच्छ्रवणं न स्वारसिकमिति भावः । तत्तस्मान्मुक्त्यद्वेषे सति अन्यस्यां बाध्यायां फलापेक्षायां समुचितयोग्यतावशेन मोक्षार्थशास्त्रश्रवणस्वारस्योत्पत्तौ बुद्धिर्मार्गानुसारिणी मोक्षपथाभिमुख्यशालिनी भवतीति भवति तेषां तीव्रपापक्षयात् सदनुष्ठानरागः ॥ २२ ॥

तत्तत्फलार्थिनां तत्तत्तपस्तंत्रे प्रदर्शितम् । मुग्धमार्गप्रवेशाय दीयतेऽप्यत एव च ॥ २३ ॥

तत्तदिति–तत्तत्फलार्थिनां सौभाग्यादिफलकांक्षिणां। तत्तत्तपो रोहिण्यादितपोरूपं। अत एव तंत्रे प्रदर्शितं। अत एव मुग्धानां मार्गप्रवेशाय दीयतेऽपि गीतार्थैः। यदाह–"मुद्धाण हियट्ठया सम्मं"। न ह्येवमत्र विषादित्वप्रसंगो न वा तद्धेतुत्वभंगः, फलापेक्षाया बाध्यत्वात्। इत्थमेव मार्गानुसरणोपपत्तेः ॥ २३ ॥

इत्थं च वस्तुपालस्य भवभ्रान्तौ न बाधकम्। गुणाद्वेषो न यत्तस्य क्रियारागप्रयोजकः ॥ २४ ॥

इत्थं चेति–इत्थं च मुक्त्यद्वेषविशेषोक्तौ च वस्तुपालस्य पूर्वभवे। साधुदर्शनेऽप्युपेक्षयाऽज्ञाततद्गुणरागस्य चौरस्य भवभ्रान्तौ दीर्घसंसारभ्रमणे न बाधकं। यद्यस्मात्तस्य गुणाद्वेषः क्रियारागप्रयोजको नाभूत्। इष्यते च तादृश एवायं तद्धेत्वनुष्ठानोचितत्वेन संसारह्रासकारणमिति ॥ २४ ॥

जीवातुः कर्मणां मुक्त्यद्वेषस्तदयमीदृशः। गुणरागस्य बीजत्वमस्यैवाव्यवधानतः ॥ २५ ॥
धारालग्नः शुभो भाव एतस्मादेव जायते। अन्तस्तत्त्वविशुद्ध्या च विनिवृत्ताग्रहत्वतः ॥ २६ ॥
अस्मिन् सत्साधकस्येव नास्ति काचिद्विभीषिका। सिद्धेरासन्नभावेन प्रमोदस्यान्तरोदयात् ॥ २७ ॥
चरमावर्तिनो जन्तोः सिद्धेरासन्नता ध्रुवम्। भूयांसोऽमी व्यतिक्रान्तास्तेष्वेको बिन्दुरम्बुधौ ॥ २८ ॥

मनोरथिकमित्थं च सुखमास्वादयन् भृशम् । पीड्यते क्रियया नैव बाढं तत्रानुरज्यते ॥ २९ ॥
प्रसन्नं क्रियते चेतः श्रद्धयोत्पन्नया ततः । मलोज्झितं हि कतकक्षोदेन सलिलं यथा ॥ ३० ॥
वीर्योल्लासस्ततश्च स्यात्ततः स्मृतिरनुत्तरा । ततः समाहितं चेतः स्थैर्यमप्यवलम्बते ॥ ३१ ॥
अधिकारित्वमित्थं चापुनर्बन्धकतां विना । मुक्त्यद्वेषक्रमेण स्यात् परमानन्दकारणम् ॥ ३२ ॥
जीयादुरित्याद्यारभ्याष्टश्लोकी सुगमा ॥ ३२ ॥

॥ इति मुक्त्यद्वेषप्राधान्यद्वात्रिंशिका ॥ १३ ॥

## ॥ अथापुनर्बन्धद्वात्रिंशिका ॥ १४ ॥

मुक्त्यद्वेषक्रमेणाधिकारित्वप्राप्तिर्भवतीति प्रागुक्तं तत्र पूर्वमपुनर्बन्धकमेव धर्माधिकारिणमाह–

**शुक्लपक्षेन्दुवत्प्रायो वर्धमानगुणः स्मृतः । भवाभिनन्दिदोषाणामपुनर्बन्धको व्यये ॥ १ ॥**

शुक्लेति–शुक्लपक्षेन्दुवदुज्ज्वलपक्षचन्द्रवत् । प्रायो बाहुल्येन । वर्धमानाः प्रतिकलमुल्लसन्तो गुणा औदार्यदाक्षिण्यादयो यस्य । भवाभिनन्दिदोषाणां प्रागुक्तानां क्षुद्रत्वादीनां । व्ययेऽपगमे सति । अपुनर्बन्धकः स्मृतः ॥ १ ॥

**अस्यैव पूर्वसेवोक्ता मुख्याऽन्यस्योपचारतः । अस्यावस्थान्तरं मार्गपतिताभिमुखौ पुनः ॥ २ ॥**

अस्यैवेति–अस्यैव अपुनर्बन्धकस्यैव । उक्ता गुर्वादिपूजालक्षणा पूर्वसेवा मुख्या कल्याणाशययोगेन निरुपचरिता । अन्यस्यापुनर्बन्धकातिरिक्तस्य सकृद्बन्धकादेः पुनः उपचारतः सा । तथाविधभववैराग्याभावात् । मार्गपतितमार्गाभिमुखौ पुनरस्यापुनर्बन्धकस्यावस्थान्तरं दशाविशेषरूपौ । मार्गो हि चेतसोऽवक्रगमनं भुजंगमनलिकायामतुल्यो विशिष्टगुणस्थानावाप्तिप्रगुणः स्वरसवाही क्षयोपशमविशेषः, तत्र प्रविष्टो मार्गपतितः । मार्गप्रवेशयोग्यभावापन्नश्च मार्गाभिमुख इति । न ह्येतावपुनर्बन्धकावस्थायाः परतरावस्थाभाजौ भगवदाज्ञावगमयोग्यतया पंचसूत्रकवृत्तावनयोरुक्तत्वात् ॥ २ ॥

**योग्यत्वेऽपि व्यवहितौ परे त्वेतौ पृथग् जगुः । अन्यत्राप्युपचारस्तु सामीप्ये बहुभेदतः ॥ ३ ॥**

योग्यत्वेऽपीति–परे त्वेतौ मार्गपतितमार्गाभिमुखौ । योग्यत्वेऽपि व्यवहितौ अपुनर्बन्धकापेक्षया दूरस्थाविति पृथगपुनर्बन्धकाद्भिन्नौ जगुः । अन्यत्रापि सकृद्बन्धकादावपि उपचारतस्तु पूर्वसेवायाः सामीप्येऽपुनर्बन्धकसन्निधानलक्षणे सति । महद्भेदतोऽतिभेदाभावात् ॥ ३ ॥

परिणामिनि कार्याद्धि सर्वथा नास्ति भिन्नता । तत्प्रकृत्या विनाप्यूहमन्यत्रैनां परे जगुः ॥ ४ ॥

परिणामिनीति–कार्यात् हि परिणामिनि सर्वथा भिन्नता नास्ति । यथा घटादेर्मृत्पिण्डादौ । एवमपुनर्बन्धकादेरपि सकृद्बन्धकादौ न सर्वथा भिन्नतेति भावनीयं । तदुक्तं–" कृतश्चास्या उपन्यासः शेषापेक्षोऽपि कार्यतः । आसन्नोऽप्यस्य बाहुल्यात्साऽन्यथेति प्रदर्शकः ॥ १ ॥" परे पुनरन्यत्र सकृद्बन्धकादावनाभोगवनगर्भत्वात्तत्त्वस्वरूपनिर्णायकोहापोहाद्यभावसंगतत्वादेनामुपचरिता पूर्वसेवां जगुः प्राहुः । प्राचि पक्षे कारणे कार्योपचारः, अत्र त्वनाभोगवनद्वाराऽमुख्यस्वरूप उपचार इति विशेषः ॥ ४ ॥

युक्तं चैतन्मले तीव्रे भवासङ्गो न हीयते । संक्लेशायोगतो मुख्या सान्यथा नेति हि स्थितिः ॥ ५ ॥

युक्तमिति–एतच्च एतदपि युक्तं । तीव्रेऽत्यन्तमुत्कटे । मले कर्मबन्धलक्षणे । भवासङ्गः संसारप्रतिबन्धः । न हीयते शेषजन्तोः । मनागपि हि तन्निवृत्तौ तस्यापुनर्बन्धकत्वमेव स्यादिति । संक्लेशायोगतः पुनरतितीव्रसंक्लेशाभावात् । सा पूर्वसेवा । मुख्या उत्तरोत्तरभववैराग्यादिकल्याणनिमित्तभावात् । अन्यथा नेति हि स्थितिः शास्त्रमर्यादा ॥ ५ ॥

१४ अपुनर्बन्ध



**एष्यद्भद्रां समाश्रित्य पुंसः प्रकृतिमीदृशीम् । व्यवहारः स्थितः शास्त्रे युक्तमुक्तं ततो ह्यदः ॥ ६ ॥**

एष्यद्भद्रामिति–ईदृशीं संक्लेशायोगविशिष्टां । एष्यद्भद्रां कल्याणानुबन्धिनीं । पुंसः प्रकृतिं समाश्रित्य । व्यवहारः पूर्वसेवादिरूपः । स्थितः प्रसिद्धः । शास्त्रे योगग्रन्थे । ततो ह्यद एतद्युक्तमुक्तं, यदुतान्यत्रोपचारत एव पूर्वसेवेति ॥ ६ ॥

**शान्तोदात्तस्तथैव स्यादाश्रयः शुभचेतसः । धन्यो भोगसुखस्येव वित्ताढ्यो रूपवान् युवा ॥ ७ ॥**

शान्तोदात्त इति–तथैवापुनर्बन्धकोचितैष्यद्भद्रप्रकृत्यैव । शान्तोदात्तः स्यात् । शान्तस्तथाविधेन्द्रियकषायविकारविकलः । उदात्त उच्चोच्चतराद्याचरणबद्धचित्तः । ततः कर्मधारयः । तथा शुभचेतसः शुद्धचित्तपरिणामस्य । आश्रयः स्थानं । धन्यः सौभाग्यादेयतादिना धनार्हः । भोगसुखस्येव शब्दरूपरसगन्धस्पर्शसेवालक्षणस्य यथाश्रयः । वित्ताढ्यो विभवनायकः । रूपवान् शुभशरीरसंस्थानः । युवा तरुणः पुमान् ॥ ७ ॥

**अङ्गाभावे यथा भोगोऽतात्त्विको मानहानितः । शान्तोदात्तत्वविरहे क्रियाप्येवं विकल्पजा ॥ ८ ॥**

अंगाभाव इति–अंगानां भोगांगानां रूपवयोवित्ताढ्यत्वादीनां वात्स्यायनोक्तानामभावे सति । यथा भोगोऽतात्त्विकोऽपारमार्थिकः । मानहानितः " अहं सुखी " इत्येवंविधप्रतिपत्तिलक्षणमानापगमादपूर्यमाणेच्छत्वेन तदनुत्थानाच्च । शान्तोदात्तत्वविरहे सति । एवं क्रियापि गुर्वादिपूजनारूपा । विकल्पजा विपर्यासजनिता । न तु तात्त्विकी, अन्तःसुखप्रवाहानुत्थानात् । तदुक्तं–" मिथ्याविकल्परूपं तु द्वयोर्द्वयमपि स्थितम् । स्वबुद्धिकल्पनाशिल्पिनिर्मितं न तु तत्त्वतः ॥१॥" ॥८॥

॥ ८२ ॥

क्रोधाद्यबाधितः शान्त उदात्तस्तु महाशयः । बीजं रूपं फलं चायमूहते भवगोचरम् ॥ ९ ॥

क्रोधादिति–पूर्वार्धं गतार्थं । अयं च शान्तोदात्तः । भवगोचरं संसारविषयं । बीजं कारणं । रूपं स्वरूपं । फलं च कार्यं । ऊहते विचारयति ॥ ९ ॥

तथाहि–

भेदे हि प्रकृतेर्नैक्यमभेदे च न भिन्नता । आत्मनां स्यात्स्वभावस्याप्येवं शबलतोचिता ॥ १० ॥

भेदे हीति–भेदे ह्येकान्ततोऽभ्युपगम्यमाने । प्रकृतेः सत्त्वरजस्तमोलक्षणाया ज्ञानावरणादिकर्मरूपाया वा । नैक्यं आत्मनां संसारिणां स्यात् । तथा चैकजातीयसंसारफलोपलम्भबाध इति भावः । अभेदे चैकान्ताभेदे च न भिन्नता स्यात् तेषां । तथा च नृतिर्यग्मनुष्यदेवादिभेदोपलम्भबाध इति भावः । स्वभावस्याप्यन्तरंगहेतुभूतस्य भेदाभेदयोरेकान्तयोरेतदेव दूषणं । एवमेकान्तपक्षे उभयतःपाशरज्जुसद्भावात् शबलता कथंचिद्भेदाभेदरूपा । उचिता न्याय्येति सर्वैव सकलव्यवहारोपपत्तेः । हेतूहनमेतत् ॥ १० ॥

भवोऽयं दुःखगहनो जन्ममृत्युजरामयः । अनादिरप्युपायेन पृथग्भवितुमर्हति ॥ ११ ॥

भवोऽयमिति–अयं प्रत्यक्षोपलभ्यमानो भवः संसारः । दुःखगहनः शारीरमानसानेकदुःखशतैराकुलः । जन्म मातृकुक्षिनिष्क्रमणलक्षणं, मरणं प्रतिनियतायुष्कर्मक्षयः, जरा वयोहानिलक्षणा, तन्मयस्तत्प्राचुर्यवान् । अनादिरपि उपायेन ज्ञानदर्शनचारित्ररूपेण । पृथग् भवितुमर्हति काञ्चनमलवदिति । स्वरूपोहनमेतत् ॥ ११ ॥

फलं भवस्य विपुलः क्लेश एव विजृम्भते । न्यग्भाव्यात्मस्वभावं हि पयो निंबरसो यथा ॥ १२ ॥

फलमिति—भवस्य संसारस्य । फलं कार्यं । विपुलोऽनुबन्धसंतत्या विस्तीर्णः । क्लेश एव विजृम्भते । नात्र सुखलवोऽप्यस्तीत्येवकारार्थः । आत्मन्येव सुखस्वभावे सति कथं क्लेशो विजृम्भत इत्यत आह—आत्मस्वभावं न्यग्भाव्य तिरोभाव्य । यथा पयस्तिरोभाव्य निंबरसो विजृम्भते । भवति हि महता प्रतिपन्थिनाऽल्पस्याभिभव इति । यदा त्वात्मस्वभाव एव भूयान् भवति तदा तेनापि क्लेशाभिभवः कर्तुं शक्यत इति । न संसारदशायां क्लेशेनात्माभिभवानुपपत्तिरिति भावः । फलोद्गमनमेतत् ॥ १२ ॥

तद्वियोगाश्रयोऽप्येवं सम्यगूहोऽस्य जायते । तत्तत्तन्त्रनयज्ञाने विशेषापेक्षयोज्ज्वलः ॥ १३ ॥

तदिति—तद्वियोगाश्रयो भववियोगाश्रयोऽप्येवं हेतुस्वरूपफलद्वारेण । सम्यगूहः समीचीनविचारः । अस्य शान्तोदात्तस्य जायते । तेषां तेषां तन्त्राणां षष्टितन्त्रादीनां नयानां ज्ञाने सति । विशेषापेक्षयेतरांशजिज्ञासालक्षणया । उज्ज्वलः शुद्धनिश्चयानुसारी ॥ १३ ॥

योजनाद्योग इत्युक्तो मोक्षेण मुनिसत्तमैः । स निवृत्ताधिकारायां प्रकृतौ लेशतो ध्रुवः ॥ १४ ॥

योजनादिति—योजनात् घटनात् मोक्षेण । इत्यस्माद्धेतोः । मुनिसत्तमैः ऋषिपुंगवैः । योग उक्तः । स निवृत्ताधिकारायां व्यावृत्तपुरुषाभिभवायां प्रकृतौ सत्यां । लेशतः किंचिद्वृत्त्या । ध्रुवो निश्चितः ॥ १४ ॥

गोपेन्द्रवचनादस्मादेवंलक्षणशालिनः । परैरप्येष्यते योगः प्रतिश्रोतोऽनुगत्वतः ॥ १५ ॥

गोपेन्द्रेति—अस्माद्गोपेन्द्रवचनात् । एवंलक्षणशालिनः शान्तोदात्तत्वादिगुणयुक्तस्यापुनर्बन्धकस्य । परैस्तीर्थान्तरीयैः योग इष्यते । प्रतिश्रोतोऽनुगच्छति यः स प्रतिश्रोतोनुगस्तद्भावस्तत्त्वं ततः । इन्द्रियकषायानुकूला हि प्रवृत्तिरनुश्रोतः । तत्प्रतिकूला तु प्रतिश्रोत इति । इत्थं हि प्रत्यहं शुभपरिणामवृद्धिः, सा च योगफलमित्यस्य योगौचित्यं । तदाह " येऽपायवनयशास्तदा पूरोपसंहृतेः । प्रतिश्रोतोनुगत्वेन प्रत्यहं वृद्धिसंयुतः ॥ १ ॥ " इति ॥ १५ ॥

तत्क्रियायोगहेतुत्वाद्योग इत्युचितं वचः । मोक्षेऽतिदृढचित्तस्य भिन्नग्रन्थेस्तु भावतः ॥ १६ ॥

तदिति—तस्याः क्रियायोगस्य सदाचारलक्षणस्य हेतुत्वात् योग इत्येवमुचितं, अस्य द्रव्ययोगत्वात् । मोक्षे निर्वाणे । अतिदृढचित्तस्यैकधाराक्षमहृदयस्य । भिन्नग्रन्थेर्विदारिततीव्ररागद्वेषपरिणामस्य तु । भावतो योगः संजायते । सम्यग्दृष्टेर्हि मोक्षकांक्षैकक्षणिकचित्तस्य या या चेष्टा सा सा मोक्षप्राप्तिपर्यवसानफलिकेति तस्यैव भावतोऽयम् । अपुनर्बन्धकस्य तु न सार्वदिकस्तथापरिणाम इति द्रव्यत एवेति । तदुक्तं—" भिन्नग्रन्थेस्तु यत्प्रायो मोक्षे चित्तं भवे तनु । तस्य तत्सर्व एवेह योगो योगो हि भावतः ॥ १ ॥ " इति ॥ १६ ॥

अन्यसक्तस्त्रियो भर्तृयोगोऽप्यश्रेयसे यथा । तथा मुख्यकृदुंयादिव्यापारोऽपि न बन्धकृत् ॥ १७ ॥

अन्येति—अन्यस्मिन् स्वभर्तृव्यतिरिक्ते पुंसि सक्ताया अनुपरतरिरंसायाः स्त्रियो योषितः । भर्तृयोगोऽपि पतिशुश्रूषणा-

दिव्यापारोऽपि। यथाऽश्रेयसे पापकर्मबन्धाय। तथाऽमुष्य भिन्नग्रन्थेः। कुटुंबादिव्यापारोऽपि न बन्धकृत्। पुण्ययोगेऽपि पापपरिणामेन पापस्येव बन्धवदशुभकुटुंबचिन्तनादियोगेऽपि शुद्धपरिणामेन सदनुबन्धस्यैवोपपत्तेः। तदुक्तं–" नार्या यथाऽन्यसक्तायास्तत्र भावे सदा स्थिते। तद्योगः पापबन्धश्च तथा मोक्षेऽस्य दृश्यताम् ॥ १ ॥ न चेह ग्रन्थिभेदेन पश्यतो भावमुत्तमम्। इतरेणाकुलस्यापि तत्र चित्तं न जायते ॥ २ ॥ " ॥ १७ ॥

**निजाशयविशुद्धौ हि बाह्यो हेतुरकारणम्। शुश्रूषादिक्रियाऽप्यस्य शुद्धा श्रद्धानुसारिणी ॥ १८ ॥**

निजेति–निजाशयविशुद्धौ हि सत्यां। बाह्यो हेतुः कुटुंबचिन्तनादिव्यापारः। अकारणं कर्मबन्धं प्रति भवहेतूनामेव परिणामविशेषेण मोक्षहेतुत्वेन परिणमनात् " जे जत्तिया य हेऊ भवस्स ते तत्तिआ य मुक्खस्स " इति वचनप्रामाण्यात्। ननु किमेकेन शुभपरिणामेन? क्रियाया अपि मोक्षकारणत्वात्तदभावे तस्याकिंचित्करत्वादित्यत आह–शुश्रूषादिक्रियाऽप्यस्य सम्यग्दृशः। शुद्धश्रद्धानुसारिणी जिनवचनप्रामाण्यप्रतिपत्त्यनुगामिनी। परिशुद्धोहापोहयोगस्य हि प्रकृतेरप्रवृत्तिविरोधिप्रकृतियोगाभ्यां सम्यगनुष्ठानावन्ध्यकारणत्वात्तेनैव तदाक्षिप्यत इति भावः। तदुक्तं–" चारु चैतद्यतो ह्यस्य तथोहः संप्रवर्तते। एतद्वियोगविषयः श्रद्धानुष्ठानभाक् स यत् ॥ १ ॥ प्रकृतेरायतश्चैव नाप्रवृत्त्यादिधर्मताम्। तथा विहाय घटते ऊहोऽस्य विमलं मनः ॥ २ ॥ सति चास्मिन् स्फुरद्रत्नकल्पे सत्त्वोल्बणत्वतः। भावस्तैमित्यतः शुद्धमनुष्ठानं सदैव हि ॥ ३ ॥ " ननु सम्यग्दृष्टिपर्यन्तमन्यत्र द्रव्ययोग एवोच्यते कथमत्र भावतोऽयमुक्त इति चेच्चारित्रप्रतिपंथिनामनन्तानुबन्धिनामपगमे तद्गुणप्रादुर्भावनियम इति निश्चयाश्रयणादल्पभेदविवक्षापरेण व्यवहारेण त्वत्रायं नेष्यत एव " एतच्च

योगहेतुत्वाद्योग इत्युचितं वचः । मुख्यायां पूर्वसेवायामवतारोऽस्य केवलम् ॥ १ ॥" इत्यनेनापुनर्बन्धकातिशयाभिधानं तु सम्यग्दृशो नैगमनयशुद्धिप्रकर्षकाष्ठापेक्षमिति न कश्चिद्विरोध इति विभावनीयं सुधीभिः ॥ १८ ॥

एतन्निश्चयवृत्त्यैव यद्योगः शास्त्रसञ्ज्ञितः । त्रिधा शुद्धावनुष्ठानात् सम्यक्प्रत्ययवृत्तितः ॥ १९ ॥

एतदिति—एतद्यदुक्तं जिनमन्त्रैरेव जापतो योग इति निश्चयवृत्त्यैव परमार्थवृत्त्यैव न तु कल्पनया । यद्यस्माच्छास्त्रेणैव संज्ञी तद्विना त्वसञ्ज्ञिवत् काप्यर्थे प्रवर्तमानो यस्तस्य । त्रिधा वक्ष्यमाणैस्त्रिभिः प्रकारैः । शुद्धात्त्रिरवद्यात् । अनुष्ठानाद्व्यापारात् । सम्यक्प्रत्ययेनात्मगुरुलिङ्गशुद्ध्या स्वकृतिसाध्यतायथ्रान्तविश्वासेन वृत्तिः प्रवृत्तिस्ततो भवतीति ॥ १९ ॥

शास्त्रमासन्नभव्यस्य मानमामुष्मिके विधौ । सेव्यं यद्विचिकित्सायाः समाधेः प्रतिकूलता ॥ २० ॥

शास्त्रमिति—आसन्नभव्यस्यावूरवर्तिमोक्षलाभस्य भाविनः । आमुष्मिके विधौ पारलौकिके कर्मणि । शास्त्रं मानं । धर्माधर्मयोरतीन्द्रियत्वेन तदुपायस्यबोधने प्रमाणान्तरासामर्थ्यात् । अतः सेव्य सर्वत्र प्रवृत्तौ पुरस्करणीयं न तु कचित्प्यंशेऽनादरणीयं । यद्यस्मात् विचिकित्साया युक्त्या समुपपन्नेऽपि मतिव्यामोहोत्पन्नचित्तविप्लुतिरूपायाः । समाधेश्चित्तस्वास्थ्यरूपस्य ज्ञानदर्शनचारित्रात्मकस्य या । प्रतिकूलता विरोधिताऽस्ति । अर्थो हि त्रिविधः सुखाधिगमो दुरधिगमोऽनधिगमश्चेति श्रोतारं प्रति भिद्यते । आद्यो यथा चक्षुष्मतश्चित्रकर्मनिपुणस्य रूपसिद्धिः । द्वितीयः सैवानिपुणस्य । तृतीयस्त्वन्धस्येति । तत्र प्रथमचरमयोर्नास्त्येव विचिकित्सा, निश्चयादसिद्धेश्च । द्वितीये तु देशकालस्वभावविप्रकृष्टे धर्माधर्मादौ भवन्ती सा महानर्थकारिणी । यदागमः—"वितिगिंछ समावन्ने णं अप्पाणे णं णो लहति समाहिं" । अतश्चित्तशुद्ध्यर्थं

शास्त्रमेवादरणीयमिति भावः । यत उक्तं—" मलिनस्य यथात्यन्तं जलं वस्त्रस्य शोधनम् । अन्तःकरणरत्नस्य तथा शास्त्रं विदुर्बुधाः ॥ १ ॥ " ॥ २० ॥

**विषयात्मानुबन्धैस्तु त्रिधा शुद्धं यथोत्तरम् । प्रधानं कर्म तत्राद्यं मुक्त्यर्थं पतनाद्यपि ॥ २१ ॥**

विषयेति—विषयेण गोचरेण, आत्मना स्वरूपेण, अनुबन्धेन तूत्तरत्रानुवृत्तिलक्षणेन । शुद्धं । त्रिधा त्रिविधं । कर्म अनुष्ठानं । यथोत्तरं प्रधानं, यद्यत उत्तरं तत्तदपेक्षया प्रधानमित्यर्थः । तत्राद्यं विषयशुद्धं कर्म । मुक्त्यर्थं मोक्षो ममातो भूयादितीच्छया जनितं । पतनाद्यपि भृगुपाताद्यपि । आदिना शस्त्रपाटनगृध्रपृष्ठार्पणादिः स्वघातोपायः परिगृह्यते किं पुनः शेषं स्वाहिंसकमित्यपिशब्दार्थः ॥ २१ ॥

**स्वरूपतोऽपि सावद्यमादेयाशयलेशतः । शुभमेतद्द्वितीयं तु लोकदृष्ट्या यमादिकम् ॥ २२ ॥**

स्वरूपत इति—स्वरूपत आत्मना । सावद्यमपि पापबहुलमपि । आदेयाशयस्योपादेयमुक्तिभावस्य लेशतः सूक्ष्ममात्रालक्षणात् । शुभं शोभनमेतत् । यदाह—" तदेतदप्युपादेयलेशभावाच्छुभं मतम् " । द्वितीयं तु स्वरूपशुद्धं तु । लोकदृष्ट्या स्थूलव्यवहारिणो लोकस्य मतेन । यमादिकं यमनियमादियमादिरूपं । यथा जीवादितत्त्वमजानानां पूरणादीनां प्रथमगुणस्थानवर्तिनाम् ॥ २२ ॥

**तृतीयं शान्तवृत्त्यादस्तत्त्वसंवेदनानुगम् । दोषहानिस्तमोभूम्ना नाद्याज्जन्मोचितं परे ॥ २३ ॥**

तृतीयमिति–शान्तवृत्त्या कषायादिविकारनिरोधरूपया। तत्त्वसंवेदनानुगं जीवादितत्त्वसम्यक्परिज्ञानानुगतं। अदो यमाद्येन। तृतीयमनुबन्धशुद्धं कर्म। आद्यादिविषयशुद्धानुष्ठानात्। तमोवृद्धा आत्मघातादिनिबन्धनाज्ञानबाहुल्येन। दोषह्रा-निर्मोहत्वाजन्मबाधकपरिज्ञाणिर्न भवति। यत आह–" आद्यान्न दोषविगमस्तमोबाहुल्ययोगतः " इति। परे पुनराचार्याः प्रथमे त्विदं दोषविगमानुकूलजात्यादिकुलादिगुणयुक्तं जन्म ततो भवति। एकान्तनिरवद्ये मोक्षे स्वरूपतोऽतीव सावद्यस्य कर्मणस्तस्याहेतुत्वेऽपि मुक्तीच्छायाः कथंचित् सारूप्येण सद्धेतुत्वात्तद्द्वारतया प्रकृतोपयोगादिति एषामीषामाशयः। तदाह–" तद्योग्यजन्मसन्धानमत एके प्रचक्षते। मुक्तीच्छापि यच्छ्लाघ्या तमः क्षयकरी मता ॥ १ ॥ तस्याः समन्तभद्रत्वादनिदर्शनमित्यदः। " इति ॥ २३ ॥

उक्ताशयमेवाह—

मुक्तीच्छापि सतां श्लाघ्या न मुक्तिसदृशं स्वतः। द्वितीयात्सानुवृत्तिश्च सा स्याद्दर्दुरचूर्णवत् ॥ २४ ॥

मुक्तीच्छापीति–द्वितीयात् स्वरूपशुद्धानुष्ठानात्। सानुवृत्तिश्च उत्तरत्राप्यनुवृत्तिमती च। सा दोषहानिः स्यात्। दर्दुरचूर्णजन्यमण्डूकोदयवत्। निरनुवृत्तिदोषविगमे हि गुरुलाघवचिन्तादृढप्रवृत्त्यादिकं हेतुस्तदभावाच्चात्र सानुवृत्तिरेव दोषविगम इति भावः। तदुक्तं–" द्वितीयाद्दोषविगमो न त्वेकान्तानुबन्धवान्। गुरुलाघवचिन्तादि न यत्तत्र नियोगतः ॥ १ ॥ " ॥ २४ ॥

कुराजवप्रशाय तज्ज्ञैर्विवेकमिदं स्मृतम्। तृतीयात्सानुबन्धा सा गुरुलाघवचिन्तया ॥ २५ ॥

कुराजेति–तत्तस्मात्सानुवृत्तिदोषविगमात् । अदो द्वितीयमनुष्ठानं । निर्विवेकं विवेकरहितं । कुराजवप्रप्रायं कुत्सितराजाधिष्ठितनगरप्राकारतुल्यं । तत्र लुंटाकोपद्रवस्येवात्राज्ञानदोषोपघातस्य दुर्निवारत्वादिति भावः । तृतीयादनुबन्धशुद्धानुष्ठानात् । सा दोषहानिः । सानुबन्धा उत्तरोत्तरदोषापगमावहा । अत एव दोषाननुवृत्तिमती । तदुक्तं–" तृतीयाद्दोषविगमः सानुबन्धो नियोगतः । " गुरुलाघवचिन्तयेत्युपलक्षणमेषा दृढप्रवृत्त्यादेः ॥ २५ ॥

**गृहाद्यभूमिकाकल्पमतस्तत् कैश्चिदुच्यते । उदग्रफलदत्वेन मतमस्माकमप्यदः ॥ २६ ॥**

गृहेति–अतः सानुबन्धदोषहानिकरत्वात् । तत् तृतीयमनुष्ठानं । कैश्चित्तीर्थान्तरीयैः गृहस्याद्यभूमिका दृढपीठबन्धरूपा तत्कल्पं तत्तुल्यं । उदग्रफलदत्वेनोदारफलदायित्वेन तस्य । अद एतदुक्तमस्माकमपि मतं । यथा हि गृहाद्यभूमिकाप्रारंभदार्ढ्यं नोपरितनगृहभंगफलं संपद्यते, किं तु तदनुबन्धप्रधानं, एवं तत्त्वसंवेदनानुगतमनुष्ठानमुत्तरोत्तरदोषविगमावहमेव भवति, न तु कदाचनाप्यन्यथारूपमिति ॥ २६ ॥

**आत्मनेष्टं गुरुर्ब्रूते लिङ्गान्यपि वदन्ति तत् । त्रिधाऽयं प्रत्ययः प्रोक्तः संपूर्णं सिद्धिसाधनम् ॥ २७ ॥**

आत्मनेति–आत्मनेष्टं सदनुष्ठानं । गुरुर्धर्मोपदेष्टा ब्रूते कर्तव्यत्वेन । लिंगान्यपि सिद्धिसूचकानि नन्दीतूरादीनि सूत्रसिद्धानि । तद्गुरूक्तमेव वदन्ति । अयं त्रिधा त्रिप्रकारः प्रत्ययो विश्वासः प्रोक्तः । संपूर्णमव्यभिचारि । सिद्धिसाधनमिष्टकारणं । यत उक्तं–" आत्मा तदभिलाषी स्याद्गुरुराह तदेव तु । तल्लिंगोपनिपातश्च संपूर्णं सिद्धिसाधनम् ॥१॥"॥२७॥

सिद्धि सिद्ध्यनुबन्धेव न पातमनुबध्नती । क्षायिकानामपि ह्येषा नात्मादिप्रत्ययं विना ॥ २८ ॥

सिद्धिरिति–सिद्ध्यनुबन्धेनोत्तरसिद्धयसम्पत्तिबीजमेव । सिद्धिर्जयति सात्त्विकी । न पुनः पातं भ्रंशमनुबध्नती । प्राकाम्य-व्यासायदष्टत्राति । शल्योपहतमासादादिरचनाया इवान्यस्या मिथ्याभिनिवेशादिपातशक्त्यनुवेधेनासिद्धित्वात् । तदुक्तं– "सिद्ध्यन्तरं न सन्धत्ते या सावश्यं पतत्यधः । तच्छक्त्याप्यनुविद्धैव पातोऽसौ तत्त्वतो मतः ॥ १ ॥" इति । इत्थं च सि-द्ध्यन्तरांगसंयोगादात्मादिप्रत्ययवतामेव सिद्धिः सिद्धा भवति । क्षायिकानामपि यथाख्यातचारिणामपि । एषा हि सिद्धिः । आत्मादिप्रत्यय विना न भवति । न हि मृत्पिण्डाद्युपायान्तरकार्यं घटादि यथाकारसहस्रेणाप्युपायान्तरतः साध-यितुं शक्यत इति ॥ २८ ॥

सद्योगारंभकस्त्वेन शास्त्रसिद्धमपेक्षते । सदा नैव. परेभ्यो हि तस्य जात्यमयूरवत् ॥ २९ ॥

सदिति–सद्योगारंभकस्तु सानुबन्धयोगारंभक एव । एनमात्मादिप्रत्ययं । शास्त्रसिद्धमतीन्द्रियार्थसार्थसमर्थनसमर्था-गमप्रतिष्ठितमपेक्षतेऽध्यवस्यते । परेभ्यो हि । असद्योगारंभकेभ्यो हि । तस्य सद्योगारंभकस्य । सदा नैवो वैलक्षण्यं । जात्य-मयूरवत् सर्वोपाधिविशुद्धमयूरवत् । यथा हि जात्यमयूरोऽजात्यमयूरात्सदैव भिन्नस्तथा सद्योगारंभकोऽप्यन्यस्मादिति भावना । तदुक्तं–"न च सद्योगभव्यस्य वृत्तिरेवंविधापि हि । न जात्यजात्यधर्मान् यज्जात्यः सन् भजते शिखी ॥ १ ॥" ॥ २९ ॥

यथा शक्तिस्तदण्डादौ विचित्रा तद्वदस्य हि । गर्भयोगेऽपि मातृणां श्रूयतेऽत्युचिता क्रिया ॥ ३० ॥

यथेति–यथा तदंकादौ जात्यमयूरांरुचंचुचरणाद्यवयवेषु । शक्तिः विचित्राऽजात्यमयूरावयवशक्तिविलक्षणा । तद्वदस्य हि सद्योगारंभकस्यादित एवारम्भेतरेभ्यो विलक्षणा शक्तिरित्यर्थः । यत उक्तं–"यश्चात्र शिखिदृष्टान्तः शास्त्रे प्रोक्तो महात्मभिः । स तदंकुरसादीनां सच्छक्त्यादिप्रसाधनः ॥ १ ॥" इति । अत एव । सद्योगारंभकस्येति गम्यं । मातॄणां जननीनां । गर्भयोगेऽपि किं पुनरुत्तरकाल इत्यपिशब्दार्थः । श्रूयते निशम्यते । शास्त्रेषु । अत्युचिता लोकानामतिश्लाघनीया । क्रिया प्रशस्तमाहात्म्यलाभलक्षणा । यत एवं पठ्यते–"जणणी सव्वत्थवि णिच्छएसु सुमइत्ति तेण सुमई जिणो" । तथा–"गब्भगए जं जणणी जाय सुधम्मे त्ति तेण धम्मजिणो" । तथा–"जाया जणणी जं सुव्वयत्ति मुणिसुव्वओ तम्हा" । इत्यादि । इदं गर्भावस्थायामुक्तं । उत्तरकालेऽप्यत्युचितैव तेषां क्रिया । यत उक्तं–"औचित्यारंभिणोऽक्षुद्राः प्रेक्षावन्तः शुभाशयाः । अवन्ध्यचेष्टाः कालज्ञा योगमार्गाधिकारिणः ॥ १ ॥" इति । तदेवं सिद्धः सद्योगारंभक इतरेभ्यो विलक्षणः । स चात्मादिप्रत्ययमपेक्षत एवेति ॥ ३० ॥

अथ विषयस्वरूपानुबन्धशुद्धिप्रधानेषु किं कस्य संभवतीत्याह–

**सर्वोत्तमं यदेतेषु भिन्नग्रन्थेस्तदिष्यते । फलवद्द्रुमसद्बीजप्ररोहोद्भेदसन्निभम् ॥ ३१ ॥**

सर्वोत्तममिति–यदेतेषु उक्तानुष्ठानेषु । सर्वोत्तममव्यभिचारि फलं । तद्भिन्नग्रन्थेरिष्यते । फलवतः फलप्राग्भारभाजो द्रुमस्य न्यग्रोधादेः सदवन्ध्यं यद्बीजं तस्य प्ररोहोद्भेदोऽङ्कुरोद्गमः तत्सन्निभं शुभानुबन्धसारत्वात् ॥ ३१ ॥

तत्तत्तन्त्रोक्तमखिलमपुनर्बन्धकस्य च । अवस्थाभेदतो न्याय्यं परमानन्दकारणम् ॥ ३२ ॥

तत्तदिति–तत्तत्तन्त्रोक्तं कापिलसौगतादिशास्त्रप्रणीतं मुमुक्षुजनयोग्यमनुष्ठानं । अखिलं समस्तं । अपुनर्बन्धकस्य तु । अवस्थाभेदतो दशाविभेदात् । न्याय्यं युक्तं । निवृत्तासद्ग्रहत्वेन सद्ग्रहप्रवृत्तत्वेन च परमानन्दस्य प्रथमसुखस्य कारणं । अनेकस्वरूपाभ्युपगमे ह्यपुनर्बन्धकस्य किमप्यनुष्ठानं कस्यामप्यवस्थायां प्रशास्तयाहिता संपादयतीति । तदुक्तं–"अपुनर्बन्धकस्यैवं सम्यग्नीत्योपपद्यते । तत्तत्तन्त्रोक्तमखिलमवस्थाभेदसंश्रयात् ॥ १ ॥" इति ॥ ३२ ॥

॥ इत्यपुनर्बन्धकद्वात्रिंशिका ॥ १४ ॥

## ॥ अथ सम्यग्दृष्टिद्वात्रिंशिका ॥ १५ ॥

अपुनर्बन्धकोत्तरं सम्यग्दृष्टिर्भवतीति तत्स्वरूपमाह–

**लक्ष्यते ग्रन्थिभेदेन सम्यग्दृष्टिः स्वतंत्रतः । शुश्रूषाधर्मरागाभ्यां गुरुदेवादिपूजया ॥ १ ॥**

लक्ष्यत इति–ग्रन्थिभेदेन अतितीव्ररागद्वेषपरिणामविदारणेन । स्वतंत्रतः सिद्धान्तनीत्या । सम्यग्दृष्टिः लक्ष्यते सम्यग्दर्शनपरिणामात्मनाऽप्रत्यक्षोऽप्यनुमीयते। शुश्रूषाधर्मरागाभ्यां तथा गुरुदेवादिपूजया त्रिभिरेतैर्लिंगैः। यदाह–"शुश्रूषा धर्मरागश्च गुरुदेवादिपूजनम् । यथाशक्ति विनिर्दिष्टं लिंगमस्य महात्मभिः ॥ १ ॥" ॥ १ ॥

**भोगिकिन्नरगेयादिविषयाधिक्यमीयुषी । शुश्रूषाऽस्य न सुप्तेशकथार्थविषयोपमा ॥ २ ॥**

भोगीति–भोगिनो यौवनवैदग्ध्यकान्तासन्निधानवतः कामिनः । किन्नरादीनां गायकविशेषाणां गेयादौ गीतवर्णपरिवर्तान्यासकथाकथनादौ विषयः श्रवणरसस्तस्मादाधिक्यमतिशयं । ईयुषी प्राप्तवती । किन्नरगेयादिजिनोक्त्योर्हेत्वोस्तुच्छत्वमहत्त्वाभ्यामतिभेदोपलंभात् । अस्य सम्यग्दृष्टेः । शुश्रूषा भवति। न परं सुप्तेशस्य सुप्तनृपस्य कथार्थविषयः संमुग्धकथार्थश्रवणाभिप्रायलक्षणः तदुपमा तत्सदृशी असंवद्धतत्तदज्ञानलवफलायास्तस्या दौर्वैदग्ध्यबीजत्वात् ॥ २ ॥

**अप्राप्ते भगवद्वाक्ये धावत्यस्य मनो यथा । विशेषदर्शिनोऽर्थेषु प्राप्तपूर्वेषु नो तथा ॥ ३ ॥**

अभ्यास इति—अस्य सम्यग्दृशः । अभ्यासे पूर्वमश्रुते । जगच्चान्ये वीतरागवचने । यथा मनो धावति श्रोतुमनुपरतेच्छं भवति । तथा विशेषदर्शिनः सतः । प्राप्तपूर्वेष्वर्थेषु धनकुटुम्बादिषु । न धावति । विशेषदर्शनेनापूर्वत्वभ्रमस्य दोषस्य व्युच्छेदात् ॥३॥

धर्मरागोऽधिको भावाद्योगिनः क्रियाविरागतः । प्रवृत्तिस्त्वन्यथापि स्यात्कर्मणो बलवत्तया ॥ ४ ॥

धर्मराग इति—धर्मरागश्चारित्रधर्मस्पृहारूपः । अधिकः प्रकर्षवान् । भावतोऽन्तःकरणपरिणत्या । योगिनो योगशालिनः । क्रियाविरागतो भागिन्यायभिलापात् । प्रवृत्तिस्तु कायचेष्टा तु । अन्यथापि चारित्रधर्मप्रातिकूल्येनापि व्यापारादिना स्यात् । कर्मणश्चारित्रमोहनीयस्य । बलवत्तया नियतप्रबलविपाकतया ॥ ४ ॥

तत्त्यागेऽपि तद्रागबलवत्त्वं न दुर्वचम् । पूयिकाद्यपि यद्भुंक्ते घृतपूर्णप्रियो द्विजः ॥ ५ ॥

तदिति—तत्त्यागेऽपि कथंचिदन्यथाप्रवृत्त्या चारित्राप्राप्तावपि । तद्रागबलवत्त्वं चारित्रेच्छाप्राबल्यं स्वहेतुसिद्धं । न दुर्वचं दुरभिधानं । यतस्तत्साक्षाद्विषविषमघट्टकवशात् । पूयिकाद्यपि पूयं नाम कुत्सितो रसस्तदस्यास्तीति पूयिकं । आदिशब्दाच्छुष्कं पर्युषितं च चणकादि । किं पुनरितरदित्यपिशब्दार्थः । घृतपूर्णाः प्रिया घस्रजा यस्य स तथा । द्विजो ब्राह्मणो भुंक्तेऽश्नाति । यदत्र द्विजग्रहणं कृतं तदस्य जातिप्रत्ययादेव अन्यत्र लोकमिश्राया अज्ञानादिति । अन्यकालेऽपि प्रबलेच्छाया वासनात्मना न नाश इति तात्पर्यम् ॥ ५ ॥

गुरुसेवादिपूजाऽस्य त्यागात्कार्यान्तरस्य च । भावसारा विनिर्दिष्टा निजशक्त्यनतिक्रमात् ॥ ६ ॥

गुर्विति–अस्य सम्यग्दृशः । गुरुदेवादिपूजा च कार्यान्तरस्य त्यागभोगादिकरणीयस्य । त्यागात् परिहारात् । निजशक्तेः स्वसामर्थ्यस्यानति (क्रमात्) लंघनादनिगूहनात् । भावसारा भोक्तुः स्त्रीरत्नगोचरगौरवादनन्तगुणेन बहुमानेन प्रधाना विनिर्दिष्टा प्ररूपिता परमपुरुषैः ॥ ६ ॥

स्यादीदृक्करणे चान्त्ये सत्त्वानां परिणामतः । त्रिधा यथाप्रवृत्तं तदपूर्वं चानिवर्ति च ॥ ७ ॥

स्यादिति–ईदृगुपदर्शितलक्षणं सम्यक्त्वं चान्त्येकरणे " जाते सतीति " गम्यं । स्याद्भवेत् । तत् करणं । सत्त्वानां प्राणिनां । परिणामतः त्रिधा त्रिप्रकारं । यथाप्रवृत्तं अपूर्वं अनिवर्ति चेति ॥ ७ ॥

ग्रन्थिं यावद्भवेदाद्यं द्वितीयं तदतिक्रमे । भिन्नग्रन्थेस्तृतीयं तु योगिनाथैः प्रदर्शितम् ॥ ८ ॥

ग्रन्थिमिति–आद्यं यथाप्रवृत्तकरणं ग्रन्थिं यावद्भवेत् । द्वितीयमपूर्वकरणं तदतिक्रमे ग्रन्थ्युल्लंघने क्रियमाणे । तृतीयं त्वनिवर्तिकरणं भिन्नग्रन्थेः कृतग्रन्थिभेदस्य । योगिनाथैस्तीर्थकरैः प्रदर्शितम् ॥ ८ ॥

पतितस्यापि नामुष्य ग्रन्थिमुल्लंघ्य बन्धनम् । स्वाशयो बन्धभेदेन सतो मिथ्यादृशोऽपि तत् ॥ ९ ॥

पतितस्यापीति–अमुष्य भिन्नग्रन्थेः । पतितस्यापि तथाविधसंक्लेशात् सम्यक्त्वात् परिभ्रष्टस्यापि । न नैव । ग्रन्थिं ग्रन्थिभेदकालसम्भाविनीं कर्मस्थितिं । उल्लंघ्यातिक्रम्य सप्ततिकोटिकोट्यादिप्रमाणस्थितिकतया । बन्धनं ज्ञानावरणादिपुद्गलग्रहणं । तत्तस्मान्मिथ्यादृशोऽपि सतो भिन्नग्रन्थेः । बन्धभेदेनाल्पस्थित्या कर्मबन्धविशेषेण । स्वाशयः शोभनः परि-

णामः । बाह्यासदनुष्ठानस्य प्रायः साम्येऽपि बन्धाल्पत्वस्य सुन्दरपरिणामनिबन्धनत्वादिति न्यायः । तदुक्तं–" भिन्नग्रन्थे-स्तृतीयं तु सम्यग्दृष्टेरतो हि न । पतितस्याप्यतो बन्धो ग्रन्थिमुल्लङ्घ्य देशितः ॥ १ ॥ एवं सामान्यतो ज्ञेय परिणामोऽस्य शोभनः । मिथ्यादृष्टेरपि सतो महाबन्धविशेषतः ॥ २ ॥ सागरोपमकोटीनां कोट्यो मोहस्य सप्ततिः । अभिन्नग्रन्थिब-न्धोऽयं न त्वेकोऽपीतरस्य तु ॥ ३ ॥ तदत्र परिणामस्य भेदकत्वं नियोगतः । बाह्यं त्वसदनुष्ठानं प्रायस्तुल्यं द्वयोरपि ॥४॥" "बंधेणं न वोलइ कयाई" इत्यादिवचनानुसारिणां सैद्धान्तिकानां मतमेतत् । कार्मग्रन्थिकाः पुनरस्य मिथ्यात्वमा-सादुत्कृष्टस्थितिबन्धमपीच्छन्ति, तेषामपि मते तथाविधरसाभावादस्य शोभनपरिणामत्वे न विप्रतिपत्तिरिति ध्येयम् ॥९॥

एवं च यत्परैरुक्तं बोधिसत्त्वस्य लक्षणम् । विचार्यमाणं सन्नीत्या तदप्यत्रोपपद्यते ॥ १० ॥

एवं चेति–एवं च भिन्नग्रन्थेर्मिथ्यात्वदशायामपि शोभनपरिणामत्वे च । यत् परैः सौगतैः। बोधिसत्त्वस्य लक्षणमुक्तं । तदपि सन्नीत्या मध्यस्थवृत्त्या विचार्यमाणं । अत्र सम्यग्दृष्टावुपपद्यते ॥ १० ॥

तप्तलोहपदन्यासतुल्या वृत्तिः क्वचिद्यदि । इत्युक्तेः कायपात्येव चित्तपाती न स स्मृतः ॥ ११ ॥

तप्तेति–तप्तलोहे यः पदन्यासस्तत्तुल्याऽतिसंवेगपरत्वात् । वृत्तिः कायचेष्टा । क्वचिद्गृहारंभादौ । यदि परं । इत्युक्तेः इत्थं-वचनात् । कायपात्येव स सम्यग्दृष्टिः । न चित्तपाती स्मृतः । इत्थं च कायपातिन एव बोधिसत्त्वा इति लक्षणमत्रोपपन्नं भवति । तदुक्तं–" कायपातिन एवेह बोधिसत्त्वाः परोदितम् । न चित्तपातिनस्तावदेतदत्रापि युक्तिमत् ॥१॥" ॥ ११ ॥

**परार्थरसिको धीमान् मार्गगामी महाशयः। गुणरागी तथेत्यादि सर्वं तुल्यं द्वयोरपि ॥ १२ ॥**

परार्थेति–परार्थरसिकः परोपकारचित्तः। धीमान् बुद्ध्यनुगतः। मार्गगामी कल्याणप्रापकपथयायी। महाशयः स्फीतचित्तः। गुणरागी गुणानुरागवान्। तथेति बोधिसत्त्वगुणान्तरसमुच्चयार्थः। इत्यादि शास्त्रान्तरोक्तं। सर्वं तुल्यं समं। द्वयोरपि सम्यग्दृष्टिबोधिसत्त्वयोः॥ १२ ॥

अन्वर्थतोऽपि तुल्यतां दर्शयति–

**बोधिप्रधानः सत्त्वो वा सद्बोधिर्भावितीर्थकृत्। तथाभव्यत्वतो बोधिसत्त्वो हन्त सतां मतः ॥ १३॥**

बोधीति–बोधिः सम्यग्दर्शनं तेन प्रधानः। सत्त्वो वा। सतां साधूनां। हन्तेत्यामंत्रणे। बोधिसत्त्वो मत इष्टः। यदुक्तं–"यत्सम्यग्दर्शनं बोधिस्तत्प्रधानो महोदयः। सत्त्वोऽस्तु बोधिसत्त्वस्तत्तस्माद्धतेति पूर्ववत् ॥ १ ॥" वाऽथवा सद्बोधिः तीर्थकरपदप्रायोग्यसम्यक्त्वसमेतः। तथाभव्यत्वतो भावितीर्थकृद्यस्तीर्थकृद्भविष्यति स बोधिसत्त्वः। तदुक्तं–"वरबोधिसमेतो वा तीर्थकृद्यो भविष्यति। तथाभव्यत्वतोऽसौ वा बोधिसत्त्वः सतां मतः ॥ १ ॥" भव्यत्वं नाम सिद्धिगमनयोग्यत्वं अनादिपारिणामिको भावः। तथाभव्यत्वं चैतदेव कालनैयत्यादिना प्रकारेण वैचित्र्यमापन्नं। एतद्भेद एव च बीज साध्यादि (सिद्ध्यादि) फलभेदोपपत्तिः। अन्यथा तुल्यायां योग्यतायां सहकारिणोऽपि तुल्या एव भवेयुः तुल्ययोग्यतासामर्थ्याक्षिप्तत्वात्तेषामिति सद्बोधेर्योग्यताभेद एव पारंपर्येण तीर्थकरत्वनिबन्धनमिति भावनीयम् ॥ १३ ॥

तत्तत्कल्याणयोगेन कुर्वन् सत्त्वार्थमेव सः। तीर्थकृत्त्वमवाप्नोति परं कल्याणसाधनम् ॥ १४ ॥

तत्तदिति–तस्य तस्य कल्याणस्य परिशुद्धप्रवचनाधिगमातिशायिधर्मकथाऽविसंवादिनिमित्तादिलक्षणस्य। योगेन व्यापारेण। कुर्वन् विदधानः। सत्त्वार्थमेव मोक्षबीजाधानादिरूपं न त्वात्मंभरिरपि। स सद्बोधिमान्। तीर्थकृत्त्वमवाप्नोति प्राप्नोति। परं प्रकृष्टं। कल्याणसाधनं भव्यसत्त्वशुभप्रयोजनकारि। स्वजनादिजनबोधिदीर्घेच्छया सद्बोधिप्रवृत्तिस्तु गणधरपदसाधनं भवतीति द्रष्टव्यम्। यत उक्तं–" चिन्तयत्येवमेवैतत्स्वजनादिगतं तु यः। तथाऽनुष्ठानतः सोऽपि धीमान् गणधरो भवेत् ॥ १ ॥" ॥ १४ ॥

संविग्नो भवनिर्वेदादात्मनिःसरणं तु यः। आत्मार्थसंप्रवृत्तोऽसौ सदा स्यान्मुण्डकेवली ॥ १५ ॥

संविग्न इति–संविग्नः " तथ्ये धर्मे ध्वस्तहिंसाप्रबन्धे देवे रागद्वेषमोहादिमुक्ते। साधौ सर्वग्रन्थसन्दर्भहीने संवेगोऽसौ निश्चलो योऽनुरागः ॥ १ ॥" इतिकाव्योक्तलक्षणसंवेगभाक्। भवनैर्गुण्यात् संसारवैरस्यात्। आत्मनिःसरणं तु अरामरणादिदारुणबन्धनात्स्वनिष्कासनं पुनः। यश्चिन्तयतीति गम्यते। आत्मार्थसंप्रवृत्तः स्वप्रयोजनमात्रप्रतिबद्धचित्तोऽसौ। सदा निरन्तरं। स्याद्भवेत्। मुण्डकेवली द्रव्यभावमुण्डनप्रधानस्तथाविधबाह्यातिशयशून्यः केवली पीठमहापीठवत् ॥ १५ ॥

अंशतः क्षीणदोषत्वाच्छिष्टत्वमपि युक्तिमत्। अत्रैव हि परोक्तं तु तल्लक्षणमसंगतम् ॥ १६ ॥

अंशत इति–अंशतो देशतः। क्षीणदोषत्वात्क्षीणदोषत्वात्। शिष्टत्वमपि। अत्रैव सम्यग्दृष्टावेव। युक्तिमत् न्यायो-

पेतं । "क्षीणदोषः पुरुषः शिष्टः" इतिलक्षणस्य निर्बाधत्वात् । सर्वदोषक्षयेण सर्वथा शिष्टत्वस्य सिद्धे केवलिनि वा विश्रान्तत्वेऽपि सम्यग्दृष्टेरारभ्य देशतो विचित्रस्य शिष्टत्वस्यान्यत्रानपायत्वात् । न चैवं शिष्टत्वस्यातीन्द्रियत्वेन दुर्ग्रहत्वाच्छिष्टाचारेण प्रवृत्त्यनापत्तिरिति शंकनीयं, प्रशमसंवेगादिलिंगैस्तस्य सुग्रहत्वात् । दोषा रागादय एव तेषां च दिव्यज्ञानादर्वाक् न क्षयमुपलजामहे न वा तेषु निरवयवेष्वंशोऽस्ति येनांशतः तत्क्षयो वक्तुं शक्येतेति चेन्न, अत्युचितप्रवृत्तिसंवेगादिलिंगकप्रबलतदुपक्षयस्यैवांशतो दोषक्षयार्थत्वात्, आत्मानुग्रहोपघातकारित्वेन चयोपचयवतः सावयवस्य कर्मरूपदोषस्य प्रसिद्धत्वाच्च इत्यन्यत्र विस्तरः। हि निश्चितं। परोक्तं तु द्विजन्मोज्ञावितं तु। तस्य शिष्टस्य लक्षणं । असंगतमयुक्तम् ॥१६॥

तथाहि—

**वेदप्रामाण्यमन्तृत्वं बौद्धे ब्राह्मणताडिते । अतिव्याप्तं द्विजेऽव्याप्तं स्वापे स्वारसिकं च तत् ॥ १७ ॥**

वेदेति—"वेदप्रामाण्यमन्तृत्वं" एतावदेव शिष्टलक्षणं । ब्राह्मणताडिते बौद्धेऽतिव्याप्तं, तेनापि "वेदाः प्रमाणं" इत्यभ्युपगमात् । स्वारसिकं च तत् वेदप्रामाण्यमन्तृत्वं द्विजे ब्राह्मणेऽव्याप्तं । अयं भावः—स्वारसिकत्वविशेषणेन बौद्धेऽतिव्याप्तिनिरासेऽपि 'स्वारसिकवेदप्रामाण्यमन्तृत्वं' यदाकदाचिद्ग्राह्यं सर्वदा वा ? आद्ये बौद्धे एवातिव्याप्तितादवस्थ्यं, तस्यापि जन्मान्तरे वेदप्रामाण्याभ्युपगमध्रौव्यात् । अन्त्ये च शयनादिदशायां वेदप्रामाण्याभ्युपगमाभाववति ब्राह्मणेऽव्याप्तिरिति।१७।

**तदभ्युपगमाद्यावन्न तद्व्यत्ययमन्तृता । तावच्छिष्टत्वमिति चेत्तदप्रामाण्यमन्तरि ॥ १८ ॥**

तदिति—तस्य वेदप्रामाण्यस्याभ्युपगमात् यावन्न तद्व्यत्ययस्य वेदाप्रामाण्यस्य मन्तृताऽभ्युपगमः तावच्छिष्टत्वं । शयना-

विदशाया च वेदाप्रामाण्यानभ्युपगमाद्ब्राह्मणे नान्याप्तिरिति भावः । अप्रामाण्यमननस्यापि स्वारसिकस्य ग्रहणाद्बौद्ध-तार्किते ब्राह्मणे वेदाप्रामाण्याभ्युपगन्तरि नातिव्याप्तिः अप्रमाकरणत्वाज्ञायचोश्च द्वयोरपि प्रामाण्यविरोधित्वेन समग्राह्मे-क्प्रहेऽभ्याभ्युपगन्तर्यतिव्याप्तिः । अत्राह—इति चेत्तदप्रामाण्यमन्तरि वेदाप्रामाण्याभ्युपगन्तरि ॥ १८ ॥

अजानति च वेदत्वमभ्यास चेद्विवक्ष्यते । वेदत्वेनाभ्युपगमस्तथापि स्यादद. किल ॥ १९ ॥

अजानति चेति—वेदस्य च वेदेऽजानति ब्राह्मणे अभ्यासं लक्षणमेतत् । तेन वेदाप्रामाण्याभ्युपगमात् । अथ चेद्यदि वेदत्वेनाभ्युपगमो विवक्ष्यते वेद एव वेदत्वमजानतश्च न वेदत्वेनाप्रामाण्याभ्युपगम किं त्विदमप्रमाणमिति इत्यादिने-वेति नाव्याप्तिः तथाप्यद एतल्लक्षणं किल ॥ १९ ॥

ब्राह्मण पातकात्प्राप्तः काकजन्म तदापि हि । व्याप्नोतीशं च नोत्कृष्टज्ञानावच्छेदिका तनुः ॥ २० ॥

ब्राह्मण इति—यदा ब्राह्मणः पातकात् काकजन्मनिबन्धनाद्दुरितात् । काकजन्म प्राप्तः तदापि हि स्यात् ब्राह्मण्यदशायां वेदप्रामाण्याभ्युपगन्तृत्वात् काकदशायां च वेदाप्रामाण्यानभ्युपगन्तृत्वात् । उत्कृष्टज्ञानावच्छेदिका च तनुरीशं जगतीपतिं न व्याप्नोति । तथा च काकेऽतिव्याप्तिवारणार्थमुत्कृष्टज्ञानावच्छेदकशरीरवत्त्वे सतीति विशेषणदाने ईश्वरेऽव्याप्तिरित्यर्थः ॥

अन्यागरहितत्वं च तस्य काकजनोत्तरम् । देहान्तरामहृदशामाश्रित्यातिप्रसक्तिमत् ॥ २१ ॥

अन्येति—अन्यागरहितत्वं च अपकृष्टज्ञानावच्छेदकशरीरराहित्यं च । तस्य ब्राह्मणजन्मानन्तरप्राप्तकाकजन्मस्य । काकजन्मोत्त-र देहान्तरामहृदशां शरीरान्तरानुपादानावस्थां आश्रित्य अतिप्रसक्तिमदतिव्याप्तं तदानीमपकृष्टज्ञानावच्छेदकशरीरराहित्यात्

**अवच्छेदकदेहानामपकृष्टधियामथ । संबन्धविरहो यावान् प्रामाण्योपगमे सति ॥ २२ ॥**

अवच्छेदकेति–अथ प्रामाण्योपगमे सति वेदप्रामाण्याभ्युपगमकाले । यावान् अपकृष्टधियां अवच्छेदकदेहानां अपकृष्टज्ञानावच्छेदकशरीराणां । संबन्धविरहः संबन्धाभावः ॥ २२ ॥

**अप्रामाण्यानुपगमस्तावत्कालीन एव हि । शिष्टत्वं काकदेहस्य प्रागभावस्तदा च न ॥ २३ ॥**

अप्रामाण्येति–तावत्कालीन एव हि सकलतत्समानकालीन एव । अप्रामाण्यानुपगमो वेदाप्रामाण्याभ्युपगमविरहः शिष्टत्वं । काकदेहस्य प्रागभावो वेदप्रामाण्याभ्युपगमसमानकालीनः तदा च काकस्य मरणानन्तरं शरीरान्तराग्रहदशायां नास्तीति नातिव्याप्तिः । इत्थं च यावन्तं कालं वेदत्वेन वेदाप्रामाण्याभ्युपगमस्य विरहो वेदप्रामाण्याभ्युपगमसमानकालीनयावदप्रकृष्टज्ञानावच्छेदकशरीरसंबन्धाभावसमानकालीनस्तावन्तं कालं स शिष्टः । ब्राह्मणोऽपि बौद्धो जातो वेदाप्रामाण्यं यावन्नाभ्युपगतवान् तावच्छिष्ट एव । बौद्धोऽपि ब्राह्मणो जातो वेदप्रामाण्यं यावन्नांगीकृतवांस्तावदशिष्ट एवेति फलितमाह पद्मनाभः । अत्र च वेदप्रामाण्याभ्युपगमसमानकालीनत्ववत्तत्सामानाधिकरण्यमपि वाच्यं । अन्यथोत्तरकालं तत्कालीनं यत्किंचिद्व्यधिकरणापकृष्टज्ञानावच्छेदकशरीरसंबन्धप्रागभावनाशेनाव्याप्त्यापत्तेः ॥ २३ ॥

**नैवं तदुत्तरे विप्रेऽव्याप्तेः प्राक्प्रतिपत्तितः । प्रामाण्योपगमात्तन्न प्राक् तत्रेति न सेति चेत् ॥ २४ ॥** ॥ ९२ ॥

नैवमिति–नैवं यथा विवक्षितं प्राक् । तदुत्तरे विप्रे काकभवोत्तरमवाप्तब्राह्मणभवे । प्राक्प्रतिपत्तितः प्राग्भवीयवेदप्रा-

माण्यमदमाश्रित्याव्याप्तेः । तदानीं तदीयवेदाप्रामाण्याभ्युपगमविरहस्य प्राक्तनब्राह्मणजन्मीयवेदप्रामाण्याभ्युपगमसमानकालीनयावदप्रकृष्टज्ञानायच्छेदकशरीरसंबन्धविरहासमानकालीनत्वादान्तरालिककाकजन्म एव काकशरीरसम्बन्धप्रागभावनाशात् । प्रामाण्योपगमाद्वेदप्रामाण्याभ्युपगमात् प्राक् तत्र काकजन्मोत्तरब्राह्मणे सन्निहितत्वं न इति हेतोरसत्त्वस्यादेव न साऽव्याप्तिः । वेदप्रामाण्याभ्युपगमे तु लक्षणासंभवस्यैवेति भावः । इति चेदन्येव यत्किंचिद्वेदप्रामाण्याभ्युपगम एव ग्राह्यः ॥

तथा च–

यत्किञ्चित्तद्ग्रहे पश्चात् प्राक् च काकस्य जन्मनः । विप्रजन्मान्तराले स्यात्सा ध्वंसप्रागभावतः ॥२५॥

यत्किंचिदिति–यत्किंचित्तद्ग्रहे यत्किंचिद्वेदाप्रामाण्याभ्युपगमस्य लक्षणमध्यनिवेशे । काकस्य जन्मनः पश्चात् प्राक् च । विप्रजन्मनोरन्तरालेऽव्याप्तिविश्लेषाभ्यां मध्यभागे । ध्वंसप्रागभावतः काकशरीरसंबन्धध्वंसप्रागभावावाश्रित्य । सा प्रसिद्धाऽतिव्याप्तिः स्यात् । अयं भावः–यो ब्राह्मणः काको जातस्तदनन्तरं च ब्राह्मणो भविष्यति तस्य मरणानन्तरं ब्राह्मणशरीराग्रहदशायामुत्तरब्राह्मणजन्मकालीनवेदप्रामाण्याभ्युपगमसमानकालीनकाकशरीरध्वंसेनैव लक्षणसाम्यादव्याप्तिः । प्राक्तनकाकशरीरसंबन्धप्रागभावस्तु न तत्समानकालीन एवेति तस्यैव ब्राह्मणजन्मस्यागानन्तरं काकशरीराग्रहदशायां प्राक्तनब्राह्मणजन्मकालीनवेदप्रामाण्याभ्युपगमसमानकालीनकाकशरीरसंबन्धप्रागभावेनाव्याप्तिरिति । किं च यो ब्राह्मणः प्राग् बौद्धो भूत्वा तस्य स्वापादिदशायां वेदाप्रामाण्याभ्युपगमविरहस्याभिमब्राह्मणजन्मीयनिरुक्तयावच्छरीरसंबन्धाभावसमानकालीनत्वात्तत्राप्यव्याप्तिरिति बोध्यम् ॥ २५ ॥

१५ सम्म-
ग्दृष्टि
॥ ८२ ॥



जीववृत्तिविशिष्टांगाभावाभावग्रहोऽप्यसन् । उत्कर्षश्चापकर्षश्चाव्यवस्थो यदपेक्षया ॥ २६ ॥

जीवेति–जीववृत्तिविशिष्टः क्षेत्रज्ञवृत्तित्वविशिष्टो योऽङ्गाभाव उत्कृष्टज्ञानावच्छेदकशरीराभावस्तदभावग्रहोऽपि तदभावनिवेशोऽपि । काकेश्वरयोरतिव्याप्तिवारणार्थमसन्नदुष्टलक्षणाधानासमर्थः । यद्यस्मादुत्कर्षश्चापकर्षश्च अपेक्षया व्यवस्थितः । कीटिकादिज्ञानापेक्षयोत्कृष्टत्वात् काकादिज्ञानस्य, ब्राह्मणादिज्ञानस्य च देवादिज्ञानापेक्षयाऽपकृष्टत्वात् । इत्थं च तदवस्थे एवातिव्याप्त्यव्याप्ती । न च काकादिज्ञानव्यावृत्तं मनुष्यादिज्ञानसाधारणमुत्कर्षं नाम जातिविशेषमाद्रियन्ते भवन्तः, अन्यथा कार्यमात्रवृत्तिजातेः कार्यतावच्छेदकत्वनियमेन तदवच्छिन्नेऽनुगतकारणकल्पनापत्तिः,ईश्वरज्ञानसाधारण्यान्न तस्य कार्यमात्रवृत्तित्वमिति चेत्तथापि देवदत्तादिजन्यतावच्छेदिकयाऽपकर्षविशेषेण च सांकर्यान्न जातित्वं तत्तद्ज्ञानावच्छेदकशरीरसंबन्धाभावकूटस्तु दुर्ग्रह इति न किंचिदेतत् ॥ २६ ॥

ननु एकजन्मावच्छेदेन स्वसमानाधिकरणस्वोत्तरवेदाप्रामाण्याभ्युपगमध्वंसानाधारवेदप्रामाण्याभ्युपगमोत्तरकालवृत्तित्वविशिष्टवेदाप्रामाण्याभ्युपगमविरहः शिष्टत्वमिति निर्वचने न कोऽपि दोषो भविष्यतीत्यत आह–

अपि चाव्याप्त्यतिव्याप्ती कात्स्न्र्यदेशविकल्पतः । आद्यग्रहे स्वतात्पर्यान्न दोष इति चेन्मतिः ॥२७॥

॥ ८३ ॥

अपि चेति–अपि च कात्स्न्र्यदेशविकल्पतः कृत्स्नवेदप्रामाण्याभ्युपगमो विवक्षितो देशतदभ्युपगमो वेति विवेचनेऽव्याप्त्यतिव्याप्ती । कृत्स्नवेदप्रामाण्याभ्युपगमस्य ब्राह्मणेष्वप्यभावात् । न हि वेदान्तिनो नैयायिकाद्यभिमतां श्रुतिं प्रमाणयन्ति, नैयायिकादयो वा वेदान्त्यभिमतां । यत्किंचिद्वेदप्रामाण्यं च बौद्धादयोऽप्यभ्युपगच्छन्ति “न हिंसात् सर्वभू-

तानि, अग्निर्हिमस्य भेषजम्" इत्यादिवचनानां तेषामपि संभवत्वादिति। स्वतात्पर्यात् स्वाभिप्रायमपेक्ष्य। आपमहे या-वद्वेदप्रामाण्याभ्युपगमनिवेशे। न दोषः, स्वस्वतात्पर्ये प्रमाणं श्रुतिरिति हि सर्वेषां नैयायिकादीनामभ्युपगमः। इति चे-न्मतिः कल्पना त्वदीया॥ २१॥

नैवं विशिष्य तात्पर्यभिदे तन्मानताऽप्रसङ्गात्। सामान्यतः स्वतात्पर्ये प्रामाण्यं नोऽपि संमतम्॥२८॥

नैवमिति—एवं मतिनियुक्त्वा कस्याश्चिदुरवबोधायाः श्रुतेर्विशिष्य स्वकल्पितार्थानुसारेण तात्पर्यभिदे। तन्मानतायास्त-त्प्रमाणताया अप्रसङ्गात्। स्वतात्पर्ये सर्ववेदप्रामाण्याभ्युपगमस्य दुःशकत्वादनाकलिततात्पर्यायामपि श्रुतौ प्रमोपहितत्वाप्र-सङ्गेऽपि प्रमाकरत्वस्य सुमहत्त्वाच्च दोष इत्यत आह—सामान्यतो नयरूपत्वेन। स्वतात्पर्ये स्वाभिप्रायप्रामाण्ये वेदप्रामाण्यं। नोऽस्माकं जैनानामपि संमत। यावन्तो हि परसमयास्तावन्त एव नया इति श्रुतपरिकर्मितमतेः सर्वमेव शब्दं प्रमाणीकुर्वतः सकलवेदप्रामाण्याभ्युपगमोऽनपाय एवेति॥ २८॥

एतदेवाह

मिथ्यादृष्टिगृहीतं हि मिथ्या सम्यगपि श्रुतम्। सम्यग्दृष्टिगृहीतं तु सम्यङ्मिथ्येति नः स्थितिः॥२९॥

मिथ्यादृष्टीति—मिथ्यादृष्टिगृहीतं हि सम्यगपि श्रुतमाचारादिकं मिथ्या भवति, तं प्रति तस्य विपरीतबोधनिमित्तत्वात्। सम्यग्दृष्टिगृहीतं तु मिथ्यापि श्रुतं वेदपुराणादिकं सम्यक्, तं प्रति तस्य यथार्थबोधनिमित्तत्वात्। इति नोऽस्माकं स्थितिः

सिद्धान्तमर्यादा । प्रमानिमित्तत्वमात्रमेतदभ्युपगतं न तु प्रमाकरणत्वमिति चेन्न, त्वदुक्तं प्रमाकरणत्वमेव प्रमाणत्वमिति सर्वेषां प्रमातृणामनभ्युपगमात् ॥ २९ ॥

**तात्पर्यं वः स्वसिद्धान्तोपजीव्यमिति चेन्मतिः । ननु युक्त्युपजीव्यत्वं द्वयोरप्यविशेषतः ॥ ३० ॥**

तात्पर्यमिति–वो युष्माकं स्वसिद्धान्तोपजीव्यं स्वसिद्धान्तपुरस्कारि तात्पर्यं । तथा चान्यागमानुपजीव्यतात्पर्ये सकलवेदप्रामाण्याभ्युपगमनिवेशान्न दोष इति चेद्यदि तव मतिः, ननु तदा द्वयोरप्यावयोरविशेषतो युक्त्युपजीव्यत्वं । अयं भावः–अन्यागमानुपजीव्यत्वं ह्यन्यागमा(म)संवादित्वं चेत्तत्संवादिनि स्वाभिप्रायेऽप्यास्तिरयौक्तिका तदसंवादित्वं चेदस्माकमपि तात्पर्यमयौक्तिकागमासंवाद्येव, सर्वस्यैव भगवद्वचनस्य युक्तिप्रतिष्ठितत्वात् मिथ्याश्रुततात्पर्यस्यापि स्याद्वादसंगतयुक्त्यैव गृह्यमाणत्वात् ॥ ३० ॥

यतः–

**उद्भावनमनिग्राह्यं युक्तेरेव हि यौक्तिके । प्रामाण्ये च न वेदत्वं सम्यक्त्वं तु प्रयोजकम् ॥ ३१ ॥**

उद्भावनमिति–यौक्तिके ह्यर्थे युक्तेरेवोद्भावनमनिग्राह्यमनिग्रहस्थानं, अन्यथा निग्रहाभिधानात् । यद्वादी–" जो हेउवायपक्खंमि हेउओ आगमे अ आगमिओ । सो ससमयपन्नवओ सिद्धंतविराहगो अन्नो ॥ १ ॥" इति । अथ वेदत्वमेव प्रामाण्यप्रयोजकमित्यभ्युपगमे यावद्वेदप्रामाण्याभ्युपगमः स्यादित्यत आह–प्रामाण्ये च वेदत्वं न प्रयोजकं किं तु सत्यत्वमेव, लोकशब्दस्याप्यविसंवादिनः प्रमाणत्वादिति श्रद्धामात्रमेतदिति न किंचिदेतत् ॥ ३१ ॥

शिष्टत्वमुक्तमत्रैव भेदेन प्रतियोगिनः । तमानुभविकं बिभ्रत् परमानन्दवत्यतः ॥ ३२ ॥

शिष्टत्वमिति—अतः परोक्तशिष्टलक्षणनिरासात् । अत्रैव सम्यग्दृष्टावेव उक्तं अंशतः क्षीणदोषत्वं शिष्टत्वं । परमानन्दवति दुर्भेदमिथ्यात्वमोहनीयभेदसमुत्थनिरतिशयानन्दभाजने । शिष्टत्वलिंगाभिधानमेतत् । प्रतियोगिनो दोषस्य क्षीयमाणस्य भेदेन तं भेदमानुभविकं सकलजनानुभवसिद्धं बिभ्रत् । भवति हि अयमस्मात् शिष्टतरोऽयमस्माच्छिष्टतम इति सार्वजनीनो व्यवहारः । स चाधिकृतापेक्षयाऽधिकतराधिकतमदोषक्षयविषयतया उपपद्यते । परेषां तु न कथंचित् सर्वेषां वेदप्रामाण्याभ्युपगमादौ विशेषाभावात् । एतेन वेदविहितार्थानुष्ठातृत्वं शिष्टत्वमित्यपि निरस्तं । यावदेकदेशविकल्पाभ्यामसंभवातिव्याप्त्योः प्रसंगाच्च । यत्त्वदृष्टसाधनताविषयकमिथ्याज्ञानाभाववत्त्वं शिष्टलक्षणमुच्यते तत्त्वस्मदुक्तशिष्टत्वव्यंजकमेव युक्तमाभाति, न तु परनीत्या स्वतंत्रलक्षणमेव । गंगाजले कूपजलत्वारोपानन्तरमिदं कूपजलं नादृष्टसाधनमिति भ्रमवतः, कूपजल एव गंगाजलत्वारोपानन्तरमिदं गंगाजलमदृष्टा(ष्ट)साधनमिति भ्रमवतो गंगाजले उच्छिष्टत्वारोपानन्तरं नादृष्टसाधनमिति भ्रमवतश्चाशिष्टत्ववारणायादृष्टसाधनतावच्छेदकरूपपुरस्कारेण निषेधमुखेनादृष्टसाधनताविरोधिरूपापुरस्कारेण चादृष्टसाधनताविषयकत्वविवक्षायामपि स्वापादिदशायां मौग्ध्यादावतिव्याप्तेरेतावदभ्रमेऽपि सर्वत्र शमादिलिंगेन शिष्टत्वव्यवहाराच्चेति किमनया कुसृष्ट्या ? ॥ ३२ ॥

॥ इति सम्यग्दृष्टिद्वात्रिंशिका ॥ १५ ॥

---

PANDIT BHAGWANDAS JAIN
C/O MOTISIH BHOMIAS RASTA.
JAIPUR CITY (RAJPUTANA)

# ॥ अथेशानुग्रहविचारद्वात्रिंशिका ॥ १६ ॥

सम्यग्दृष्टिनिरूपणानन्तरं तन्निर्वाहकमीशानुग्रहं विचारयति–

**महेशानुग्रहात्केचिद्योगसिद्धिं प्रचक्षते । क्लेशाद्यैरपरामृष्टः पुंविशेषः स चेष्यते ॥ १ ॥**

महेशेति–केचित् पातञ्जलाः । महेशानुग्रहात् योगस्योक्तलक्षणस्य सिद्धिं योगक्षेमलक्षणां । प्रचक्षते कथयन्ति । स च महेशः । पुंविशेषः पुरुषविशेष इष्यते । कीदृश इत्याह–क्लेशाद्यैः क्लेशकर्मविपाकाशयैरपरामृष्टः अस्पृष्टः त्रिष्वपि कालेषु । तथा च सूत्रं–"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः"(१-२४)इति । अत्र क्लेशा अविद्यास्मितारागद्वेषाभिनिवेशा वक्ष्यमाणलक्षणाः। क्लेशमूलः कर्माशयः। दृष्टादृष्टजन्मवेदनीयः,अस्मिन्नेव जन्मन्यनुभवनीयो दृष्टजन्मवेदनीयः, जन्मान्तरानुभवनीयस्त्वदृष्टजन्मवेदनीयः । तीव्रसंवेगेन हि कृतानि पुण्यानि देवताराधनादीनि कर्माणि इहैव जन्मनि फलं जात्यायुर्भोगलक्षणं प्रयच्छन्ति, यथा नन्दीश्वरस्य भगवन्महेश्वराराधनबलादिहैव जन्मनि जात्यादयो विशिष्टाः प्रादुर्भूताः । न चैतदनुपपत्तिः, सदनुष्ठानेन प्रतिबन्धकापनयने केदारान्तरे जलापूरणवत्पाश्चात्यप्रकृत्यापूरणेनैव सिद्धिविशेषोपपत्तेः । तदुक्तं–"जन्मौषधिमंत्रतपःसमाधिजाः सिद्धयः"(४-१) । सिद्धिश्चोत्कर्षविशेषः कार्यकारणस्य जात्यन्तरपरिणामः प्रकृत्यापूरात् निमित्तमप्रयोजकं । प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवदिति । "सति मूले तद्विपाको जात्यायुर्भोगाः" (२-१३) । सति मूले क्लेशरूपबीजे तेषां कुशलाकुशलकर्मणां विपाकः फलं जात्यायुर्भोगा भवन्ति । जातिर्मनुष्यादिः, आयुश्चिरकालं

शरीरसंबन्धः, भोगा विषयाः, इन्द्रियाणि सुखदुःखसंविच्च । कर्मकरणभावसाधनव्युत्पत्त्या भोगशब्दस्य । इदमत्र तात्पर्यं ।
चित्त हि द्विविधं साशयमनाशयं च । तत्र योगिनामनाशयं । तदाह–"(तत्र) ध्यानजमनाशयं" (४-६)। अत एव तेषाम-
शुक्लाकृष्णं कर्म । तदाह–"कर्माशुक्लकृष्णं योगिनः त्रिविधमितरेषां (४-७)"–शुभफलद कर्म योगादि शुक्लं, अशुभफ-
लदं ब्रह्महत्यादि कृष्णं, उभयसंकीर्णं शुक्लकृष्णं । तत्र शुक्लं दानतपःस्वाध्यायादिमतां पुरुषाणां, कृष्णं नारकाणां, शुक्ल-
कृष्णं मनुष्याणां, योगिनां तु विलक्षणमिति । साशयं चित्तमयोगिनां । तत्र फलत्यागानुसन्धानाभावात्फलजनकः कर्मा-
शयः, ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानां । द्विविधा हि कर्मवासनाः स्मृतिमात्रफला जात्यायुर्भोगफलाश्च ।
तत्राद्या येन कर्मणा यादृक् शरीरमारब्धं देवमानुषतिर्यगादिभेदेन आत्यन्तरशतव्यवधानेन पुनस्तथाविधस्यैव शरीरस्या-
रम्भे तदनुरूपामेव स्मृतिं जनयन्ति, अन्यादृशीं च न्यग्भावयन्ति, देवादिभवे नारकादिशरीरोपभोगस्मृतिवत् । न चाति-
व्यवहितयोः स्मृतिसंस्कारयोर्जन्यजनकभावानुपपत्तिः, दूरानुभूतस्याप्यविच्छिन्नचित्ते वासनात्मना स्थितस्योद्बोधविशेषस-
हकारेण स्मृतिविशेषपरिणामे व्यवधानाभावात् । तदुक्तं–"जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयोरेकरू-
पत्वात्" (४-९)। ताश्च सुखसाधनावियोगाध्यवसायसंकल्पस्य मोक्षलक्षणस्य बीजस्यानादित्वादादिरहिताः । तदुक्तं–"ता-
सामनादित्वं चाशिषो नित्यत्वात्" ( ४-१० )। द्वितीया अपि चित्तभूमावेवानादिकाल संचिता यथा यथा पाकमुपयान्ति
तथा तथा गुणप्रधानभावेन स्थिता जात्यायुर्भोगलक्षणं कार्यमारभन्त इति । तदेतत्कर्माशयफलं जात्यादिविपाक इति ।

यद्यपि सर्वेषामात्मनां क्लेशादिपरामर्शो नास्ति, तथापि ते चित्तगतास्तेषां व्यपदिश्यन्ते, यथा योधगतौ जयाजयौ स्वामिनः। अस्य तु त्रिष्वपि कालेषु तथाविधोऽपि क्लेशादिपरामर्शो नास्तीति विलक्षणोऽयमन्येभ्यः ॥ १ ॥

**ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम् ॥ २ ॥**

ज्ञानमिति–ज्ञानादयो ह्यत्र ( स ) प्रतिपक्षाः सहजाश्च शुद्धसत्त्वस्यानादिसंबन्धात्। यथा हीतरेषां सुखदुःखमोहतया विपरिणतं चित्तं निर्मले सात्त्विके धर्मात्मप्रख्ये प्रतिसंक्रान्तं चिच्छायासंक्रान्तान्तःसंवेद्यं भवति, नैवमीश्वरस्य, किंतु तस्य केवल एव सात्त्विकः परिणामो भोग्यतया व्यवस्थित इति। किं च प्रकृतिपुरुषसंयोगवियोगयोरीश्वरेच्छाव्यतिरेकेणानुपपत्तेरनादिज्ञानादिमत्त्वमस्य सिद्धम् ॥ २ ॥

**सात्त्विकः परिणामोऽत्र काष्ठाप्राप्ततयेष्यते। नाक्षप्रणालिकाप्राप्त इति सर्वज्ञतास्थितिः ॥ ३ ॥**

सात्त्विक इति–अत्रेश्वरे सात्त्विकः परिणामः। काष्ठाप्राप्ततयाऽत्यन्तोत्कृष्टत्वेन इष्यते। तारतम्यवतां सातिशयानां धर्माणां परमाणावल्पत्वस्येवाकाशे परममहत्त्वस्येव काष्ठाप्राप्तिदर्शनात् ज्ञानादीनामपि चित्तधर्माणां तारतम्येन परिदृश्यमाणानां क्वचिन्निरतिशयत्वसिद्धेः। न पुनरक्षप्रणालिकया इन्द्रियद्वारा प्राप्त उपनीतः। इति हेतोः। सर्वविषयत्वादेतच्चित्तस्य सर्वज्ञतायाः स्थितिः प्रसिद्धिः। तदुक्तं–"तत्र निरतिशयं सर्वज्ञबीजम्" ( १-२५ ) ॥ ३ ॥



**ऋषीणां कपिलादीनामप्ययं परमो गुरुः। तदिच्छया जगत्सर्वं यथाकर्म विवर्तते ॥ ४ ॥**

ऋषीणामिति–अयमीश्वर कपिलादीनामपि ऋषीणां परम उत्कृष्टो गुरु । तदुक्तं–"स पूर्वेषामपि गुरुः कालेनानव-च्छेदादिति" (१–२६)। तस्येश्वरस्येच्छया सर्वं जगत् यथाकर्म कर्मानतिक्रम्य विपाकं उपायफलजातं नयति । न च कर्मणो (क्रियाया) वाऽन्यथासिद्धिः, एककारकेण कारकान्तरानुपपत्त्यादिति भाव ॥ ४ ॥

एतद्दूषयति–

**नैतद्युक्तमनुमाने तत्स्वभावत्वमन्तरा । नाणुः कदाचिदात्मा स्याद्देवतानुग्रहादपि ॥ ५ ॥**

नैतदिति–एतदीश्वरानुग्रहजन्यत्वं योगस्य न युक्तं । अनुमाने तत्स्वभावत्वमनुग्राह्यस्वभावत्वमन्तरा विना । यतो देवताया अनुग्रहादपि 'अणुरात्मा भवतु' इतीच्छालक्षणात् । कदाचिदपि अणुरात्मा न स्यात् स्वभावापरावृत्ते ॥ ५ ॥

**उभयोस्तत्स्वभावत्वभेदे च परिणामिता । अत्युत्कर्षश्च धर्माणामन्यत्रातिप्रसञ्जक ॥ ६ ॥**

उभयोरिति–उभयोरीश्वरात्मनोः । तत्स्वभावत्वभेदे च व्यक्तिकालफलादिभेदेन विचित्रानुग्राह्यानुग्राहकस्वभावभा-जनत्वे च परिणामिता स्यात् स्वभावभेदस्येव परिणामभेदार्थत्वात् । तथा चापसिद्धान्त । ज्ञानादिधर्माणामत्युत्कर्षेणे-श्वरसिद्धिरित्यपि च नास्ति । यतो धर्माणामत्युत्कर्षः साध्यमानो ज्ञानादाविवान्यत्राज्ञानादावतिप्रसंजकोऽनिष्टसिद्धिकृत् अत्युत्कृष्टज्ञानादिमत्त्वयेश्वरस्येव तादृशाज्ञानादिमत्तया तत्प्रतिपक्षस्यापि सिद्ध्यापत्तेः। अथ च ज्ञानत्वमुत्कर्षापकर्षानाश्रयवृत्ति, उत्कर्षापकर्षाश्रयवृत्तित्वात्, महत्त्ववदित्यत्र ज्ञानत्वं न तथा, चित्तधर्ममात्रवृत्तित्वात्, अज्ञानवदिति प्रतिरोधो द्रष्टव्यः ।

प्रकृतिपुरुषसंयोगवियोगौ च यदि तात्त्विकौ तदात्मनोऽपरिणामित्वं न स्यात्, तयोर्दिष्टत्वेन तस्य जन्यधर्मानाश्रयत्वक्षतेः, नो चेत्कयोः कारणमीश्वरेच्छा। किं च प्रयोजनाभावादपि नेश्वरो जगत् कुरुते। न च परमकारुणिकत्वाद्भूतानुग्रह एवास्य प्रयोजनमिति भोजस्य वचनं सांप्रतं, इत्थं हि सर्वस्यायमिष्टमेव संपादयेदित्यधिकं शास्त्रवार्तासमुच्चयविवरणे ॥ ६ ॥

आर्थं व्यापारमाश्रित्य तदाज्ञापालकात्मकम् । युज्यते परमीशस्यानुग्रहस्तंत्रनीतितः ॥ ७ ॥

आर्थमिति–आर्थं ततः सामर्थ्यप्राप्तं न तु प्रसह्य तेनैव कृतं। तदाज्ञापालनात्मकं व्यापारमाश्रित्य। परं केवलं। तंत्रनीतितोऽस्मत्सिध्धान्तनीत्या ईशस्यानुग्रहो युज्यते। तदुक्तं–"आर्थं व्यापारमाश्रित्य न च दोषोऽपि विद्यते" इति॥७॥

एवं च प्रणवेनैतज्जपात् प्रत्यूहसंक्षयः। प्रत्यक्चैतन्यलाभश्चेत्युक्तं युक्तं पतञ्जलेः ॥ ८ ॥

एवं चेति–एवं चार्थव्यापारेणेशानुग्रहादरे च। प्रणवेनोंकारेण। एतस्येश्वरस्य जपात्। प्रत्यूहानां विघ्नानां संक्षयः। विषयप्रातिकूल्येनान्तःकरणाभिमुखमंचति यत्तत् प्रत्यक्चैतन्यं ज्ञानं तस्य लाभश्च। इति पतंजलेरुक्तं युक्तं। तस्य वाचकः प्रणवः, तज्जपस्तदर्थभावनं, ततः प्रत्यक्चेतनाधिगमोऽन्तरायाभावश्चेति प्रसिध्धेर्गुणविशेषवतः पुरुषस्य प्रणिधानस्य महाफलत्वात्॥ ८ ॥

प्रत्यूहा व्याधयः स्त्यानं प्रमादालस्यसंभ्रमाः। सन्देहाविरती भूम्यलाभश्चाप्यनवस्थितिः ॥ ९ ॥

प्रत्यूहा इति—"व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः" (१–३०) इति सूत्रम् ॥ ९ ॥

धातुवैषम्यजो व्याधिः स्त्यानं चाकर्मनिष्ठता । प्रमादोऽयत्न आलस्यमौदासीन्यं च हेतुषु ॥ १० ॥

धात्विति—धातुवैषम्यजो धातूनां वातादिजनितः । व्याधिर्ज्वरातिसारादिः । स्त्यानं चाकर्मनिष्ठता आदित एव कर्मानारम्भः । प्रमादोऽयत्न आरब्धेऽप्यनुष्ठानशीलता । आलस्यं च । हेतुषु समाधिसाधनेषु । औदासीन्यं माध्यस्थ्यं । न तु पक्षपातः ॥ १० ॥

विभ्रमो व्यत्ययज्ञानं सन्देहः स्यान्नवेत्ययम् । अखेदो विषयावेशान्निर्वेदविरतिः किल ॥ ११ ॥

विभ्रम इति—विभ्रमो व्यत्ययज्ञानं रजते रङ्गबुद्धिवत् इष्टसाधनेऽपि योगेऽनिष्टसाधनत्वनिश्चयः । संदेहोऽयं योगः स्याद्वा न वेत्याकारः । विषयावेशाद्बाह्येन्द्रियार्थव्याक्षेपलक्षणात् । अखेदोऽनुपरमलक्षणः । किलाविरतिर्ज्ञेया ॥ ११ ॥

शून्यत्वान्न समाधीनां ध्रुवोऽप्राप्तिः कथंचन । लब्धेऽपि तत्र चित्तस्याप्रतिष्ठा त्वनवस्थितिः ॥ १२ ॥

शून्यत्वान्न इति—कुतोऽपि हेतोः समाधीनां ध्रुवः स्थानस्याप्राप्तिः शून्यत्वान्नः । लब्धेऽपि समाधिभूमावपि । तत्र समाधिभुवि । चित्तस्याप्रतिष्ठाऽनिवेशस्त्वनवस्थितिः ॥ १२ ॥

रजस्तमोमयाद्दोषाद्विक्षेपाश्चेतसो ह्यमी । सोपक्रमा जपान्नाशं यान्ति शक्तिहृतिं परे ॥ १३ ॥

रज इति–अमी हि रजस्तमोमयाद्दोषाच्चेतसो विक्षेपा एकाग्रताविरोधिनः परिणामाः । सोपक्रमा अपवर्तनीयकर्मजनिताः सन्तः । जपाङ्गभक्ति प्रणिधानात् नाशं यान्ति । परे निरुपक्रमाः शक्तिहतिं दोषानुबन्धशक्तिभ्रंशं । अन्यथापि योगप्रतिबन्धसामर्थ्यमेषामपगच्छतीति भावः ॥ १३ ॥

**प्रत्यक्चैतन्यमप्यस्मादन्तर्ज्योतिःप्रथामयम् । बहिर्व्यापाररोधेन जायमानं मतं हि नः ॥ १४ ॥**

प्रत्यगिति–अस्माज्जपजापात् । बहिर्व्यापाररोधेन शब्दादिबहिरर्थग्रहत्यागेन । अन्तर्ज्योतिःप्रथा ज्ञानादिविशुद्धिविस्तारः तन्मयं प्रत्यक्चैतन्यमपि हि जायमानं मतं नोऽस्माकं, तथैव भक्तिश्रद्धाद्यतिशयोपपत्तेः ॥ १४ ॥

**योगातिशयतश्चायं स्तोत्रकोटिगुणः स्मृतः । योगदृष्ट्या बुधैर्दृष्टो ध्यानविश्रामभूमिका ॥ १५ ॥**

योगेति–योगातिशयतश्चात्माभ्यन्तरपरिणामोत्कर्षाच्च । अयं जपः । स्तोत्रकोटिगुणः स्मृतः चिरन्तनाचार्यैः । वाग्योगापेक्षया मनोयोगस्याधिकत्वात् । अत एव मौनविशेषेणैव जपः प्रशस्यते । तथा बुधैर्विशारदैः योगदृष्ट्या योगजप्रातिभज्ञानेन । ध्यानस्य विश्रामभूमिका पुनरारोहस्थानं दृष्टः ॥ १५ ॥

ननु परैर्यादृश ईश्वरोऽभ्युपगतस्तादृशस्य भवद्भिरनभ्युपगमात् कथमार्यव्यापारेणापि तदनुग्रहसिद्धिरित्याशंकायां विषयविशेषपक्षपातेनैव समाधानाभिप्रायवानाह–

**माध्यस्थ्यमवलम्ब्यैव देवतातिशयस्य च । सेवा सर्वैर्बुधैर्दृष्टा (रिष्टा) कालातीतोऽपि यज्जगौ ॥१६॥**

माध्यस्थ्यमिति—माध्यस्थ्यमनिर्णीतविशेषफलहानिनिवेशाभावलक्षणं अयमर्थः । देवतातिशयस्य च विशिष्टदेवता-
न्वयस्य च सेवा स्तवनध्यानपूजनादिरूपा । सर्वैर्बुधैरिष्टा तन्निमित्तकफलार्थत्वेनाभिमता । स्तवनादिक्रियाः स्वकर्तृकायाः
फलदानसमर्थत्वेऽपि स्तवनीयाद्यालम्बनत्वेन तस्याः स्तोत्रादेः फललाभस्य स्तोतव्यादिनिमित्तकत्वव्यवहारात् । यथस्मात्
कालातीतोऽपि शास्त्रकृद्विशेषो जगौ ॥ १६ ॥

अन्येषामप्ययं मार्गो मुक्ताविद्यादिवादिनाम् । अभिधानादिभेदेऽपि तत्त्वनीत्या व्यवस्थितः ॥ १७ ॥

अन्येषामिति—अन्येषामपि तीर्थान्तरीयाणां किं पुनरस्माकं । अयमनन्तरोक्तो मार्गो देवतादिगोचरः । मुक्तादिवादिना-
मविद्यादिवादिना च मतेन । अभिधानादीनां नामविशेषणादीनां भेदेऽपि तत्त्वनीत्या परमार्थत एकविषयतया व्यव
स्थितः प्रतिष्ठितः ॥ १७ ॥

मुक्तो बुद्धोऽर्हन्वापि यदैश्वर्येण समन्वितः । तदीश्वरः स एव स्यात्संज्ञाभेदोऽत्र केवलम् ॥ १८ ॥

मुक्त इति—मुक्तः परब्रह्मवादिनां । बुद्धो बौद्धानां । अर्हन् जैनानां । वापीति समुच्चये । यद्यस्मात् । ऐश्वर्येण ज्ञाना-
द्यतिशयलक्षणेन । समन्वितो युक्तो वर्तते । तत्तस्मादीश्वरोऽनन्तरोक्तः । स एव मुक्तादिः स्यात् । संज्ञाभेदो नामनानात्वम् ।
अत्र मुक्तादिप्रज्ञापनायां केवलम् ॥ १८ ॥

परकल्पितविशेषनिराकरणायाह—

**अनादिशुद्ध इत्यादिर्यो भेदो यस्य कल्प्यते । तत्तत्तंत्रानुसारेण मन्ये सोऽपि निरर्थकः ॥ १९ ॥**

अनादीति–अनादिशुद्ध इत्येवंरूप आदिर्यस्य स तथा । तत्रानादिशुद्धः सर्वगतश्च शैवानां । सोऽर्हन्नसर्वगतश्च जैनानां । स एव प्रतिक्षणं भंगुरः सौगतानां । यः पुनर्भेदो विशेषो यस्येश्वरस्य कल्प्यते । तस्य तस्य तंत्रस्य दर्शनस्यानुसारेणानुवृत्त्या। मन्ये प्रतिपद्ये। सोऽपि विशेषः किं पुनः प्रागभिहितः संज्ञाभेद इत्यपिशब्दार्थः । निरर्थको निष्प्रयोजनः॥

कुत इत्याह–

**विशेषस्यापरिज्ञानाद्युक्तीनां जातिवादतः । प्रायो विरोधतश्चैव फलाभेदाच्च भावतः ॥ २० ॥**

विशेषस्येति–विशेषस्य मुक्तादेर्दैवताविशेषगतस्य । अपरिज्ञानादर्वाग्दर्शितप्रत्यक्षेण । तथा युक्तीनामनुमानरूपाणां । जातिवादतोऽसिद्ध्यादिहेतुदोषोपघातेनानुमानाभासत्वात् । प्रायो बाहुल्येन । विरोधतश्चैव वेदान्तिबौद्धादियुक्तीनां । एकेषां हि नित्य एवात्मा प्रपंचाधिष्ठानत्वात्, अपरेषां चार्थक्रियाकारित्वस्य स्वभावभेदे नियतत्वेनानित्य एवेति । फलस्य क्लेशक्षयलक्षणस्य गुणप्रकर्षविशेषवत्पुरुषाराधनसाध्यस्य क्वचिन्नित्यानित्यत्वादौ विशेषे आराध्यगते सत्यप्यभेदादविशेषाच्च । भावतः परमार्थतः । गुणप्रकर्षविषयस्य बहुमानस्यैव फलदायकत्वात्तस्य सर्वत्र मुक्तादावविशेषादिति ॥ २० ॥

**अविद्याक्लेशकर्मादि यतश्च भवकारणम् । ततः प्रधानमेवैतत् संज्ञाभेदमुपागतम् ॥ २१ ॥**

अविद्येति–अविद्या वेदान्तिनां, क्लेशः सांख्यानां, कर्म जैनानां, आदिशब्दाद्वासना सौगतानां, पाशः शैवानां । यतो-

यस्मात्। चकारो वक्तव्यान्तरसूचनार्थः। भवकारणं संसारहेतुः। ततस्तस्मादविद्यादीनां भवकारणत्वाद्धेतोः। प्रधानमेवै तदसदभ्युपगत भवकारणं सत् सज्ञाभेद नामनानात्वमुपागतम् ॥ २१ ॥

अत्रापि परपरिकल्पितविशेषनिराकरणायाह—

**अस्यापि योऽपरो भेदश्चित्रोपाधिस्तथा तथा। गीयतेऽतीतहेतुभ्यो धीमतां सोऽप्यपार्थक. ॥ २२ ॥**

अस्यापीति—अस्यापि प्रधानस्यापि। योऽपरो भवकारणत्वात् सर्वाभ्युपगतादन्यो भेदो विशेषः। चित्रोपाधिर्नानारूपमूर्तत्वामूर्तत्वादिलक्षणः। तथा तथा तत्तद्दर्शनभेदेन। गीयते वर्ण्यते। अतीतहेतुभ्योऽनन्तरमेव "विशेषस्यापरिज्ञानात्" इत्यादिश्लोकोक्तेभ्यः। धीमतां सोऽपि किं पुनर्देवतागत इत्यपिशब्दार्थः। अपार्थकोऽपगतपरमार्थप्रयोजनः। सर्वैरपि भवकारणत्वेन योगापनेयस्यास्योपगमादन्यस्य विशेषस्य सतोऽप्यकिंचित्करत्वात् ॥ २२ ॥

यत एवं—

**ततोऽस्थानप्रयासोऽय यत्तद्भेदनिरूपणम्। सामान्यमनुमानस्य यतश्च विषयो मत. ॥ २३ ॥**

तत इति—ततः सतो विशेषस्यापार्थकत्वाद्धेतोः। अस्थानप्रयासोऽय तत्त्वचिन्तकानां। यत्तद्भेदस्य देवादिविशेषस्य निरूपणं गवेषणं। यतश्चानुमानस्य वैमत्यविक्षेपादिमात्रफलत्वेनाभिमतस्य। सामान्य विषयो मतः। अतोऽपि सर्वविशेषानुगतस्य तस्याप्रतीतेरस्थानप्रयासोऽयम् ॥ २३ ॥

एवं च भवकारणमात्रज्ञानात्तदपनयनार्थं गुणवत्पुरुषविशेषाराधनं कर्तव्यं, विशेषविमर्शस्तु निष्प्रयोजन इति कालातीतमतं व्यवस्थितं, एतच्चास्माकमपि विशेषविमर्शाद्यमस्य स्वाग्रहच्छेदाय सामान्ययोगप्रवृत्त्यर्थमनुमतं, अन्यस्य तु निरभिनिवेशस्य शास्त्रानुसारेण विशेषविमर्शोऽपि भगवद्विशिष्टोपासनारूपतयाऽश्रद्धामलक्षालनेन तत्त्वज्ञानगर्भवैराग्यभावानुभूतत्वाद्विशिष्टनिर्जराहेतुरिति न सर्वथा तद्वैफल्यमित्यभिप्रायवानाह–

आस्थितं चैतदाचार्यैस्त्याज्ये कुचितिकाग्रहे । शास्त्रानुसारिणस्तर्कान्नामभेदानुपग्रहात् ॥ २४ ॥

आस्थितं चेति–एतच्च कालातीतमतं । आचार्यैः श्रीहरिभद्रसूरिभिः । आस्थितमंगीकृतं । कुचितिकाग्रहे कौटिल्यावेशे त्याज्ये परिहार्ये कुचितिकात्यागार्थमित्यर्थः । शास्त्रानुसारिणः तर्कात् । अर्थसिद्धौ सत्यामिति गम्यं । नामभेदस्य संज्ञाविशेषस्य । अनुपग्रहात् अनभिनिवेशात् । तत्त्वार्थसिद्धौ नाममात्रक्लेशो हि योगप्रतिपन्थी न तु धर्मवादेन विशेषविमर्शोऽपीति भावः । तदिदमुक्तं–"साधु चैतद्यतो नीत्या शास्त्रमत्र प्रवर्तकम् । तथाभिधानभेदात्तु भेदः कुचितिकाग्रहः ॥ १ ॥ विपश्चितां न युक्तोऽयमैदंपर्यप्रिया हि ते । यथोक्तास्तत्पुनश्चारु हन्तात्रापि निरूप्यताम् ॥ २ ॥ भवयोः परिणामित्वं तथाभ्युपगमाद्ध्रुवम् । अनुग्रहात्प्रवृत्तेश्च तथाभावभेदतः स्थितम् ॥ ३ ॥ आत्मनां तत्स्वभावत्वे प्रधानस्यापि संस्थिते । ईश्वरस्यापि सन्न्यायाद्विशेषोऽधिकृतो भवेत् ॥ ४ ॥" इति ॥ २४ ॥

विशेषविमर्शे शास्त्रतर्कयोर्द्वयोरुपयोगप्रस्थानमाह–

अस्थानं रूपमन्धस्य यथा सन्निश्चय प्रति । तथैवातीन्द्रिय वस्तु छद्मस्थस्यापि तत्त्वत. ॥ २५ ॥

अस्थानमिति–अस्थानमविषय । रूप नीलकृष्णादिलक्षणं । अन्धस्य लोचनव्यापाररहितस्य । यथा सन्निश्चय विशदावलोकनं प्रति आश्रित्य । तथैवोक्तन्यायेनैव । अतीन्द्रिय वस्तु आत्मादिविशेषरूप । छद्मस्थस्यार्वाग्दृशः प्रमातुरपि । तत्त्वतः परमार्थनीत्या ॥ २५ ॥

हस्तस्पर्शसमं शास्त्र तत एव कथञ्चन । अत्र तन्निश्चयोऽपि स्यात्तथा चन्द्रोपरागवत् ॥ २६ ॥

हस्तेति–हस्तस्पर्शसम वस्तूपलब्धिहेतुहस्तस्पर्शसदृशं । शास्त्रमतीन्द्रियार्थगोचरं । तत एव शास्त्रादेव । कथचन केनापि प्रकारेण । अत्र छद्मस्थे प्रमातरि । तन्निश्चयोऽप्यतीन्द्रियवस्तुनिर्णयोऽपि स्यात् । तथा वर्धमानत्वादिविशेषेण । चन्द्रोपरागवच्चन्द्रराहुस्पर्शवत् । यथा शास्त्रात् सर्वविशेषानिश्चयेऽपि चन्द्रोपरागः केनापि विशेषेण निश्चीयत एव तथाऽन्यदप्यतीन्द्रियवस्तु तत्छद्मस्थेन निश्चीयत इति न्यायः ॥ २६ ॥

इत्थं ह्यस्पष्टता शाब्दे प्रोक्ता तत्र विचारणम् । माध्यस्थ्यनीतितो युक्त व्यासोऽपि यददो जगौ ॥२७॥

इत्थ हीति–इत्थमुक्तदृष्टान्तेन हि । शाब्दे ज्ञाने अस्पष्टता प्रोक्ता । तत्रास्पष्टे शाब्दज्ञाने । माध्यस्थ्यनीतितो विचारण युक्तं । तर्कस्य प्रमाणानुग्राहकत्वात् । तेनैवैदंपर्यशुद्धेः । तस्याश्च स्पष्टतामायत्वात् । यद्यस्माददो वक्ष्यमाण व्यासोऽपि जगौ ॥

आर्षं धर्मोपदेश च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ २७ ॥

शास्त्रादौ चरणं सम्यक् स्याद्वादन्यायसंगतम् । ईशस्यानुग्रहस्तस्माद्दृष्टेष्टार्थाविरोधिनः ॥ २९ ॥
यद्दातव्यं जिनैः सर्वैर्दत्तमेव तदेकदा । दर्शनज्ञानचारित्रमयो मोक्षपथः सताम् ॥ ३० ॥
जिनेभ्यो याचमानोऽन्यं लब्धं धर्ममपालयन् । तं विह्वलो विना भाग्यं केन मूल्येन लप्स्यते ॥३१॥
अनुष्ठानं ततः स्वामिगुणरागपुरःसरम् । परमानन्दतः कार्यं मन्यमानैरनुग्रहम् ॥ ३२ ॥

आर्षमित्यारभ्य स्पष्टम् ॥ ३२ ॥

॥ इतीशानुग्रहविचारद्वात्रिंशिका ॥ १६ ॥

## ॥ अथ दैवपुरुषकारद्वात्रिंशिका ॥ १७ ॥

महेश्वरानुग्रहादेव योगसिद्धिरिति मतं निरस्य दैवादेवेष पुरुषकारादेव चेयमित्येकान्तमतनिरासायोपक्रमते–

दैवं पुरुषकारश्च तुल्यौ द्वावपि तत्त्वतः । निश्चयव्यवहाराभ्यामत्र कुर्मो विचारणाम् ॥ १ ॥

दैवमिति–स्पष्टः ॥ १ ॥

दैवं पुरुषकारश्च स्वकर्मोद्यमसंज्ञकौ । निश्चयेनानयोः सिद्धिरन्योऽन्यनिरपेक्षयो. ॥ २ ॥

दैवमिति–दैवं स्वकर्मसंज्ञकं, पुरुषकारश्च स्वोद्यमसंज्ञकः । निश्चयेन निश्चयनयेन । अनयोर्द्वयो' प्रत्येक स्वकार्यजननेऽन्योन्यनिरपेक्षयोः सिद्धिः ॥ २ ॥

अत्रैव युक्तिमाह–

सापेक्षमसमर्थं हीत्यतो यद्व्यापृतं यदा । तदा तदेव हेतुः स्यादन्यत्सदपि नादृतम् ॥ ३ ॥

सापेक्षमिति–' सापेक्षं ह्यसमर्थं ' इत्यसो न्यायात् दैवपुरुषकारयोर्मध्ये यत् यदा व्यापृतं, तदा तदेवाधिकृतकार्ये हेतुः स्यात्, कुर्वद्रूपस्यैव कारणत्वात् । अन्यत् सदपि नादृतं नाभ्युपगत । अनेनासदविशेषाद्वस्तुतोऽर्थक्रियाकारित्वमेव वस्तुनो लक्षणमिति तद्विरहादसदेवान्यदित्यप्यर्थः ॥ ३ ॥

**विशिष्य कार्यहेतुत्वं द्वयोरित्यनपेक्षयोः । अवर्ज्यसन्निधि तत्त्वन्यदन्यथासिद्धिमश्चति ॥ ४ ॥**

विशिष्येति–इत्येवमनपेक्ष्ययोर्द्वयोर्दैवपुरुषकारयोः विशिष्य तत्तद्व्यक्तौ कार्यहेतुत्वं । अन्यत्तु अवर्ज्यसन्निधि अवर्जनीयसन्निधिकं सत् पटादौ कार्ये दैवागतरासभवदन्यथासिद्धिमंचति प्राप्नोति । इत्थं च व्यवहारवादिनाऽन्यथासिद्धत्वादपि अन्यस्य कारणत्वं दुर्वचमिति भावः ॥ ४ ॥

**अन्वयव्यतिरेकाभ्यां व्यवहारस्तु मन्यते । द्वयोः सर्वत्र हेतुत्वं गौणमुख्यत्वशालिनोः ॥ ५ ॥**

अन्वयेति–व्यवहारस्तु व्यवहारनयस्तु । अन्वयव्यतिरेकाभ्यां द्वयोर्दैवपुरुकारयोः सर्वत्र कार्ये हेतुत्वं मन्यते गौणमुख्यत्वशालिनोः । क्वचित्कार्ये हि किंचिद्गौणतयोपयुज्यते, किंचिच्च मुख्यतया । सामान्यतस्तु दैवं पुरुषकारं वा विना न किंचित्कार्यं जायते इति सामान्यतः सर्वत्र हेतुत्वमनयोः । यस्तु कुर्वद्रूपत्वेन कारणत्वमिच्छन् सामान्यतः कारणतामेवापलपति, तस्य घटार्थमरण्यस्थदंडादौ प्रवृत्तिर्दुर्घटा, तस्या घटसाधनताज्ञाधीनत्वात्, तस्य च घटोपधानात्प्रागसिद्धेः सादृश्यग्रहात्प्रागपि तत्र घटसाधनत्वधीः, अत एव न कार्यलिंगकोच्छेदः, अतज्जातीयात्तज्जातीयोत्पत्तिसंभावनाभावादिति चेन्न, तत्रापि वासनाविशेषस्य बीजत्वे तेनैव प्रवृत्त्याद्युपपत्तौ दृष्टकारणवैफल्यप्रसंगात् प्रकृते बाधकाभावाच्चेत्यन्यत्र विस्तरः ॥५॥



**अनुत्कटत्वं गौणत्वमुत्कटत्वं च मुख्यता । द्वयं प्रत्येकजन्यत्वव्यपदेशनियामकम् ॥ ६ ॥**

अनुत्कटत्वमिति–गौणत्वमनुत्कटत्वं न स्वल्पत्वमेव, अल्पस्यापि महीयसो गौणत्वाव्यपदेशात् । एवं मुख्यता चोत्कटत्वं । एतद्रूपस्य प्रत्येकजन्यत्वव्यपदेशो नियामकं । अन्यथा सर्वस्य कार्यस्योभयजन्यत्वात्प्रत्येकजन्यत्वव्यवहारोऽप्रामाणिकः स्यादिति भावः ॥ ६ ॥

एतदेव भावयति–

उत्कटेन हि दैवेन कृतं दैवकृतं विदुः । तादृशेन च यत्नेन कृतं यत्नकृतं जनाः ॥ ७ ॥

उत्कटेन हीति–उत्कटेन हि दैवेन कृतं कार्यं जना दैवकृतं विदुः, तादृशेनोत्कटेन यत्नेन च कृतं यत्नकृतमेतद्विदुरिति । इत्थं चोत्कटस्वकृतत्वज्ञानमनुत्कटान्यकृतत्वज्ञानं वा प्रत्येकजन्यत्वाभिलापप्रयोजकं । दैवकृतमिदं न पुरुषकारकृतमित्यत्र चोत्कटपुरुषकारकृतत्वाभाव एव विषय इति न कश्चिद्दोष इत्यर्थः ॥ ७ ॥

विशेषदर्शिनो व्यवहारमुपपाद्याविशेषदर्शिनस्तमुपपादयति–

अभिमानवशाद्वायं भ्रमो विध्यादिगोचरः । निविष्टबुद्धिरेकत्र नान्यद्विषयमिच्छति ॥ ८ ॥

अभिमानेति–यद्वाऽयं दैवकृतमिदं न पुरुषकारकृतमित्यादिर्व्यवहारो विध्यादिगोचरो विधिनिषेधविषयो भ्रमो विपर्यासोऽभिमानवशादहंकारदोषवशात् । यतस्मादेकत्र निविष्टबुद्धिरेकविषयोपरक्तमहत्प्रतीताभिलापो नान्यद्विषयमिच्छति । इत्थं चैकधर्मोत्कटजिज्ञासयैवापरधर्मोपहस्तद्भावमहत्त्वोपपद्यत इति भावः । विपंचितोऽयमर्थ उपदेशपदप्रसिद्ध उपदेशरहस्येऽस्माभिः ॥ ८ ॥

सापेक्षमसमर्थमिति दूषयितुमाह—

**यदीष्यते परापेक्षा स्वोत्पत्तिपरिणामयोः । तर्हि कार्येऽपि सा युक्ता न युक्तं दृष्टबाधनम् ॥ ए ॥**

यदीति—यदि स्वस्याधिकृतहेतोरुत्पत्तौ परिणामे च परापेक्षा स्वातिरिक्तहेत्वपेक्षा इष्यते । तदा कार्येऽपि जननीये । सा हेत्वन्तरापेक्षा युक्ता । न युक्तं दृष्टबाधनमनुभूयमानस्य सहकारिसमवधानेन कार्योत्पादकत्वस्यान्यथाकरणं ॥ ए ॥

विशिष्येत्यादिनोक्तं दूषयति—

**विशिष्य कार्यहेतुत्वं कार्यभेदे भवेदपि । अन्यथा त्वन्यथासिद्धिरन्यत्राति(पि)प्रसंगकृत् ॥ १० ॥**

विशिष्येति—विशिष्य कार्यहेतुत्वं च कार्यभेदे प्रामाणिके सति भवेदपि । यथा विजातीये वह्नौ तृणादेर्विजातीये च तत्रारण्यादेरिति । अन्यथा कार्यभेदाभावे त्वेकेन हेतुनाऽपरहेतोरन्यथासिद्धिरुच्यमाना अन्यत्र प्रकृतातिरिक्तस्थलेऽतिप्रसंगकृत् । शक्यं ह्येवं वक्तुं घटेऽपि दंडो हेतुर्न चक्रमिति न शक्यं स्वतंत्रान्वयव्यतिरेकदर्शनादेकेनापरान्यथासिद्ध्यभावादिति चेत्तुल्यमिदमन्यत्र ॥ १० ॥

अथ दैवोत्कर्षेण फलोत्कर्षदर्शनात्तदेव फलहेतुर्न यत्न इत्याशंकायामाह—

**क्वचित्कर्मैव यत्नोऽपि व्यापारबहुलः क्वचित् । अन्ततः प्राग्भवीयोऽपि द्वावित्यन्योऽन्यसंश्रयौ ॥ ११ ॥**

क्वचिदिति—क्वचित्कार्ये कर्मैव यत्नोऽपि । क्वचित्कार्ये व्यापारबहुलः । अन्तत ऐहिकयत्नप्राचुर्यानुपलंभे प्राग्भवीयोऽपि

स व्यापारमहत्त्व आवश्यकः, तत्कृष्टयत्नं विनोत्कृष्टदैवानुत्पत्तेः, इत्येवं फलविशेषोत्कर्षप्रयोजकोत्कर्षवत्त्वयापि तौ दैवपुरुषकारावन्योऽन्यसंश्रयौ फलजनने परस्परापेक्षौ। यत उक्तं–"व्यापारमात्रात् फलदं निष्फलं महतोऽपि च। अतो यत्कर्म तदेव चित्रं ज्ञेयं हिताहितम् ॥ १ ॥ एवं पुरुषकारस्तु व्यापारबहुलस्तथा। फलहेतुर्नियोगेन ज्ञेयो जन्मान्तरेऽपि हि ॥२॥ अन्योऽन्यसंश्रयावेवं द्वावप्येतौ विचक्षणैः। उक्तौ" ॥ इति ॥ ११ ॥

कर्मैव ब्रुवते केचित् कालभेदात् फलप्रदम्। तन्नैहिकं यतो यत्नः कर्म तत्पौर्वदेहिकम् ॥ १२ ॥

कर्मैवेति–केचित् सांख्याः कर्मैव कर्म प्रधानापरनामकं। एवकारेण पुरुषकारव्युदासः। कालभेदात् तत्तत्कालसंबन्धलक्षणविपाकात्। फलप्रदं तत्तत्कार्यकारि ब्रुवते। तदुक्तं–"अन्यैस्तु कर्मैव केवलं कालभेदतः" इति। तत्र, यत ऐहिकं कर्म वाणिज्यराजसेवादि यत्न उच्यते। पौर्वदेहिकं पूर्वदेहजनितं। तद्वासनात्मना तथाविधपुद्गलग्रहणसम्बन्धेन वाऽवस्थितं कर्माभिधीयते ॥ १२ ॥

भवान्तरीयं तत्कार्यं कुरुते नैहिकं विना। द्वारत्वेन च गौणत्वमुभयत्र न दुर्वचम् ॥ १३ ॥

भवान्तरीयमिति–भवान्तरीयं पूर्वभवार्जितं तत्कर्म। कार्यं धनप्राप्त्यादिकं। ऐहिकं वाणिज्यराजसेवादि कर्म विना न कुरुते। अतोऽन्वयव्यतिरेकाविशेषात् पौर्वदेहिकस्येवैहिकस्यापि कर्मणः कार्यहेतुत्वमिति द्वयोरन्योऽन्यापेक्षत्वमेव। तदुक्तं–"दैवमात्मकृतं विद्यात् कर्म यत्पौर्वदेहिकम्। स्मृतः पुरुषकारस्तु क्रियते यदिहापरम् ॥ १ ॥ नैतदात्मक्रियाभावे

यतः स्वफलसाधनम् । अतः पूर्वोक्तमेवेह लक्षणं तात्त्विकं तयोः ॥ २ ॥ इति" । द्वारत्वेनव्यापारत्वेन च गौणत्वमुच्यमानं । उभयत्र यत्ने कर्मणि च न दुर्वचं । ऐहिकयत्नस्य कर्मव्यापारत्ववत् प्राग्भवीयकर्मणोऽपि प्राग्भवीययत्नव्यापारत्वाविशेषादिति भावः ॥ १३ ॥

अपेक्ष्ये कालभेदे च हेत्वैक्यं परिशिष्यते । दृष्टहानिरदृष्टस्य कल्पनं चातिबाधकम् ॥ १४ ॥

अपेक्ष्य इति—केवलेन कर्मणा चित्रफलजनने कालभेदे चापेक्ष्येऽपेक्षणीये हेत्वैक्यं कारणैक्यं परिशिष्यते । तत्क्षणविशिष्टकार्यत्वावच्छिन्ने तत्क्षणस्य हेतुत्वेनैवानतिप्रसंगाद्देशनियमस्य च स्वभावत एवोपपत्तेः । किं च दृष्टहानिर्दृष्टानां कारणानां यत्नादीनां त्यागः, अदृष्टस्य च प्रधानस्य कल्पनं । अतिबाधकमतिबाधाकारीति न किंचिदेतत् ॥ १४ ॥

दृष्टेनैवोपपत्तौ च नादृष्टमिति केचन । फले विशेषात्तदसत्तुल्यसाधनयोर्द्वयोः ॥ १५ ॥

दृष्टेनैवेति—दृष्टेनैव कारणसमाजेनोपपत्तौ जगद्व्यवस्थानिर्वाहलक्षणायां सत्यां । नादृष्टं कर्म कल्पनीयमिति केचन नास्तिकप्रायाः । ते हि वदन्ति विहितनिषिद्धाभ्यामपि कर्मभ्यामामुष्मिकफलजननं स्वध्वंसद्वारैवोपपत्स्यत इति किमन्तर्गडुनाऽदृष्टेन ? न चादृष्टसत्त्वे चरमसुखदुःखादिभोगेन तन्नाशात् फलविरामोपपत्तिरन्यथा तु तदनुपपत्तिरिति वाच्यं, अदृष्टाभ्युपगमेऽपि कालान्तर एव फलप्राप्तेस्तदन्यकाले फलविरामोपपत्तेरिति । तदसत्, तुल्यसाधनयोः सदृशदृष्टकारणयोर्द्वयोः पुरुषयोः फले विशेषात् । तस्य चादृष्टभेदं विनाऽनुपपत्त्या तदसिद्धेः । जायते ह्येकजातीयदुग्धपानादेव

कस्यचिद्दुःखं कस्यचिच्च सुखमित्यत्र चादृष्टभेद एव नियामक इति । न च कर्कट्यादिवद्दुग्धादेः कस्यचित्पित्तादिरसोद्बोधा-दुपपत्तिः, सर्वत्र तदापत्तेः । न च नैयत्यमेवोपपत्तिः, तस्य साक्षात् सुखादितौल्याद्बाह्यवैषम्यादेरुत्तरकालत्वादिति । तदिदमुक्तं भाष्यकृता—"जो तुल्लसाहणाणं फले विसेसो ण सो विणा हेउं । कज्जत्तणउ गोयम घडो व हेऊ अ से कम्मं ॥ १ ॥" ॥ १५ ॥

न चापि क्षणिकं कर्म फलायादृष्टमन्तरा । वैयर्थ्यं च प्रसज्येत प्रायश्चित्तविधेरपि ॥ १६ ॥

न चेति—न च क्षणिकं क्रियाकालमात्रोपरतं कर्म अदृष्टमन्तरा फलाय फलं जनयितुमलं समर्थं । चिरध्वस्तस्य कालान्तरभाविफलजनकत्वस्य व्यापारकत्वव्याप्तत्वावधारणात्, ध्वंसस्य च व्यापारत्वेऽनुजयेनापि तद्द्वारैव स्मृति-जननोपपत्तौ संस्कारोऽप्युच्छिद्येत । तदुक्तमुदयनेनापि—"चिरध्वस्तं फलायालं न कर्मातिशयं विना" इति । अपि च प्रायश्चित्तविधेरपि अदृष्टमन्तरा वैयर्थ्यं प्रसज्येत । अधर्मनाशेनैव तस्य फलवत्त्वात्, नरकादिदुःखानां प्रायश्चित्तविषय-कर्मजन्यानामप्रसिद्ध्या तन्नाशस्य कर्तुमशक्यत्वाद्दुःखप्रागभावस्याप्यसाध्यत्वात् । प्रागभावस्य प्रतियोगिजनकत्वनियमेन तद्कान्यद्दुःखोत्पत्त्यापत्तेश्चेत्यन्यत्र विस्तरः ॥ १६ ॥

विशेषश्चात्र बलवदेकमन्यच्छिन्दन्ति यत् । व्यभिचारश्च नाप्येवमपेक्ष्य प्रतियोगिनम् ॥ १७ ॥

विशेषश्चेति—अत्र च दैवपुरुषकारविचारणायां विशेषोऽयं । यदनयोर्मध्ये एकं बलवदन्यन्निर्बलं निहन्ति । स्वफलमु

पदधानं प्रतिस्खलयति । नन्वत्रैवैकव्यभिचाराडुभयोरन्योऽन्यापेक्षत्वक्षतिरित्यत्राह—एवमपि च प्रतियोगिनमपेक्ष्य न व्यभिचारः । एकेनान्यप्रतिघातेऽप्यन्यस्य प्रतियोगितयाऽपेक्षणात् केवलं प्रतिहतत्वेनैव प्रतिघातप्रतियोगित्वेन गौणत्वमात्रं स्यादिति बोध्यम् ॥ १७ ॥

**कर्मणा कर्ममात्रस्य नोपघातादि तत्त्वतः । स्वव्यापारगतत्वे तु तस्यैतदपि युज्यते ॥ १८ ॥**

कर्मणेति—कर्मणा केवलेनैव । कर्ममात्रस्य केवलस्यैव कर्मणः । न उपघातादि उपघातानुग्रहौ । तत्त्वतोऽनुपचारेण । न हि केवलं कर्म किंचिदुपहन्तुं निगृहीतुं वा क्षमं, असहायत्वात् । स्वव्यापारगतत्वे तु जीवक्रियाप्रतिबद्धत्वे पुनः । तस्य कर्मणः । एतदपि परस्परोपघातादि युज्यते ॥ १८ ॥

**उभयोस्तत्स्वभावत्वे तत्तत्कालाद्यपेक्षया । बाध्यबाधकभावः स्यात्सम्यग्न्यायाविरोधतः ॥ १९ ॥**

उभयोरिति—उभयोर्दैवपुरुषकारयोः । तत्स्वभावत्वे बाध्यबाधकस्वभावत्वे । तेषां कालादीनां सहकारिकारणानामपेक्षया । बाध्यबाधकभाव उपघात्योपघातकभावः स्यात् । सम्यग्न्यायस्य सम्यग्युक्तेरविरोधतोऽविघटनात् ॥ १९ ॥

**प्रतिमायोग्यतातुल्यं कर्मानियतभावकम् । बाध्यमाहुः प्रयत्नेन सैव प्रतिमयेत्यपि ॥ २० ॥**

प्रतिमेति—प्रतिमायोग्यतया तुल्यं सदृशं कर्म फलजननं प्रत्यनियतभावं फलजननियतिमतोऽबाध्यत्वात् । प्रयत्नेन बाध्यं निवर्तनीयं । सैव प्रतिमायोग्यतैव प्रतिमयेत्यप्याहुराचार्याः । अपिः कर्मणो बाधने पुरुषकारस्य तत्फलजनननि-

पत्यजायनियतां नियतिं सहकारिणीं समुच्चिनोति । तदिदमुक्तं—"कर्मानियतभावं तु यत् स्याच्चित्रं फलं प्रति । तद्बा-
ध्यमत्र दार्वादिप्रतिमायोग्यतासमम् ॥ १ ॥" २० ॥

अत्र दृष्टान्तदार्ष्टान्तिकयोर्बाधकत्वैक्यं शब्दसाम्यादेव विकारनाशसाधारणरूपान्तरपरिणत्यैव चेत्यभिप्रायवानाह—

**प्रतिमायोग्यतानाश प्रतिमोत्पत्तितो भवेत् । कर्मणो विक्रिया यस्माद्बाध्यबाधकतेत्यसौ ॥ २१ ॥**

प्रतिमेति—प्रतिमोत्पत्तितः प्रतिमायोग्यताया नाश एव बाधो भवेत् । कर्मणो यस्माद्विक्रिया अधिकृतफलजननशक्तिभंगलक्षणाबाध इत्यसौ बाध्यबाधकता । एतेन प्रतिमया तद्धेतुयत्नेन वा तद्योग्यताबाधे तदुत्पत्तिवत् कर्मयोग्यताबाधेऽपि तत्फलोत्पत्तिप्रसंग इति निरस्तं, उपादानस्यैव स्वनाशाभिन्नफलोत्पत्तिनियतत्वात् । कर्मयोग्यतायास्तु सुखदुःखादिनिमित्त स्यादङ्गनाशे घटस्येव तन्नाशो फलस्यासंभवात् इति द्रष्टव्यम् ॥ २१ ॥

ननु येन कर्मणा फलं न जन्यते, तत्र न तद्योग्यतैव किं यत्नस्य तद्बाधकत्वेनेत्याशंकायामाह—

**प्रतिमाया अनियमेऽप्यक्षता योग्यता यथा । फलस्यानियमेऽप्येवमक्षता कर्मयोग्यता ॥ २२ ॥**

प्रतिमाया इति—प्रतिमाया अनियमेऽप्यनैकान्त्येऽपि दार्वादिद्रव्ये यथा योग्यता प्रतिमाया अक्षता तथा लोकव्यवहारात् फलस्य सुखदुःखादिरूपस्य पुरुषकारबाध्यत्वेनानियमेऽपि एव कर्मयोग्यताऽक्षता, अध्यवसायविशेषप्रयुक्तरसस्थितिविशेषघटितत्वात्तस्याः प्रामाणिकलोकप्रसिद्धत्वाच्च । फलाभावेऽपि बाध्यकर्मयोग्यता व्यवहारस्येति भावः । तदुक्तं—"नियमात्प्रतिमा नात्र न भावोऽयोग्यतैव हि । तल्लक्षणवियोगेन प्रतिमेवास्य बाधकः ॥ १ ॥" इति ॥ २२ ॥

नन्वु योग्यतैव प्रतिमामाक्षेप्स्यति किं तद्बाधकेन पुरुषकारेणेत्याशंक्याह—

**दार्वादेः प्रतिमाक्षेपे तद्भावः सर्वतो ध्रुवम् । योग्यतायोग्यता वेति न चैषा लोकसिद्धितः ॥ २३ ॥**

दार्वादेरिति—दार्वादेर्दलस्य स्वयोग्यतयैव प्रतिमानिष्पत्त्या तद्भावः प्रतिमाभावः । सर्वतः सर्वस्मात् । ध्रुवो निश्चितः प्रसज्येत । योग्यस्य दार्वादेरेव अयोग्यता प्रतिमानाक्षेपे वेत्येतत्प्रसज्येत । न च न पुनरेषाऽयोग्यता लोकप्रसिद्धितः । न हि दार्वादीनि प्रतिमानिष्पत्त्यभावेऽपि अयोग्यानीति प्रसिद्धिरस्ति, तदापि योग्यतयैव तेषां रूढत्वादिति ॥ २३ ॥

इदमेव प्रकृते योजयन्नाह—

**कर्मणोऽप्येतदाक्षेपे दानादौ भावभेदतः । फलभेदः कथं नु स्यात्तथाशास्त्रादिसंगतः ॥ २४ ॥**

कर्मणोऽपीति—कर्मणोऽपि दैवसंज्ञितस्य । एतदाक्षेपे फलहेतुपुरुषकाराक्षेपे । दानादौ सुकृतविशेषे विधीयमाने । भावभेदतः परिणामविशेषतस्तत्तारतम्यलक्षणात् । फलस्य भेदः प्रकर्षापकर्षरूपः । कथं नु स्यात् ? न कथंचिदित्यर्थः । तथा तथा तेन तेन प्रकारेण शास्त्रादिसंगतः शास्त्रलोकसिद्धः । तथाविधपुरुषाकारविकलात् कर्मणः फलाभ्युपगमे न कथंचित्तच्चित्रता युज्यते । फलहेतोः कर्मणः पुरुषकारमन्तरेणैकाकारत्वापत्तेरिति परापेक्षमेतद्द्वितयं प्रतिपत्तव्यमिति ॥ २४ ॥

**शुभात्ततस्त्वसौ भावो हन्तायं तत्स्वभावभाक् । एवं किमत्र सिद्धं स्यादत एवास्त्वतो ह्यदः ॥२५॥**

शुभादिति—शुभात्ततस्तु तत एव कर्मणः प्राग् नानानिमित्तोपार्जितादसौ दानादिकाले भिन्नरूपतया प्रवृत्तो भावो

हन्त अयं च फलभेदस्तत्स्वभावभावात् भावभेदापेक्षोत्पत्तिकविचित्रस्वभावतामिति परः पृच्छति—एवं किमत्र विचारे सिद्धं स्यात्तत्राह—अत एव कर्मणोऽस्तु भावः तथातो अत एव भावाददः कर्मास्तु । तथा च प्रवाहेणापि परस्परापेक्षत्वमनयोः सिद्धमिति भावः ॥ २५ ॥

इत्थं परस्परापेक्षावपि द्वौ बाध्यबाधकौ । प्रायेऽत्र चरमावर्ते दैवं यत्नेन बाध्यते ॥ २६ ॥

इत्थमिति—इत्थं प्रवाहतः । परस्परापेक्षावपि । द्वौ दैवपुरुषकारौ स्वसामान्यापेक्षया बाध्यबाधकौ । प्रायो बाहुल्येनात्रानयोर्मध्ये । चरमावर्तेऽन्त्यपुद्गलपरावर्ते यत्नेन दैवं बाध्यते । तथाविधसंक्लेशावस्थायां नन्दिषेणादीनामिव कदाचिद्व्यत्ययोऽपि स्यादिति प्रायोग्रहणम् ॥ २६ ॥

एवं च ग्रन्थिभेदोऽपि यत्नेनैव बलीयसा । औचित्येन प्रवृत्तिः स्यादूर्ध्वं तस्यैव चोदनात् ॥ २७ ॥

एवं चेति—एवं च चरमावर्ते यत्नस्य बलीयस्त्वे च । ग्रन्थिभेदोऽपि किं पुनर्दैवबाधेत्यपिशब्दार्थः । यत्नेनैव बलीयसाऽतिशयवता औचित्येन धर्मार्थादिगोचरन्याय्यप्रवृत्तिप्रधानत्वेन प्रवृत्तिः स्यात् । ऊर्ध्वं ग्रन्थिभेदोत्तरं । तस्यैव बलीयसो यत्नस्यैव चोदनात् प्रेरणात् ॥ २७ ॥

ननु यद्येवं ग्रन्थिभेदादूर्ध्वं स्वपरिणामादेवोचितप्रवृत्तिसिद्धिस्तदोपदेशवैयर्थ्यं स्यादित्यत आह—

उपदेशस्त्वनेकान्तो हेतुरत्रोपयुज्यते । गुणमारभमाणस्य पततो वा स्थितस्य न ॥ २८ ॥

उपदेशस्त्विति–उपदेशस्त्वत्र जिनग्रन्थेरुचितप्रवृत्तौ अनेकान्तो जलोत्पत्तौ भूमिसरसभावनिबन्धनायां पवनखनना-दिरिवानियतहेतुभावः सन्नुपयुज्यते । अनियतत्वेऽपि विशेषे नैयत्यमभिधित्सुराह–गुणमुपरितनगुणस्थानमारभमाणस्य पततो वोपरितनगुणस्थानादधस्तनमागच्छतो न पुनः स्थितस्य तद्भावमात्रविश्रान्तस्य ॥ २८ ॥

**आधिक्यस्थैर्यसिद्ध्यर्थं चक्रभ्रामकदंडवत् । असौ व्यञ्जकताप्यस्य तद्बलोपनतिक्रिया ॥ २९ ॥**

आधिक्येति–आधिक्यं सजातीयपरिणामप्राचुर्यं स्थैर्यं च पतनप्रतिबन्धः तत्सिद्ध्यर्थं । चक्रभ्रामकदंडवदसावुपदेश उपयुज्यते । यथा हि दंडो भ्रमतश्चक्रस्य दृढभ्रम्यर्थं भग्नभ्रमेर्वा भ्रम्याधानार्थमुपयुज्यते, न तूचितभ्रमवत्येव तत्र । तथो-पदेशोऽपि गुणप्रारंभाय तत्पातप्रतिबन्धाय वोपयुज्यते, न तु स्थितपरिणामं प्रतीति । तदुक्तमुपदेशपदे–"उवएसो वि-हु सफलो गुणगणारंभगाण जीवाण । परिवडमाणाण तहा पायं न उ तट्ठिआणं पि ॥ १ ॥" व्यंजकताप्यस्योपदेशस्य । तद्बलेन परिणामबलेनोपनतिक्रिया सन्निधानलक्षणा, अन्यथा घटादौ दंडादेरपि व्यंजकत्वापत्तेरिति भावः ॥ २९ ॥

**औचित्येन प्रवृत्त्या च सुदृष्टिर्यत्नतोऽधिकात् । पल्योपमपृथक्त्वस्य चारित्रं लभते व्ययात् ॥३०॥**

औचित्येनेति–औचित्येन न्यायप्रधानत्वेन प्रवृत्त्या च । सुदृष्टिः सम्यग्दृष्टिः । अधिकादतिशयितात् । यत्नात् पुरुष-कारात् । पल्योपमपृथक्त्वस्य चारित्रमोहस्थितिसंबन्धिनो व्ययात् चारित्रं लभते देशविरत्याख्यं । सर्वविरत्याख्यं तु संख्यातेषु सागरोपमेषु निवृत्तेष्विति द्रष्टव्यम् ॥ ३० ॥

मार्गानुसारिता श्रद्धा प्राज्ञप्रज्ञापनारतिः । गुणरागश्च लिङ्गानि शक्यारंभोऽपि चास्य हि ॥ ३१ ॥

मार्गेति–मार्गानुसारिताऽज्ञायोगेऽपि सदन्धन्यायेन मार्गानुसरणशीलता । यदुक्तं–"असातोदयशून्योऽन्धः कान्तारपतितो यथा । गर्तादिपरिहारेण सम्यक् तत्राभिगच्छति ॥ १ ॥ तथाऽयं भवकान्तारे पापादिपरिहारतः । श्रुतचक्षुर्विहीनोऽपि, सत्सातोदयसंयुतः ॥ २ ॥ अनीदृशस्य तु पुनश्चारित्रं शब्दमात्रकम् । ईदृशस्यापि वैकल्यं विचित्रत्वेन कर्मणाम् ॥ ३ ॥" इति । श्रद्धा शुद्धानुष्ठानगता तीव्ररुचिः । प्राज्ञस्य पंडितस्य प्रज्ञापनाऽर्थविशेषदेशना तत्र रतिः श्रवणतदर्थपालनात्मिका । गुणरागश्च गुणबहुमानः । शक्यारम्भः स्वकृतिसाध्यधर्मादिप्रवृत्तिरपि चास्य हि चारित्रस्य हि लिङ्गानि लक्षणानि प्रवदन्ति पूर्वसूरयः ॥ ३१ ॥

योगप्रवृत्तिरत्र स्यात्परमानन्दसंगता । देशसर्वविभेदेन चित्रे सर्वज्ञभाषिते ॥ ३२ ॥

योगेति–अत्र देशसर्वविभेदेन । चित्रे नानारूपे चारित्रे । सर्वज्ञभाषिते तीर्थकराभिहिते । योगस्य प्रागुक्तलक्षणस्य प्रवृत्तिः स्यात् । परमेणोत्कृष्टेनानन्देन संगता व्याप्ता ॥ ३२ ॥

॥ इति दैवपुरुषकारद्वात्रिंशिका ॥ १७ ॥

## ॥ अथ योगभेदद्वात्रिंशिका ॥ १८ ॥

अनन्तरं पुरुषकारप्राधान्येन चारित्रप्राप्तौ योगप्रवृत्तिरुक्तेति तद्भेदानेवात्राह–

**अध्यात्मं भावना ध्यानं समता वृत्तिसंक्षयः। योगः पञ्चविधः प्रोक्तो योगमार्गविशारदैः ॥ १ ॥**

अध्यात्ममिति–व्यक्तः ॥ १ ॥

**औचित्याद्वृत्तयुक्तस्य वचनात्तत्त्वचिन्तनम् । मैत्र्यादिभावसंयुक्तमध्यात्मं तद्विदो विदुः ॥ २ ॥**

औचित्यादिति–औचित्यादुचितप्रवृत्तिलक्षणात् । वृत्तयुक्तस्याणुव्रतमहाव्रतसमन्वितस्य । वचनाज्जिनागमात् । तत्त्वचिन्तनं जीवादिपदार्थसार्थपर्यालोचनं । मैत्र्यादिभावैर्मैत्रीकरुणामुदितोपेक्षालक्षणैः समन्वितं सहितं अध्यात्मं । तद्विदोऽध्यात्मज्ञातारो विदुर्जानते ॥ २ ॥

**सुखचिन्ता मता मैत्री सा क्रमेण चतुर्विधा । उपकारिस्वकीयस्वप्रतिपन्नाखिलाश्रया ॥ ३ ॥**

सुखेति–सुखचिन्ता सुखेच्छा मैत्री मता । सा क्रमेण विषयभेदेन चतुर्विधा । उपकारी स्वोपकारकर्ता स्वकीयोऽनुपकर्ताऽपि नालप्रतिबद्धादिः, स्वप्रतिपन्नश्च स्वपूर्वपुरुषाश्रितः स्वाश्रितो वा, अखिलाश्च प्रतिपन्नत्वसंबन्धनिरपेक्षाः, सर्व एव तदाश्रया तद्विषया । तदुक्तं–"उपकारिस्वजनेतरसामान्यगता चतुर्विधा मैत्रीति" ॥ ३ ॥

करुणा दुःखहानेच्छा मोहाद्दुःखितदर्शनात् । संवेगाच्च स्वभावाच्च प्रीतिमत्स्वपरेषु च ॥ ४ ॥

करुणेति–दुःखहानस्य दुःखपरिहारस्येच्छा करुणा । सा च मोहादज्ञानादेका । यथा ग्लानयाचितापथ्यवस्तुप्रदाना-दिरूपकरुणा । अन्या च दुःखितस्य दीनादेर्दर्शनात् तस्य लोकप्रसिद्धाहारवस्त्रशयनासनादिप्रदानेन । संवेगान्मोक्षा-भिलाषाच्च सुखितेष्वपि सत्त्वेषु प्रीतिमत्सु सांसारिकदुःखपरित्राणेच्छा छद्मस्थानां अपरा । अपरा पुनरपरेषु च प्रीतिम-त्स्वसंबन्धिकेषु सर्वेष्वेव स्वभावाच्च प्रवर्तमाना केवलिनामिव भगवतां महामुनीनां सर्वानुग्रहपरायणानामित्येवं चतु-र्विधा । तदुक्तं–"मोहासुखसंवेगान्यहितयुता चैव करुणेति ॥ ४ ॥

आपातरम्ये सङ्केतावनुबन्धयुते परे । सन्तुष्टिर्मुदिता नाम सर्वेषां प्राणिनां सुखे ॥ ५ ॥

आपातेति–मुदिता नाम सन्तुष्टिः । सा चाद्यापातरम्येऽपथ्याहारतृप्तिजनितपरिणामासुन्दरसुखकल्पे तत्कालमात्र-रमणीये स्वपरगते वैषयिके सुखे । द्वितीया तु सङ्केतौ शोभनकारणे ऐहिकसुखविशेष एव परिहृष्टहितमिताहारपरिभो-गजनितस्वादुरसास्वादसुखकल्पे । तृतीया चानुबन्धयुतेऽव्यवच्छिन्नसुखपरंपरया देवमनुजजन्मसु कल्याणप्राप्तिलक्षणे स्वपरजनानुगते । चतुर्थी तु परे प्रकृष्टे मोहक्षयादिसंजये अव्याबाधे च सर्वेषां प्राणिनां सुखे इत्येवं चतुर्विधा । तदु-क्तं–"सुखमात्रे सङ्केतावनुबन्धयुते परे च मुदिता तु" ॥ ५ ॥

करुणातोऽनुबन्धाच्च निर्वेदात्तत्त्वचिन्तनात् । उपेक्षा ह्यहितेऽकाले सुखेऽसारे च सर्वतः ॥ ६ ॥

करुणात इति—उपेक्षा हि माध्यस्थ्यलक्षणा । करुणातोऽहिते विषये भवत्येका, यथातुरस्य स्वातंत्र्यादपथ्यं सेवमानस्य करुणया तन्निवारणमवधीर्योपेक्षा क्रियते । अपरा चानुबन्धादायत्यालोचनेन कार्यविषयप्रवाहपरिणामादकालेऽनवसरे, यथा कश्चिदालस्यादेरर्था(व)र्जनादिषु न प्रवर्तते, तं चाप्रवर्तमानं कदाचित्तद्धितार्थी प्रवर्तयति, कदाचित्तु परिणामसुन्दरं कार्यसन्तानमनवेक्षमाणो माध्यस्थ्यमवलंबत इति । अन्या च निर्वेदाद्भवसुखवैराग्यादसारे बहुतरदुःखानुविद्धत्वेन दुःखानतिविशिष्टे सुखे, यथा सर्वेन्द्रियोत्सवकरं संसारिसुखमनुपश्यतोऽपि योगिनः । इतरा च तत्त्वचिन्तनान्मनोज्ञामनोज्ञानां वस्तूनां परमार्थतो रागद्वेषानुत्पादकत्वस्य स्वापराधस्यैव च मोहादिकर्मविकारसमुत्थस्य भावनात् सर्वतः सर्वत्रैव स्वव्यतिरिक्तस्य कस्यापि सुखदुःखहेतुत्वानाश्रयणात् । तदुक्तं—"करुणानुबन्धनिर्वेदतत्त्वसारा ह्युपेक्षेति" ॥ ६ ॥

उक्तभेदानामेतासां मैत्र्यादीनां यथाक्रमं परिणममानानां विशुद्धस्वभावानामेवाध्यात्मोपयोग इति फलद्वारा दर्शयन्नाह—

**सुखीर्ष्यां दुःखितोपेक्षां पुण्यद्वेषमधर्मिषु । रागद्वेषौ त्यजन्नेता लब्ध्वाध्यात्मं समाश्रयेत् ॥ ७ ॥**

सुखीति—सुखिष्वीर्ष्यां, न तु साध्वेषां सुखित्वमिति मैत्री । दुःखितानामुपेक्षां, न तु कथं नु नामैतेषां दुःखविमुक्तिः स्यादिति कृपां । पुण्ये प्राणिनां सुकृते द्वेषं, न तु तदनुमोदनेन हर्षं । अधर्मिषु रागद्वेषौ, न तूपेक्षां । त्यजन् परिहरन्नेताः परिणतिशुद्धा मैत्राद्या लब्ध्वा अध्यात्मं समाश्रयेत् । निष्पन्नयोगानां हि मैत्र्यादिरहितं सद्बोधमेव स्वभावतः परार्थसारं चित्तं । योगारंभकाणां त्वभ्यासादेव सुखीर्ष्यादित्यागेन मैत्र्यादिविशुद्धिरिति । तदुक्तं—"एताः खल्वभ्यासात् क्रमेण

वचनानुसारिणां पुंसाम्। सद्भूतानां सततं शुद्धानां (श्राद्धानां) परिणमन्त्युच्चैः ॥१॥" ततश्च निरपायोऽध्यात्मधात्र इति स्थितम्। पतञ्जलिरप्याह–"मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनमिति"(१–३३)॥७॥

अतः पापक्षय. सत्त्वं शीलं ज्ञानं च शाश्वतम्। तथानुभवसंसिद्धममृतं ह्यद एव नु ॥ ८ ॥

अत इति–अतोऽध्यात्मात्। पापक्षयो ज्ञानावरणादिक्लिष्टकर्मप्रक्षयः। सत्त्वं वीर्योत्कर्षः। शील चित्तसमाधिः। ज्ञानं च वस्त्ववबोधरूपं। शाश्वतमप्रतिघ। तथेति वक्तव्यान्तरसमुच्चये। अनुभवसंसिद्धं स्वसंवेदनप्रत्यक्षं। अमृत पीयूषं। हि स्फुट। अद एवाध्यात्ममेव नु अतिदारुणमोहविषविकारनिराकारकत्वादस्येति ॥ ८ ॥

अभ्यासो वृद्धिमानस्य भावना बुद्धिसंगतः। निवृत्तिरशुभाभ्यासाद्भाववृद्धिश्च तत्फलम् ॥ ९ ॥

अभ्यास इति–(प्रत्यहं प्रतिदिवसं)। वृद्धिमानुत्कर्षमनुभवन्। बुद्धिसंगतो ज्ञानानुगतः। अस्याध्यात्मस्य अभ्यासोऽनुवर्तनं भावनोच्यते। अशुभाभ्यासात् कामक्रोधादिपरिचयात्। निवृत्तिरुपरतिः। भाववृद्धिश्च शुद्धसत्त्वसमुत्कर्षरूपा। तत्फल भावनाफलम् ॥ ९ ॥

ज्ञानदर्शनचारित्रतपोवैराग्यभेदतः। इष्यते पञ्चधा चेयं दृढसंस्कारकारणम् ॥ १० ॥

ज्ञानेति–इयं च भावना भाव्यमानज्ञानादिभेदेनावश्यकभाष्यादिप्रसिद्धा पंचधेष्यते। दृढस्य झटित्युपस्थितिहेतोः संस्कारस्य कारणं। भावनाया एव पटुतरभावनाजनकत्वनियमात् ॥ १० ॥

उपयोगे विजातीयप्रत्ययाव्यवधानभाक् । शुभैकप्रत्ययो ध्यानं सूक्ष्माभोगसमन्वितम् ॥ ११ ॥

उपयोग इति–उपयोगे स्थिरप्रदीपसदृशे धारावन्ने ज्ञाने । विजातीयप्रत्ययेन तद्विच्छेदकारिणा विषयान्तरसंचारेणा-लक्ष्यकालेनाप्यव्यवधानभागनन्तरितः शुभैकप्रत्ययः प्रशस्तैकार्थबोधो ध्यानमुच्यते । सूक्ष्माभोगेनोत्पातादिविषयसूक्ष्मा-लोचनेन समन्वितं सहितम् ॥ ११ ॥

खेदोद्वेगभ्रमोत्थानक्षेपासंगान्यमुद्रुजाम् । त्यागादष्टपृथक्चित्तदोषाणामनुबन्ध्यदः ॥ १२ ॥

खेदेति–खेदादीनां वक्ष्यमाणलक्षणानां । अष्टानां पृथक्चित्तदोषाणाम् योगिमनोदोषाणां । त्यागात् परिहारात् । अदो ध्यानं । अनुबन्धि उत्तरोत्तरवृद्धिमद्भवति । यद्यप्यन्यत्र "खेदोद्वेगक्षेपोत्थानभ्रान्त्यन्यमुद्रुगासंगैः । युक्तानि हि चित्तानि प्रबन्धतो वर्जयेन्मतिमान्" इत्येवं क्रमोऽभिहितस्तथाप्यत्र बन्धानुलोम्याद्व्यत्ययेनाभिधानमिति द्रष्टव्यम् ॥ १२ ॥

प्रवृत्तिजः क्लमः खेदस्ततो दार्ढ्यं न चेतसः । मुख्यो हेतुरदश्चात्र कृषिकर्मणि वारिवत् ॥ १३ ॥

प्रवृत्तिज इति–प्रवृत्तिजः क्रियाजनितः । क्लमो मानसदुःखानुबन्धी प्रयासः खेदः । तत्र तस्मिन् सति । दार्ढ्यं प्रणिधानैकाग्रत्वलक्षणं चेतसो न भवति । अदश्च प्रणिधानैकाग्र्यं च । अत्र योगकर्मणि । कृषिकर्मणि कृषिसाध्य-धान्यनिष्पत्तौ । वारिवत् मुख्योऽसाधारणो हेतुः । तदुक्तं–"खेदे दार्ढ्याभावान्न प्रणिधानमिह सुन्दरं भवति । एतच्चेह प्रवरं कृषिकर्मणि सलिलवज्ज्ञेयम् ॥ १ ॥" ॥ १३ ॥

स्थितस्यैव स उद्वेगो योगक्षेपात्ततः क्रिया । राजविष्टिसमा जन्म बाधते योगिनां कुले ॥ १४ ॥

स्थितस्यैवेति—स्थितस्यैवाप्रवृत्तस्यैव । स क्रम उद्वेग उच्यते । ततस्तस्मादनादरजनितात् योगक्षेपात् । क्रिया पारवश्यादिनिमित्ता प्रवृत्तिः । राजविष्टिसमा नृपनियुक्तानुष्ठानतुल्या । योगिनां श्रीमतां आढ्यानां कुले जन्म बाधते प्रतिघ्नाति । अनादरेण योगक्रियाया योगिकुलजन्मबाधकत्वनियमात् । तदुक्तं— "उद्वेगे विक्षेपाद्विष्टिसमं करणमस्य पापेन । योगिकुलजन्मबाधकमलमेतत्तद्विदामिष्टम् ॥ १ ॥" ॥ १४ ॥

भ्रमोऽन्तर्विप्लवस्तत्र न कृताकृतवासना ॥ तां विना योगकरणं प्रस्तुतार्थविरोधकृत् ॥ १५ ॥

भ्रम इति—भ्रमोऽन्तर्विप्लवश्चित्तविपर्ययः, शुक्तिकाया रजतमिदमितिवदवस्मिंस्तद्ग्रह इतियावत् । तत्र तस्मिन् सति । कृताकृतवासना इदं मया कृतमिदं वा न कृतमित्येवंरूपा वासना न भवति । विभ्रमदोषेण सत्यसंस्कारनाशाद्विपरीतसंस्कारोत्पादाच्च । तां कृताकृतवासनां विना योगकरणं प्रस्तुतार्थस्य योगसिद्धिलक्षणस्य विरोधकृत् । संस्काररहितयोगस्य तादृशयोग एव हेतुत्वादिति भावः । तदिदमुक्तं—"भ्रान्तौ विभ्रमयोगान्न हि संस्कारः कृतेतरादिगतः । तदभावे तत्करणं प्रक्रान्तविरोध्यनिष्टफलम् ॥ १ ॥" ॥ १५ ॥

प्रशान्तवाहितामावे उत्थानं करणं ततः । त्यागानुरूपमत्यागं निर्वेदादतथोदयम् ॥ १६ ॥

प्रशान्तेति—प्रशान्तवाहितायाः प्रशमैकवृत्तिसन्तानस्याभावे मनःप्रभृतीनामुद्रेकान्मदारब्धपुरुषवदुत्थानमुच्यते । ततः करणं योगस्य त्यागानुरूपं परिहारोचितं प्रशान्तवाहिताभावकोपात् । अत्यागं न विद्यते त्यागो यस्य तत्तथा कथचि-

द्वुपादेयत्वात्। निर्वेदादेकवृत्तिभंगलक्षणात् खेदात्। न विद्यते तथा योगकरणोचितत्वेन उदयो भाविकालविपाको यत्र तत्त-था। तदुक्तं–"उत्थाने निर्वेदात्करणमकरणोदयं सदैवास्य। अत्यागत्यागोचितमेतत्तु स्वसमयेऽपि मतम् ॥ १ ॥" ॥१६॥

क्षेपोऽन्तरान्तरान्यत्र चित्तन्यासोऽफलावहः। शालेरपि फलं नो यद्दृष्टमुत्खननेऽसकृत् ॥ १७ ॥

क्षेप इति–अन्तरान्तरा योगकरणकालस्यैव। अन्यत्राधिकृतान्यकर्मणि। चित्तन्यासः क्षेपः। स चाफलावहः फलाजनकः। यद्यस्माच्छालेरपि व्रीहेरपि। असकृद्वारंवारं। उत्खनने उत्पाटने फलं न दृष्टं। असकृदुत्पाटनेन शालेरिव क्षेपेण योगस्य फलजननशक्तिनाशान्न ततः फलमिति भावः। तदुक्तं–"क्षेपेऽपि चाप्रबन्धादिष्टफलसमृद्ध्ये न जात्वेतत्। नासकृदुत्पाटनतः शालिरपि फलावहः पुंसः ॥ १ ॥" ॥ १७ ॥

आसंगः स्यादभिष्वंगस्तत्रासंगक्रियैव न। ततोऽयं हन्त तन्मात्रगुणस्थानस्थितिप्रदः ॥ १८ ॥

आसंग इति–आसंगोऽभिष्वंगः स्यात् इदमेव सुन्दरमनुष्ठानमित्येवं नियताभिनिवेशरूपः। तत्र तस्मिन् सति। असंगक्रियैवाभिष्वंगाभाववत्यनवरतप्रवृत्तिरेव न भवति। ततोऽयमासंगो हन्त। तन्मात्रगुणस्थानेऽधिकृतगुणस्थानमात्रे स्थितिप्रदः, न तु मोहोन्मूलनद्वारेण केवलज्ञानोत्पत्तये प्रभवतीत्यासंगादपि तत्त्वतोऽफलमेवानुष्ठानं। तदाह–"आसंगेऽप्यविधानादसंगसक्त्युचितमित्यफलमेतत्। भवतीष्टफलदमुच्चैस्तदप्यसंगं यतः परमम् ॥ १ ॥" ॥ १८ ॥

विहितेऽविहिते वार्थेऽन्यत्र मुत्प्रकृतात्किल। इष्टेऽर्थेऽङ्गारवृष्ट्याभात्यनादरविधानतः ॥ १९ ॥

क्षिप्त इति–प्रकृतात् प्रस्तुतात् कर्मणोऽन्यत्र विहितेऽविहिते वाऽर्थे। मुद् प्रीतिः। इष्टेऽर्थेऽङ्गारवृष्ट्याभा अत्यनादरस्य गाढाबद्धमानस्य विधानतोऽवसरोचितरागाभावरागविषयानवसराभ्यां प्रतिपक्षरागाच्च। यथा चैत्यवन्दनस्वाध्यायकरणादिषु प्रतिनियतकालविषयेषु श्रुतानुरागादन्यासक्तचित्ततया वा चैत्यवन्दनादिनाक्रियमाणस्य। तदुक्तं–"अन्यमुदि तत्र रागाद्वदनावरक्तार्थतो महापाया। सर्वानर्थनिमित्तं मुद्विषयाङ्गारवृष्ट्याभा॥ १॥" ॥ १९॥

रुजि सम्यगनुष्ठानोच्छेदाद्वन्ध्यफलं हि तत्। एतान् दोषान् विना ध्यानं शान्तोदात्तस्य तत्कृतम्॥२०॥

रुजीति–रुजि पीडारूपायां भङ्गरूपायां वा सत्यां। सम्यगनुष्ठानोच्छेदात् सदनुष्ठानसामान्यविच्छेदात्। वन्ध्यफलं मोघप्रयोजनं हि तदनुष्ठानं बलात्कारेण क्रियमाणं। तदुक्तं–"रुजि निजजात्युच्छेदात्करणमपि हि नेष्टसिद्धये नियमात्। अस्येत्यननुष्ठानं तेनैतद्वन्ध्यफलमेव॥ १॥" तदस्मादेतान् दोषान् विना शान्तोदात्तस्य क्रोधादिविकाररहितोदाराशयस्य योगिनो ध्यानं हित कुशलानुबन्धि॥ २०॥

वशिता चैव सर्वत्र भावस्तैमित्यमेव च। अनुबन्धव्यवच्छेदश्चेति ध्यानफलं विदुः॥ २१॥

वशितेति–सर्वत्र कार्ये। वशिता चैवात्मायत्ततैव। भावस्यान्तःकरणपरिणामस्य स्तैमित्यमेव च निश्चलत्वमेव। अनुबन्धव्यवच्छेदो भवान्तरारम्भकाणामितरेषां च कर्मणां यद्व्यवच्छेदकरणं चेत्येतद्ध्यानफलं विदुर्जानते ध्यानफलविदः॥२१॥

व्यवहारकुदृष्ट्योच्चैरिष्टानिष्टेषु वस्तुषु। कल्पितेषु विवेकेन तत्त्वधीः समतोच्यते॥ २२॥

व्यवहारेति–व्यवहारकुदृष्ट्याऽनादिमत्या वितथगोचरया कुव्यवहारवासनयाऽविद्यापराभिधानया ॥ उच्चैरतीव । कल्पितेषु इष्टानिष्टेषु इन्द्रियमनःप्रमोददायिषु तदितरेषु च वस्तुषु शब्दादिषु । विवेकेन "तानेवार्थान् द्विषतस्तानेवार्थान् प्रलीयमानस्य । निश्चयतो नानिष्टं न विद्यते किंचिदिष्टं वे"त्यादिनिश्चयालोचनेन । तत्त्वधीरिष्टानिष्टत्वपरिहारेण तुल्यताधीरुपेक्षालक्षणा समतोच्यते । यदुक्तं–"अविद्याकल्पितेषूच्चैरिष्टानिष्टेषु वस्तुषु । संज्ञानात्तद्व्युदासेन समता समतोच्यते ॥ १ ॥" ॥ २२ ॥

**विनैतया न हि ध्यानं ध्यानेनेयं विना च न । ततः प्रवृत्तचक्रं स्याद्द्वयमन्योऽन्यकारणात् ॥ २३ ॥**

विनेति–एतया समतया विना हि ध्यानं न स्यात्, चित्तव्यासंगानुपरमात् । ध्यानेन विना चेयं समता न भवति, प्रतिपक्षसामर्थ्या बलवत्त्वात् । अतो द्वयं ध्यानसमतालक्षणं । अन्योऽन्यकारणात् प्रवृत्तचक्रमनुपरतप्रवाहं स्यात् । न चैवमन्योऽन्याश्रयः, अप्रकृष्टयोस्तयोर्मिथ उत्कृष्टयोर्हेतुत्वात् । सामान्यतस्तु क्षयोपशमभेदस्यैव हेतुत्वादिति ज्ञेयम् ॥२३॥

**ऋद्ध्यप्रवर्तनं चैव सूक्ष्मकर्मक्षयस्तथा । अपेक्षातन्तुविच्छेदः फलमस्याः प्रचक्षते ॥ २४ ॥**

ऋद्धीति–ऋद्धीनामामर्षौषध्यादीनामनुपजीवनेनाप्रवर्तनमव्यापारणं । सूक्ष्माणां केवलज्ञानदर्शनयथाख्यातचारित्राद्यावरणाणां कर्मणां क्षयः । तथेति समुच्चये । अपेक्षैव बन्धनहेतुत्वात्तन्तुस्तद्व्यवच्छेदः फलमस्याः समतायाः प्रचक्षते विचक्षणाः ॥२४॥

**विकल्पस्पन्दरूपाणां वृत्तीनामन्यजन्मनाम् । अपुनर्भावतो रोधः प्रोच्यते वृत्तिसंक्षयः ॥ २५ ॥**

विकल्पेति–स्वभावत एव निस्तरङ्गमहोदधिकल्पस्यात्मनोऽन्यजन्मनां पवनस्थानीयस्वेतरतथाविधमनःशरीररूपस्यसंयोगजनितानां विकल्पस्पन्दरूपाणां वृत्तीनां । अपुनर्भावतः पुनरुत्पत्तियोग्यतापरिहारात् । रोधः परित्यागः केवलज्ञानलाभकाले अयोगिकेवलित्वकाले च वृत्तिसंक्षयः प्रोच्यते । तदाह–"अन्यसयोगवृत्तीनां यो निरोधस्तथा तथा । अपुनर्भावरूपेण स तु तत्संक्षयो मतः ॥ १ ॥" ॥ २५ ॥

केवलज्ञानलाभश्च शैलेशीसंपरिग्रहः । मोक्षप्राप्तिरनाबाधा फलमस्य प्रकीर्तितम् ॥ २६ ॥

केवलेति–स्पष्टः ॥ २६ ॥

वृत्तिरोधोऽपि योगश्चेद्भिद्यते पञ्चधाऽप्ययम् । मनोवाक्कायवृत्तीनां रोधे व्यापारभेदत ॥ २७ ॥

वृत्तिरोधोऽपीति–मोक्षहेतुलक्षणो योगः पंचधा भिन्न इति प्रदर्शितं । वृत्तिरोधोऽपि चेद्योग उच्यते । अयमपि पंचधा भिद्यते । मनोवाक्कायवृत्तीनां रोधे व्यापारभेदतः । अनुभवसिद्धानां भेदानां दुरपह्नवत्वात्, अन्यथा द्रव्यमात्रपरिशेषप्रसङ्गादिति भावः ॥ २७ ॥

प्रवृत्तिस्थिरताभ्यां हि मनोगुप्तिद्वये किल । भेदाश्चत्वार इष्यन्ते तत्रान्त्यायां तथान्तिमः ॥ २८ ॥

प्रवृत्तीति–प्रवृत्तिः प्रथमाभ्यासः, स्थिरता उत्कर्षकाष्ठाप्राप्तिस्ताभ्यां । मनोगुप्तिद्वये किल । आद्याश्चत्वारो भेदा अध्यात्मभावनाध्यानसमतालक्षणा इष्यन्ते, व्यापारभेदादेकत्र क्रमेणोभयोः समावेशाद्यथोत्तरं विशुद्धत्वात् । तथाऽन्त्यायां चरमायां । तत्र मनोगुप्तौ । अन्तिमो वृत्तिसंक्षय इष्यते । इत्थं हि पञ्चापि प्रकारा निरपाया एव ॥ २८ ॥

**विमुक्तकल्पनाजालं समत्वे सुप्रतिष्ठितम् । आत्मारामं मनश्चेति(स्तज्ज्ञैः)मनोगुप्तिस्त्रिधोदिता ॥२९॥**

विमुक्तेति–विमुक्तं परित्यक्तं कल्पनाजालं संकल्पविकल्पचक्रं येन तत् । तथा समत्वे सुप्रतिष्ठितं सम्यग्व्यवस्थितं । आत्मारामं स्वभावप्रतिबद्धं मनः तज्ज्ञैस्तद्वेदिभिर्मनोगुप्तिस्त्रिधा त्रिभिः प्रकारैरुदिता कथिता ॥ २९ ॥

**अन्यासामवतारोऽपि यथायोगं विभाव्यताम् । यतः समितिगुप्तीनां प्रपञ्चो योग उत्तमः ॥ ३० ॥**

अन्यासामिति–अन्यासां वाक्कायगुप्तीर्यासमित्यादीनां । अवतारोऽप्यन्तर्भावोऽपि । यथायोगं यथास्थानं । विभाव्यतां विचार्यतां । यतो यस्मात् । समितिगुप्तीनां प्रपंचो यथापर्यायं विस्तारो योग उच्यते । उत्तम उत्कृष्टः । न तु समितिगुप्तिविभिन्नस्वभावो योगपदार्थोऽतिरिक्तः कोऽपि विद्यत इति ॥ ३० ॥

**उपायत्वेऽत्र पूर्वेषामन्त्य एवावशिष्यते । तत्पञ्चमगुणस्थानादुपायोऽर्वागिति स्थितिः ॥ ३१ ॥**

उपायत्व इति–अत्राध्यात्मादिभेदेषु योगेषु । पूर्वेषामध्यात्मादीनां । उपायत्वे योगोपायत्वमात्रे वक्तव्ये । अन्त्य एव वृत्तिक्षय एव योगोऽवशिष्यते । तत्तस्मात्पंचमगुणस्थानादर्वाक् पूर्वसेवारूप उपायः तत आरभ्य तु सानुबन्धयोगप्रवृत्तिरेवेति स्थितिः सत्तंत्रमर्यादा ॥ ३१ ॥

**भगवद्वचनस्थित्या योगः पञ्चविधोऽप्ययम् । सर्वोत्तमं फलं दत्ते परमानन्दमञ्जसा ॥ ३२ ॥**

भगवदिति–निगदसिद्धोऽयम् ॥ ३२ ॥ ॥ इति योगभेदद्वात्रिंशिका ॥ १८ ॥

## ॥ अथ योगविवेकद्वात्रिंशिका ॥ १९ ॥

अध्यात्मादीन् योगभेदानुपदर्श्य तदवान्तरनानाभेदप्रदर्शनेन तद्विवेकमेवाह–

**इच्छां शास्त्रं च सामर्थ्यमाश्रित्य त्रिविधोऽप्ययम्। गीयते योगशास्त्रज्ञैर्निर्व्याजं यो विधीयते ॥ १ ॥**

इच्छामिति–इच्छां शास्त्रं सामर्थ्यं चाश्रित्य त्रिविधोऽप्ययं योगो योगशास्त्रज्ञैर्गीयते, इच्छायोगः शास्त्रयोगः सामर्थ्ययोगश्चेति। यो निर्व्याजं निष्कपटं विधीयते। अभ्यासस्तु योगाभासो गणनायामेव नावतरतीति ॥ १ ॥

**चिकीर्षोः श्रुतशास्त्रस्य ज्ञानिनोऽपि प्रमादिनः। कालादिविकलो योग इच्छायोग उदाहृतः ॥ २ ॥**

चिकीर्षोरिति–चिकीर्षोः तथाविधक्षयोपशमाज्जातेऽपि निर्व्याजमेव कर्तुमिच्छोः। श्रुतार्थस्य श्रुतागमस्य। श्रूयतेऽनेन तत्त्वमिति तस्या (कृत्वा) श्रुतशब्दस्यागमवचनत्वात्। ज्ञानिनोऽपि अवगतानुष्ठेयतत्त्वार्थस्यापि। प्रमादिनो विकथादिप्रमादवतः। कालादिना विकलोऽसंपूर्णः। योगश्चैत्यवन्दनादिव्यापार इच्छायोग उदाहृतः प्रतिपादितः ॥ २ ॥

प्रधानस्येच्छायोगत्वे तदंगस्यापि तथात्वमिति दर्शयन्नाह–

**सांगमप्येककं कर्म प्रतिपन्ने प्रमादिनः। नत्वेच्छायोगत इति श्रवणादत्र मज्जति ॥ ३ ॥**

सांगमिति–सांगमपि अंगसाकल्येनाविकलमपि। एककं स्वल्पं किंचित् कर्म। प्रतिपन्ने यथुकाद्यव्यापिनि प्रधाने कर्म-

त्याद्दते । प्रमादिनः प्रमादवतः । नत्त्वेच्छायोगत इति श्रवणादत्र इच्छायोगे निमज्जति निमग्नं जवति । अन्यथा हीच्छायोगाधिकारी जगवान् हरिजद्रसूरिर्योगदृष्टिसमुच्चयप्रकरणप्रारंजे मृषावादपरिहारेण सर्वत्रौचित्यारंजप्रदर्शनार्थं नत्त्वेच्छायोगतोऽयोगमित्यादि नाऽवदत् । वाग्नमस्कारमात्रस्याप्यस्य विधिशुद्धस्यापि संजवात् । प्रतिपन्नस्वपर्यायान्तर्जूतत्वेन च प्रकृतनमस्कारस्यापीच्छायोगप्रजवत्वमदुष्टमिति विजावनीयम् ॥ ३ ॥

यथाशक्त्यप्रमत्तस्य तीव्रश्रद्धावबोधतः । शास्त्रयोगस्त्वखंडार्थाराधनादुपदिश्यते ॥ ४ ॥

यथाशक्तीति–यथाशक्ति स्वशक्त्यनतिक्रमेण । अप्रमत्तस्य विकथादिप्रमादरहितस्य । तीव्रौ तथाविधमोहापगमात् पटुतरौ यौ श्रद्धावबोधौ जिनप्रवचनास्तिक्यतत्त्वपरिच्छेदौ । ततः अखंडार्थाराधनात् कालाद्यविकलवचनानुष्ठानात्तु । शास्त्रयोग उपदिश्यते ॥ ४ ॥

शास्त्रेण दर्शितापायः फलपर्यवसायिना । तदतिक्रान्तविषयः सामर्थ्याख्योऽतिशक्तितः ॥ ५ ॥

शास्त्रेणेति–फलपर्यवसायिना मोक्षपर्यन्तोपदेशेन शास्त्रेण । दर्शितः सामान्यतो ज्ञापित उपायो यस्य सामान्यतः फलपर्यवसानत्वाच्छास्त्रस्य द्वारमात्रबोधनेन विशेषहेतुदिक्प्रदर्शकत्वात् । अतिशक्तितः शक्तिप्राबल्यात् । तदतिक्रान्तविषयः शास्त्रातिक्रान्तगोचरः । सामर्थ्याख्यो योग उच्यते ॥ ५ ॥

शास्त्रातिक्रान्तविषयत्वमस्य समर्थयन्नाह–

शास्त्रादेव न बुध्यन्ते सर्वथा सिद्धिहेतवः । अन्यथा श्रवणादेव सर्वज्ञत्वं प्रसज्यते ॥ ६ ॥

शास्त्रादिति—सिद्धिहेतवः सर्वे। सर्वथा सर्वैः प्रकारैः। शास्त्रादेव न बुध्यन्ते। अन्यथा शास्त्रादेव सर्वसिद्धिहेतूना बोधे सर्वज्ञत्वं प्रसज्यते। श्रवणादेव सर्वसिद्धिहेतुज्ञाने सार्वज्ञ्यसिद्ध्युपधायकोत्कृष्टहेतुज्ञानस्याप्यावश्यकत्वात्, तदुपधानस्य स्वरूपाचरणरूपचारित्रस्यापि विघ्नाभावात्, सर्वसिद्ध्युपायज्ञानस्य सार्वज्ञ्यव्याप्यत्वाच्च। तदिदमुक्तं—"सिद्ध्याख्यपदसंप्राप्तिहेतुभेदा न तत्त्वतः। शास्त्रादेवावगम्यन्ते सर्वथैवेह योगिभिः॥ १ ॥ सर्वथा तत्परिच्छेदात्साक्षात्कारित्वयोगतः। तत्सर्वज्ञत्वसंसिद्धेस्तदा सिद्धिपदाप्तितः॥ २ ॥" ॥ ६ ॥

**प्रातिभज्ञानगम्यस्तत्सामर्थ्याख्योऽयमिष्यते। अरुणोदयकल्पं हि प्राच्यं तत्केवलार्कतः॥ ७ ॥**

प्रातिभेति—तत्तस्मात्प्रातिभज्ञानगम्योऽयं सामर्थ्याख्यो योग उच्यते (इष्यते)। सार्वज्ञ्यहेतुः सत्त्वयं मार्गानुसारिप्रकृष्टोहस्यैव विषयो न तु वाचां, क्षपकश्रेणिगतस्य धर्मव्यापारस्य स्वानुभवमात्रवेद्यत्वादिति भावः। ननु प्रातिभमपि श्रुतज्ञानमेव अन्यथा षष्ठज्ञानप्रसंगात्तथा च कथं शास्त्रातिक्रान्तविषयत्वमस्येत्यत आह—तत्प्रातिभं हि केवलार्कतः केवलज्ञानभानुमालिनः प्राच्यं पूर्वकालीनं अरुणोदयकल्पम्॥ ७ ॥

एतदेव भावयति—

**रात्रेर्दिनाद्वपि पृथग्यथा नो वारुणोदयः। श्रुताच्च केवलज्ञानात्तथेदमपि भाव्यताम्॥ ८ ॥**

रात्रेरिति—यथाऽरुणोदयो रात्रेर्दिनादपि पृथग् नो वाऽपृथगित्यर्थः। न पुनरस्यैकरूप्यं विवेचयितुं शक्यते, पूर्वापरत्वा-

विशेषेणोभयभागसंभवात् । श्रुतात् केवलज्ञानाच्च तथेदमपि प्रातिभं ज्ञानं भाव्यतां, तत्काल एव तथाविधक्षयोपशमविशेषेणोभयभागसंभवात्... 

**ऋतंभरादिभिः शब्दैर्वाच्यमेतत्परैरपि । इष्यते गमकत्वं चामुष्य व्यासोऽपि यज्जगौ ॥ ९ ॥**

ऋतंभरादिभिरिति–एतत् प्रकृतं प्रातिभज्ञानं परैरपि पातञ्जलादिभिः ऋतंभरादिभिः शब्दैर्वाच्यमिष्यते । आदिना तारकादिशब्दग्रहः । गमकत्वं सामर्थ्ययोगज्ञापकत्वं चामुष्य प्रातिभस्य परैरिष्यते । यद्यस्माद्व्यासोऽपि जगौ॥ ९ ॥

**आगमेनानुमानेन योगा (ध्याना) भ्यासरसेन च । त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥१०॥**

आगमेनेति–आगमेन शास्त्रेण । अनुमानेन लिंगाल्लिंगिज्ञानरूपेण । ध्यानाभ्यासस्य रसः श्रुतानुमानप्रज्ञाविलक्षणऋतंभराख्यो विशेषविषयस्तेन च त्रिधा प्रज्ञां प्रकल्पयन् । उत्तमं सर्वोत्कृष्टं योगं लभते ॥ १० ॥

**द्विधाऽयं धर्मसंन्यासयोगसंन्याससंज्ञितः । क्षायोपशमिका धर्मा योगाः कायादिकर्म तु ॥ ११॥**

द्विधेति–द्विधा द्विप्रकारोऽयं सामर्थ्ययोगः । धर्मसन्न्यासयोगसन्न्याससंज्ञे जाते यस्य स तथा । संज्ञा चेह तया संज्ञायत इति कृत्वा तत्स्वरूपमेव गृह्यते । क्षायोपशमिकाः क्षयोपशमनिर्वृत्ताः क्षान्त्यादयो धर्माः । योगास्तु कायादिकर्म कायोत्सर्गकरणादयः कायादिव्यापाराः ॥ ११ ॥

द्वितीयापूर्वकरणे प्रथमस्तात्त्विको भवेत्। आयोज्यकरणादूर्ध्वं द्वितीय इति तद्विदः ॥ १२ ॥

द्वितीयेति—द्वितीयापूर्वकरण इति ग्रन्थिभेदनिबन्धनप्रथमापूर्वकरणव्यवच्छेदार्थं द्वितीयग्रहणं, प्रथमेऽधिकृतसामर्थ्ययोगासिद्धेः। अपूर्वकरणत्वं तु तत्रासञ्जातपूर्वग्रन्थिभेदादिफलेनाभिधानात् यथाप्राधान्यमयमुपन्यासः। चारुश्च पश्चानुपूर्व्येति समयविदः। ततो द्वितीयेऽस्मिंस्तथाविधकर्मस्थितेस्तथाविधसंख्येयसागरोपमातिक्रमभाविनि प्रथमो धर्मसंन्याससंज्ञितः सामर्थ्ययोगस्तात्त्विकः पारमार्थिको भवेत्। क्षपकश्रेणियोगिनः क्षायोपशमिकक्षान्त्यादिधर्मनिवृत्तेः। अतात्त्विकस्तु प्रव्रज्याकालेऽपि भवति, प्रवृत्तिलक्षणधर्मसंन्यासवत्याः प्रव्रज्याया ज्ञानयोगप्रतिपत्तिरूपत्वात्। अत एवास्या भवविरक्त एवाधिकार्युक्तः। यथोक्तं—"अथ प्रव्रज्यार्हः। आर्यदेशोत्पन्नः विशिष्टजातिकुलान्वितः। क्षीणप्रायकर्ममलबुद्धिः। दुर्लभं मानुष्यं, जन्ममरणनिमित्तं, संपदश्चपलाः, विषया दुःखहेतवः, संयोगे वियोगान्तः, प्रतिक्षणं मरणं, दारुणो विपाक, इत्यवगतसंसारनैर्गुण्यस्तत एव तद्विरक्तः, प्रतनुकषायोऽल्पहास्यादिः, कृतज्ञो, विनीतः, प्रागपि राजामात्यपौरजनबहुमतोऽद्रोहकारी, कल्याणाङ्गः, श्राद्धः समुपसंपन्नश्चेति"। न ह्यनीदृशो ज्ञानयोगमाराधयति, न चेदृशो नाराधयतीति भावनीयं। सर्वज्ञवचनमागमस्तत्रायमभिरूपितार्थ इति। आयोज्यकरणं केवलाभोगेनाचिन्त्यवीर्यतया भवोपग्राहिकर्माणि तथा व्यवस्थाप्य तत्क्षपणव्यापारः शैलेश्यवस्थाफलं तत ऊर्ध्वं द्वितीयो योगसंन्यास-

१ द्वितीयापूर्वकरणकालीनधर्मसंन्यास।

संज्ञित इति तद्विदोऽन्निदधति शैलेश्यवस्थायां कायादियोगानां सन्न्यासेनायोगाख्यस्य सर्वसन्न्यासलक्षणस्य सर्वोत्तमस्य योगस्य प्राप्तेरिति ॥ १२ ॥

**तात्त्विकोऽतात्त्विकश्चेति सामान्येन द्विधाप्ययम्। तात्त्विको वास्तवोऽन्यस्तु तदाभासः प्रकीर्तितः ॥१३॥**

तात्त्विक इति—सामान्येन विशेषभेदानुपग्रहेण तात्त्विकोऽतात्त्विकश्चेति द्विधाप्ययं योग इष्यते। तात्त्विको वास्तवः केनापि नयेन मोक्षयोजनफल इत्यर्थः। अन्योऽतात्त्विकस्तु तदाभास उक्तलक्षणविरहितोऽपि योगोचितवेषादिना योगवदाभासमानः प्रकीर्तितः ॥ १३ ॥

**अपुनर्बन्धकस्यायं व्यवहारेण तात्त्विकः। अध्यात्मभावनारूपो निश्चयेनोत्तरस्य तु ॥ १४ ॥**

अपुनर्बन्धकस्येति—अपुनर्बन्धकस्य उपलक्षणात्सम्यग्दृष्टेश्च। अयं योगो व्यवहारेण। कारणस्यापि कार्योपचाररूपेण तात्त्विकोऽध्यात्मरूपो भावनारूपश्च। निश्चयेन निश्चयनयेनोपचारपरिहाररूपेणोत्तरस्य तु चारित्रिण एव ॥ १४ ॥

**सकृदावर्तनादीनामतात्त्विक उदाहृतः। प्रत्यपायफलप्रायस्तथावेषादिमात्रतः ॥ १५ ॥**

सकृदिति—सकृदेकवारमावर्तन्त उत्कृष्टस्थितिं बध्नन्तीति सकृदावर्तनाः। आदिशब्दाद्द्विरावर्तनादिग्रहः। तेषामतात्त्विको व्यवहारतः। निश्चयतश्चातत्त्वरूपोऽशुद्धपरिणामत्वादुदाहृतः अध्यात्मभावनारूपो योगः। प्रत्यपायोऽनर्थः फलं प्रायो बाहुल्येन यस्य स तथा। तथा तत्प्रकारभावमाराध्यात्मभावनायुक्तयोगियोग्यं यद्वेषादिमात्रं नेपथ्यचेष्टाभाषालक्षणं श्रद्धानशून्यं वस्तु तस्मात्। तत्र हि वेषादिमात्रमेव स्यात्, न पुनस्तेषां काचिद्भद्रालुतेति ॥ १५ ॥

शुद्ध्यपेक्षा यथायोगं चारित्रवत एव च । हन्त ध्यानादिको योगस्तात्त्विकः प्रविजृंभते ॥ १६ ॥

शुद्ध्यपेक्ष इति–यथायोगं यथास्थानं । शुद्ध्यपेक्ष उत्तरोत्तरां शुद्धिमपेक्ष्य प्रवर्तमानचारित्रवत एव च हन्त तात्त्विकः पारमार्थिकैकस्वरूपो ध्यानादिको योगः प्रविजृंभते प्रोल्लसति ॥ १६ ॥

अपायाभावभावाभ्यां सानुबन्धोऽपरश्च सः । निरुपक्रमकर्मैवापायो योगस्य बाधकम् ॥ १७ ॥

अपायेति–अपायस्य भावाभावाभ्यां सद्भावासद्भावाभ्यां सानुबन्धोऽपरो निरनुबन्धश्च स योगः । अपायरहितः सानुबन्धः, तत्सहितश्च निरनुबन्ध इति । योगस्य बाधकं निरुपक्रमं विशिष्टानुष्ठानचेष्टयाप्यनुच्छेद्यमनाश्य स्वविपाकसामर्थ्यं वा कर्मैव चारित्रमोहनीयाख्यमपायः ॥ १७ ॥

बहुजन्मान्तरकरः सापायस्यैव साश्रवः । अनाश्रवस्त्वेकजन्मा तत्त्वाङ्गव्यवहारतः ॥ १८ ॥

बह्विति–बहुजन्मान्तरकरो देवमनुष्याद्यनेकजन्मविशेषहेतुर्निरुपक्रमकर्मणोऽवश्यवेदनीयत्वात् । सापायस्यैवापायवत एष साश्रवो योगः । एकमेव वर्तमानं जन्म यत्र स त्वनाश्रवः । ननु कथमेतदयोगिकेवलिगुणस्थानादर्वाक् सर्वसंवराभावेनानाश्रवत्वासंभवादित्यत आह–तत्त्वांगं निश्चयप्रापको यो व्यवहारस्ततः । तेन सांपरायिककर्मबन्धलक्षणस्यैवाश्रवस्याभ्युपगमात्तदभावे इत्वराश्रवभावेऽपि नानाश्रवयोगक्षतिरिति भावः । तदुक्तं–" आश्रवो बन्धहेतुत्वाद्बन्ध एवेह सम्मतः । स सांपरायिको मुख्यस्तदेषोऽर्थोऽस्य संगतः ॥ १ ॥ एवं चरमदेहस्य संपरायवियोगतः । इत्वराश्रवभावेऽपि

स तथानाश्रवो मतः ॥ २ ॥ निश्चयेनात्र शब्दार्थः सर्वत्र व्यवहारतः । निश्चयव्यवहारौ यद्वावप्यभिमतार्थदौ ॥ ३ ॥" निश्चयेनेत्युपलक्षणे तृतीया । ततो निश्चयेनोपलक्षितात्तत्प्रापकव्यवहारत इत्यन्वयः" ॥ १८ ॥

इत्थं साश्रवानाश्रवत्वाभ्यां योगद्वैविध्यमुक्त्वा शास्त्रसापेक्षस्वाधिकारिकत्वतद्विपर्ययाभ्यां तद्वैविध्याभिधानाभिप्रायवानाह–

**शास्त्रेणाधीयते चायं नासिद्धेर्गोत्रयोगिनाम् । सिद्धेर्निष्पन्नयोगस्य नोद्देशः पश्यकस्य यत् ॥ १९ ॥**

शास्त्रेणेति–अयं च योगो गोत्रयोगिनां गोत्रमात्रेण योगिनामसिद्धेर्मलिनान्तरात्मतया योगसाध्यफलाभावाच्छास्त्रेण योगतंत्रेण नाधीयते । तथा सिद्धेः साम र्थ्ययोगत एव कार्यनिष्पत्तेः निष्पन्नयोगस्यासंगानुष्ठानप्रवाहप्रदर्शनेन सिद्धयोगस्यायं शास्त्रेण नाधीयते । यद्यस्मात् पश्यकस्य स्वत एव विदितवेद्यस्य । उद्दिश्यत इत्युद्देशः सदसत्कर्तव्याकर्तव्यादेशो नास्ति । यतोऽभिहितमाचारे–"उद्देसो पासगस्स नत्थि त्ति" ॥ १९ ॥

**कुलप्रवृत्तचक्राणां शास्त्रात्तदुपक्रिया । योगाचार्यैर्विनिर्दिष्टं तल्लक्षणमिदं पुनः ॥ २० ॥**

कुलेति–कुलयोगिनां प्रवृत्तचक्रयोगिनां च शास्त्राद्योगतंत्रात् सा विचित्रत्वेन प्रसिद्धा उपक्रिया योगसिद्धिरूपा भवति । तदुक्तं योगदृष्टिसमुच्चये–"कुलप्रवृत्तचक्रा ये त एवास्याधिकारिणः । योगिनो न तु सर्वेऽपि तथासिद्ध्यादिभावतः ॥ १ ॥" तेषां कुलप्रवृत्तचक्रयोगिनां लक्षणं पुनरिदं वक्ष्यमाणं योगाचार्यैः योगप्रतिपादकैः सूरिभिर्विनिर्दिष्टम् ॥ २० ॥

**ये योगिनां कुले जातास्तद्धर्मानुगताश्च ये । कुलयोगिन उच्यन्ते गोत्रवन्तोऽपि नापरे ॥ २१ ॥**

य इति—ये योगिनां कुले जाता स्तब्धजन्मानः तद्धर्मानुगताश्च योगिधर्मानुसरणवन्तश्च । ये प्रकृत्याऽन्येऽपि कुलयोगिन उच्यन्ते रूच्यतो जायतश्च गोत्रवन्तोऽपि सामान्येन कर्मभूमिभव्या अपि नापरे कुलयोगिन इति ॥ २१ ॥

सर्वत्राद्वेषिणश्चैते गुरुदेवद्विजप्रियाः । दयालवो विनीताश्च बोधवन्तो जितेन्द्रियाः ॥ २२ ॥

सर्वत्रेति—एते च तथाविधाग्रहाभावेन सर्वत्राद्वेषिणः । तथा धर्मप्रभावाद्यथास्थाचार गुर्वादिप्रियाः । तथा प्रकृत्या क्लिष्टपापाभावेन दयालवः । विनीताश्च । कुशलानुबन्धिभव्यतया बोधवन्तो ग्रन्थिभेदेन जितेन्द्रियाश्चारित्रभावेन ॥२२॥

प्रवृत्तचक्रास्तु पुनर्यमद्वयसमाश्रयाः । शेषद्वयार्थिनोऽत्यन्तं शुश्रूषादिगुणान्विताः ॥ २३ ॥

प्रवृत्तचक्रास्त्विति—प्रवृत्तचक्रास्तु पुनः यमद्वयस्य इच्छायमप्रवृत्तियमलक्षणस्य समाश्रया आधारीभूताः । शेषद्वयार्थिनः स्थिरयमसिद्धियमद्वयार्थिनः । अत्यन्तं सदुपायप्रवृत्त्या । शुश्रूषादयो गुणाः शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्त्वाभिनिवेशलक्षणास्तैरन्विता युक्ताः ॥ २३ ॥

आद्यावञ्चकयोगाप्त्या तदन्यद्वयलाभिनः । एतेऽधिकारिणो योगप्रयोगस्येति तद्विदः ॥ २४ ॥

आद्येति—आद्यावञ्चकयोगस्य योगावञ्चकयोगस्य आप्त्या प्राप्त्या हेतुभूतया । तदन्यद्वयलाभिनः क्रियावञ्चकफलावञ्चकयोगलाभवन्तस्तदवन्ध्यभव्यतया तत्त्वतस्तेषां तल्लाभवत्त्वात् । एतेऽधिकारिणो योगप्रयोगस्याधिकृतयोगव्यापारस्येत्येवं तद्विदो योगविदोऽभिदधति ॥ २४ ॥

**यमाश्चतुर्विधा इच्छाप्रवृत्तिस्थैर्यसिद्धयः । योगक्रियाफलाख्यं च स्मर्यतेऽवञ्चकत्रयम् ॥ २५ ॥**

यमा इति–यमाश्चतुर्विधा इच्छायमाः प्रवृत्तियमाः स्थिरयमाः सिद्धियमाश्च । अवञ्चकत्रयं च योगक्रियाफलाख्यं श्रूयते योगावञ्चकः क्रियावञ्चकः फलावञ्चकश्चेति ॥ २५ ॥

**इच्छायमो यमेष्विच्छा युता तद्वत्कथामुदा । स प्रवृत्तियमो यत्तत्पालनं शमसंयुतम् ॥ २६ ॥**

इच्छेति–तद्वतां यमवतां कथातो या मुत् प्रीतिस्तया युता सहिता यमेष्विच्छा इच्छायम उच्यते । यत्तेषां यमानां पालनं शमसंयुतमुपशमान्वितं स प्रवृत्तियमः । तत्पालनं चात्राविकलमभिप्रेतं, तेन न कालादिविकलतत्पालनक्षणे इच्छायमेऽतिव्याप्तिः । न च सोऽपि प्रवृत्तियम एव केवलं तथाविधसाधुचेष्टया प्रधान इच्छायम एव तात्त्विकपक्षपातस्यापि द्रव्यक्रियातिशायित्वात् । तदुक्तं–"तात्त्विकः पक्षपातश्च भावशून्या च या क्रिया । अनयोरन्तरं ज्ञेयं भानुखद्योतयोरिव ॥ १ ॥" संविग्नपाक्षिकस्य प्रवृत्तचक्रत्वानुरोधे तु प्रवृत्तियम एवायं तस्य शास्त्रयोगानियतत्वादिति नयभेदेन भावनीयम् ॥ २६ ॥

**सत्क्षयोपशमोत्कर्षादतिचारादिचिन्तया । रहिता यमसेवा तु तृतीयो यम उच्यते ॥ २७ ॥**

सदिति–सतो विशिष्टस्य क्षयोपशमस्योत्कर्षादुद्रेकादतिचारादीनां चिन्तया रहिता तदभावस्यैव विनिश्चयात् । यमसेवा तु तृतीयो यमः स्थिरयम उच्यते ॥ २७ ॥

परार्थसाधिका त्वेषा सिद्धिः शुद्धान्तरात्मनः । अचिन्त्यशक्तियोगेन चतुर्थो यम उच्यते ॥ २८ ॥

परार्थेति—परार्थसाधिका स्वसन्निधौ परस्य वैरत्यागादिकारिणी तु एषा यमसेवा सिद्धिः । शुद्धः क्षीणमलतया निर्मलोऽन्तरात्मा यस्य । अचिन्त्याया अनिर्वचनीयायाः शक्तेः स्ववीर्योल्लासरूपाया योगेन चतुर्थो यम उच्यते ॥ २८ ॥

सद्भिः कल्याणसंपन्नैर्दर्शनादपि पावनैः । तथादर्शनतो योग आद्यावञ्चक उच्यते ॥ २९ ॥

सद्भिरिति—सद्भिरुत्तमैः । कल्याणसंपन्नैर्विशिष्टपुण्यवद्भिः । दर्शनादप्यवलोकनादपि पावनैः पवित्रैः । तथा तेन प्रकारेण गुणवत्तयेत्यर्थः । दर्शनतो योगः संबन्ध आद्यावञ्चकः सद्योगावञ्चक इष्यते ॥ २९ ॥

तेषामेव प्रणामादिक्रियानियम इत्यलम् । क्रियावञ्चकयोगः स्यान्महापापक्षयोदयः ॥ ३० ॥

तेषामेवेति—तेषामेव सतामेव प्रणामादिक्रियानियम इत्यल क्रियावञ्चकयोगः स्यात् । महापापक्षयस्य नीचैर्गोत्रकर्मक्षयस्योदय उत्पत्तिर्यस्मात् स तथा ॥ ३० ॥

फलावञ्चकयोगस्तु सद्भ्य एव नियोगतः । सानुबन्धफलावाप्तिर्धर्मसिद्धौ सतां मता ॥ ३१ ॥

फलेति—फलावञ्चकयोगस्तु सद्भ्य एवानन्तरोदितेभ्यो नियोगतोऽवश्यंभावेन सानुबन्धस्योत्तरोत्तरवृत्तिमतः फलस्यावाप्तिः तथा सदुपदेशादिना धर्मसिद्धौ विषये सतां मता ॥ ३१ ॥

इत्थं योगविवेकस्य विज्ञानात्क्षीणकल्मषः । यतमानो यथाशक्ति परमानन्दमश्नुते ॥ ३२ ॥

इत्थमिति—स्पष्टः ॥ ३२ ॥ ॥ इति योगविवेकद्वात्रिंशिका ॥

# ॥ अथ योगावतारद्वात्रिंशिका ॥ २० ॥

अनन्तरोक्तो योगविवेकः स्वाभिमतयोगभेदे परोक्तयोगानामवतारे सति व्यवतिष्ठत इत्यतोऽयं निरूप्यते—

**संप्रज्ञातोऽपरश्चेति द्विधाऽन्यैरयमिष्यते । सम्यक् प्रज्ञायते येन संप्रज्ञातः स उच्यते ॥ १ ॥**

संप्रज्ञात इति—संप्रज्ञातोऽपरोऽसंप्रज्ञातश्चेति अन्यैः पातञ्जलैरयं योगो द्विधेष्यते । सम्यक् संशयविपर्ययानध्यवसायरहितत्वेन प्रज्ञायते प्रकर्षेण ज्ञायते भाव्यस्य स्वरूपं येन स संप्रज्ञात उच्यते ॥ १ ॥

**वितर्केण विचारेणानन्देनास्मितयान्वितः । भाव्यस्य भावनाभेदात्संप्रज्ञातश्चतुर्विधः ॥ २ ॥**

वितर्केणेति—वितर्केण विचारेणानन्देनास्मितयाऽन्वितः क्रमेण युक्तः । भाव्यस्य भावनाया विषयान्तरपरिहारेण चेतसि पुनः पुनर्निवेशनलक्षणाया भेदात् । संप्रज्ञातश्चतुर्विधो भवति । तदुक्तं—"वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञात इति ( १–१७ )" ॥ २ ॥

**पूर्वापरानुसन्धानाच्छब्दोल्लेखाच्च भावना । महाभूतेन्द्रियार्थेषु सविकल्पोऽन्यथापरः ॥ ३ ॥**

पूर्वेति—पूर्वापरयोरर्थयोरनुसंधानाच्छब्दोल्लेखाच्छब्दार्थोपरागाच्च यदा भावना प्रवर्तते महाभूतेन्द्रियलक्षणेष्वर्थेषु स्थूलविषयेषु तदा सवितर्कः समाधिः । अन्यथाऽस्मिन्नेवालंबने पूर्वापरानुसंधानशब्दार्थोल्लेखशून्यत्वेन भावनायामपरो निर्वितर्कः ॥ ३ ॥

तन्मात्रान्तःकरणयोः सूक्ष्मयोर्भावना पुनः । त्रिकालधर्मविच्छेदात् सविचारोऽन्यथापरः ॥ ४ ॥

तन्मात्रेति—तन्मात्रान्तःकरणयोः सूक्ष्मयोर्भान्मयोर्दिक्कालधर्मावच्छेदाद्देशकालधर्मावच्छेदेन भावना पुनः सविचारः समाधिः । अन्यथा तस्मिन्नेवालम्बने देशकालधर्मावच्छेदं विना धर्मिमात्रावभासित्वेन भावनायामपरो निर्विचारः ॥ ४ ॥

यदा रजस्तमोलेशानुविद्धं भाव्यते मनः । तदा भाव्यसुखोद्रेकाच्चिच्छक्तेर्गुणभावतः ॥ ५ ॥

यदेति—यदा रजस्तमसोर्लेशेनानुविद्धं मनोऽन्तःकरणतत्त्वं भाव्यते तदा भाव्यस्य भावनाविषयस्य सुखस्य सुखप्रकाशमयस्य सत्त्वस्योद्रेकादाधिक्याच्चिच्छक्तेर्गुणभावतोऽनुद्रेकात् ॥ ५ ॥

सानन्दोऽत्रैव भाव्यन्ते विदेहा बद्धवृत्तयः । देहाहङ्कारविगमात् प्रधानपुमदर्शिनः ॥ ६ ॥

सानन्द इति—सानन्दः समाधिर्जयत्सुखहेतुकः । अत्रैव समाधौ बद्धवृत्तयो विदेहा भाव्यन्ते । देहाहंकारविगमाद्बहिर्विषयापेक्षानिवृत्तेः । प्रधानपुमदर्शिनः प्रधानपुरुषतत्त्वाविज्ञायकाः ॥ ६ ॥

सत्त्वं रजस्तमोलेशानाक्रान्तं यत्र भाव्यते । स सास्मितोऽत्र चिच्छक्तिसत्त्वयोर्मुख्यगौणता ॥ ७ ॥

सत्त्वमिति—यत्र रजस्तमोलेशेनानाक्रान्तं सत्त्वं भाव्यते, स सास्मितः समाधिः । अत्र चिच्छक्तिसत्त्वयोर्मुख्यगौणता । भाव्यस्य शुद्धसत्त्वस्य न्यग्भावाच्चितिशक्तेश्च उद्रेकात् सत्तामात्रावशेषत्वादत्र सास्मितत्वोपपत्तिः । न चाहंकारास्मित-

योरन्भेदः शंकनीयः, यतो यत्रान्तःकरणमहमित्युल्लेखेन विषयं वेदयते सोऽहंकारः, यत्रान्तर्मुखतया प्रतिलोमपरिणामेन प्रकृतिलीने चेतसि सत्तामात्रमेव भाति साऽस्मितेति ॥ ७ ॥

**अत्रैव कृततोषा ये परमात्मानवेदिणः । चित्ते गते ते प्रकृतिलया हि प्रकृतौ लयम् ॥ ८ ॥**

अत्रैवेति–अत्रैव सास्मितसमाधावेव ये कृततोषाः परमात्मानवेदिणः परमपुरुषादर्शिनः, ते हि चित्ते प्रकृतौ लयं गते सति प्रकृतिलया उच्यन्ते ॥ ८ ॥

**गृहीतृग्रहणग्राह्यसमापत्तित्रयं किल । अत्र सास्मितसानन्दनिर्विचारान्तविश्रमम् ॥ ९ ॥**

गृहीत्रिति–सास्मितसमाधिपर्यन्ते परं पुरुषं ज्ञात्वा भावनायां विवेकख्यातौ गृहीतृसमापत्तिः । सानन्दसमाधिपर्यन्ते ग्रहणसमापत्तिः । निर्विचारसमाधिपर्यन्ते च ग्राह्यसमापत्तिर्विश्रान्तेत्येतदर्थः ॥ ९ ॥

**मणेरिवाभिजातस्य क्षीणवृत्तेरसंशयम् । तात्स्थ्यात्तदञ्जनत्वाच्च समापत्तिः प्रकीर्तिता ॥ १० ॥**

मणेरिवेति–मणेरिव स्फटिकादिरत्नस्येवाभिजातस्य जात्यस्य क्षीणवृत्तेः क्षीणमलस्य । असंशयं निश्चितं । तात्स्थ्यात्तत्रैकाग्रत्वात्तदञ्जनत्वाच्च तन्मयत्वात् । न्यग्भूते चित्ते विषयस्य भाव्यमानस्यैकत्वोत्कर्षात् समापत्तिः प्रकीर्तिता । तदुक्तं– " क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनतासमापत्तिः " ( १-४१ ) । यथा हि निर्मलस्फटिकमणेस्तद्रूपाश्रयवशात्तद्रूपतापत्तिरेवं निर्मलचित्तसत्त्वस्य तत्तद्भावनीयवस्तूपरागात्तद्रूपतापत्तिः । यद्यपि ग्रहीतृग्रहणग्राह्येत्युक्तं

तथापि भूमिकाक्रमवशेन व्यत्ययो बोध्यः । यतः प्रथम ग्राह्यनिष्ठः समाधिः, ततो ग्रहणनिष्ठः, ततोऽस्मितोपरागेण गृहीतृनिष्ठः, केवलस्य पुरुषस्य गृहीतुर्ग्राह्यत्वासंभवादिति बोध्यम् ॥ १० ॥

## संकीर्णा सा च शब्दार्थज्ञानैरपि विकल्पतः । सवितर्का परैर्भेदैर्भवतीत्थं चतुर्विधा ॥ ११ ॥

संकीर्णेति—सा च समापत्तिः शब्दार्थज्ञानैर्विकल्पतोऽपि संकीर्णा सवितर्का । यदाह—"(तत्र) शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का (१-४२)" । तत्र श्रोत्रेन्द्रियग्राह्यः स्फोटरूपो वा शब्दः, अर्थो जात्यादिमान्, सत्त्वप्रधाना बुद्धिवृत्तिर्विकल्पः शब्दज्ञानानुपाती वस्तुशून्योऽर्थः, एतैः संकीर्णा यत्रैते शब्दादयः परस्पराध्यासेन प्रतिभासन्ते—' गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानं ' इत्याकारेण । इत्थं परैर्भेदैश्चतुर्विधैव भवति । तथाहि—"स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का" ( १–४३ ) । यदाह—" उक्तलक्षणविपरीता निर्वितर्केति " । यथा च स्थूलभूतादिविषया सवितर्का तथा सूक्ष्मतन्मात्रेन्द्रियादिकमर्थं शब्दार्थविकल्पसहितत्वेन देशकालधर्मावच्छेदेन च गृह्णती सविचारा भण्यते, धर्मिमात्रतया च गृह्णती निर्विचारेति । यत उक्तं—"एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता"(१-४४)। सूक्ष्मविषयत्वं चालिङ्गपर्यवसानं ( १–४५ ) न क्वचिद्लीयते, न वा किंचिल्लिङ्गति गमयतीत्यलिङ्गं प्रधानं तत्पर्यन्तमित्यर्थः। गुणानां हि परिणामे चत्वारि पर्वाणि—विशिष्टलिङ्गमविशिष्टलिङ्गं लिङ्गमात्रमलिङ्गं चेति । विशिष्टलिङ्गं भूतानि, अविशिष्टलिङ्गं तन्मात्रेन्द्रियाणि, लिङ्गमात्रं बुद्धिः, अलिङ्गं च प्रधानमिति । एताश्च समापत्तयः संप्रज्ञातरूपा एव । यदाह—" ता एव सबीजः समाधिरिति " ( १–४६ ) सह बीजेनालम्बनेन वर्तत इति सबीजः संप्रज्ञात इत्यर्थः ॥ ११ ॥

इतरासां समापत्तीनां निर्विचारफलत्वान्निर्विचारायाः फलमाह–

**अध्यात्मं निर्विचारत्ववैशारद्ये प्रसीदति । ऋतंभरा ततः प्रज्ञा श्रुतानुमितितोऽधिका ॥ १२ ॥**

अध्यात्ममिति–निर्विचारत्वस्य चरमसमापत्तिलक्षणस्य वैशारद्ये प्रकृष्टाभ्यासवशेन नैर्मल्येऽध्यात्मं शुद्धसत्त्वं प्रसीदति क्लेशवासनारहितस्थितिप्रवाहयोग्यं भवति । यदुक्तं–" निर्विचारत्ववैशारद्येऽध्यात्मप्रसादः " (१-४७) ततोऽध्यात्मप्रसादात् ऋतंभरा प्रज्ञा भवति । ऋतं सत्यमेव बिभर्ति, न कदाचिदपि विपर्ययेणाच्छाद्यते या सा ऋतंभरा । तदुक्तं–" ऋतंभरा तत्र प्रज्ञा " ( १-४८ ) । सा च श्रुतानुमितित आगमानुमानाभ्यां सामान्यविषयाभ्यां विशेषविषयत्वेनाधिका । यदाह– " श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वादिति " ( १-४९ ) ॥ १२ ॥

**तज्जन्मा तत्त्वसंस्कारः संस्कारान्तरबाधकः । असंप्रज्ञातनामा स्यात् समाधिस्तन्निरोधतः ॥ १३ ॥**

तज्जन्मेति–तत ऋतंभरप्रज्ञाया जन्मोत्पत्तिर्यस्य स तथा । तत्त्वसंस्कारः परमार्थविषयः संस्कारः । संस्कारान्तरस्य स्वेतरस्य व्युत्थानजस्य समाधिजस्य वा संस्कारस्य बाधकस्तन्निष्ठकार्यकरणशक्तिभंगकृदिति यावत् । तदुक्तं–" तज्जः संस्कारः संस्कारप्रतिबन्धी " ( १-५० तज्जः संस्कारोऽन्यसं ) । तस्य निरोधतः सर्वासां चित्तवृत्तीनां स्वकारणे प्रविलयात् । संस्कारमात्रोदितवृत्तिलक्षणोऽसंप्रज्ञातनामा समाधिः स्यात् । तदुक्तं–" तस्यापि निरोधे सर्व ( वृत्ति ) निरोधीनि ( धान्नि ) र्बीजः समाधिरिति " ( १-५१ ) ॥ १३ ॥

विरामप्रत्ययाभ्यासान्नेति नेति निरन्तरात् । ततः संस्कारशेषाच्च कैवल्यमुपतिष्ठते ॥ १४ ॥

विरामेति–विरामो वितर्कादिचिन्तात्यागः स एव प्रत्ययो विरामप्रत्ययस्तस्याभ्यासः पौनःपुन्येन चेतसि निवेशनं तस्मात् नेति नेति निरन्तरादन्तररहितात्संस्कारशेषाच्चोत्पन्नात्ततोऽसंप्रज्ञातसमाधेः । यत उक्तं–" विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्य इति " ( १-१८ योऽन्यः ) । कैवल्यमात्मनः स्वप्रतिष्ठत्वलक्षणमुपतिष्ठत आविर्भवति ॥ १४ ॥

तदेवमुक्तौ परानिमतौ सन्नेदौ सोत्पत्तिक्रमौ च संप्रज्ञातासंप्रज्ञाताख्यौ योगन्नेदौ, अथानयोर्यथासंजमवतारमाह–

संप्रज्ञातोऽवतरति ध्यानन्नेदेऽत्र तत्त्वतः । तात्त्विकी च समापत्तिर्नात्मनो जाव्यतां विना ॥ १५ ॥

संप्रज्ञात इति–अत्र संप्रज्ञातासंप्रज्ञातयोर्योगन्नेदयोर्मध्ये संप्रज्ञातस्तत्त्वतो ध्यानन्नेदेऽवतरति, स्थिराध्यवसानरूपत्वात्, अध्यात्मादिकमारभ्य ध्यानपर्यन्तं यथाप्रकर्षं संप्रज्ञातो विश्राम्यतीत्यर्थः । यदाह योगबिन्दुकृत्–" समाधिरेष एवान्यैः संप्रज्ञातोऽनिधीयते । सम्यक्प्रकर्षरूपेण वृत्त्यर्थज्ञानतस्तथा ॥ १ ॥ इति " । एष चाध्यात्मादियोगः तात्त्विकी निरुपचरिता च समापत्तिरात्मनो जाव्यतां जावनाविषयतां विना न घटते शुद्धस्याजाव्यत्वे विशिष्टस्यापि तत्त्वायोगात् विशेषणसंबन्धं विना वैशिष्ट्यस्यापि दुर्वचत्वाच्चेति । तथा च गृहीतृसमापत्तिर्यादृङ्मात्रमेवेति जावः ॥ १५ ॥

परमात्मसमापत्तिर्जीवात्मनि हि युज्यते । अन्नेदेन तथाध्यानादन्तरात्मस्वशक्तितः ॥ १६ ॥

परमात्मेति–जीवात्मनि हि परमात्मसमापत्तिस्तथापरिणामलक्षणा युज्यते । अन्नेदेन तथा परमात्मत्वेन ध्यानाज्जीवा-

त्मनोऽन्तरंगाया उपादानभूतायाः स्वशक्तितः तथापरिणमना (दा) त्मशक्तेः शक्त्या सत एव व्यक्ता (क्त्या) परिणमनस्य तथा सामग्रीतः संभवादिति भावः ॥ १६ ॥

जीवात्मनि परमात्मनः सत्त्वोपपत्त्यर्थमात्मत्रयं सन्निहितमुपदर्शयति—

**बाह्यात्मा चान्तरात्मा च परमात्मेति च त्रयः । कायाधिष्ठायकध्येयाः प्रसिद्धा योगवाङ्मये ॥ १७ ॥**

बाह्यात्मा चेति—कायः स्वात्मधिया प्रतीयमानोऽहं स्थूलोऽहं कृश इत्याद्युल्लेखेनाधिष्ठायकः कायचेष्टाजनकप्रयत्नवान् ध्येयश्च ध्यानभाव्य एते त्रयो बाह्यात्मा चान्तरात्मा च परमात्मा चेति योगवाङ्मये योगशास्त्रे प्रसिद्धाः । एतेषां च स्वेतरभेदप्रतियोगित्वध्यातृत्वध्येयत्वैर्ध्यानोपयोगस्तात्त्विकातात्त्विकैकत्वपरिणामतश्च सन्निधानमतात्त्विकपरिणामनिवृत्तौ तात्त्विकपरिणामोपलंभश्च समापत्तिरिति ध्येयम् ॥ १७ ॥

**अन्ये मिथ्यात्वसम्यक्त्वकेवलज्ञानभागिनः । मिश्रे च क्षीणमोहे च विश्रान्तास्ते त्वयोगिनि ॥१८॥**

अन्य इति—अन्ये पुनराहुः—मिथ्यात्वसम्यक्त्वकेवलज्ञानभागिनो बाह्यात्मान्तरात्मपरमात्मानः । ते तु मिश्रे च क्षीणमोहे चायोगिनि च गुणस्थाने क्रमेण विश्रान्ताः । तत्र च बाह्यात्मतादशायामन्तरात्मपरमात्मनोः शक्तिस्तदेकद्रव्यत्वात्, अन्तरात्मदशायां च परमात्मनः शक्तिः बाह्यात्मनस्तु भूतपूर्वनयेन योगः, परमात्मतादशायां च बाह्यात्मान्तरात्मनोर्द्वयोरपि भूतपूर्वनयेनैव योग इति वदन्ति । तत्त्वमत्रत्यमध्यात्ममतपरीक्षायां व्यवस्थापितमस्माभिः ॥ १८ ॥

विषयस्य समापत्तिरुत्पत्तिर्भावसंज्ञिनः । आत्मनस्तु समापत्तिर्भावो द्रव्यस्य तात्त्विकः ॥ १९ ॥

विषयस्येति–विषयस्यात्मातिरिक्तस्य भाव्यस्य समापत्तिर्भावसंज्ञिनो भावाभिधानस्योत्पत्तिरुच्यते । वदन्ति हि नयदक्षाः–“ अभ्युपयुक्तो माणवकोऽप्यग्निरेवेति ” । शब्दार्थप्रत्ययानां तुल्याभिधानत्वात्स्वार्थज्ञानयोः कथञ्चिदेकत्वस्यारूढतया वस्त्वपरिणामः सञ्जयति, चेतनत्वाचेतनत्वयोर्विरोधादिति भावः । आत्मनस्तु समापत्तिर्द्रव्यस्य परमात्मद्रव्यस्य तात्त्विकः सहजशुद्धो भावः परिणामः ॥ १९ ॥

अत एव च योऽर्हन्तं स्वद्रव्यगुणपर्ययैः । वेदात्मानं स एव स्वं वेदेत्युक्तं महर्षिभिः ॥ २० ॥

अत एव चेति–यत एव द्रव्यतया परमात्मैव जीवात्मा, अत एव च योऽर्हन्तं तीर्थकरं स्वद्रव्यगुणपर्ययैर्निजशुद्धात्मकैकद्रव्यज्ञानस्वभावपरिणमनलक्षणैर्वेद जानाति, स एव स्वमात्मानं वेद तत्त्वतो जानाति, तथाज्ञानस्य तथाध्यानद्वारा तथासमापत्तिजनकत्वादिति महर्षिभिरुक्तं । यतः पठ्यते–“ जो जाणइ अरहंते दव्वत्तगुणत्तपज्जयत्तेहिं । सो जाणइ अप्पाणं मोहो खलु जाइ तस्स लयं ॥ १ ॥ ” न चैतद्गाथाकर्तुर्दिगम्बरत्वेन महर्षित्वाभिधानं न निरवद्यमिति मूढधिया शङ्कनीयं, सत्यार्थकथनगुणेन व्यासादीनामपि हरिभद्राचार्यैस्तथाभिधानादिति द्रष्टव्यम् ॥ २० ॥

असंप्रज्ञातनामा तु संमतो वृत्तिसंक्षयः । सर्वतोऽस्मादकरणनियमः पापगोचरः ॥ २१ ॥

असंप्रज्ञातेति–असंप्रज्ञातनामा तु समाधिः वृत्तिसंक्षयः संमतः, सयोग्ययोगिकेवलित्वकाले मनोविकल्पपरिस्पन्दरूपवृ-

त्तिक्षयेण तदुपगमात् । तदुक्तं–" असंप्रज्ञात एषोऽपि समाधिर्गीयतेऽपरैः । निरुद्धाशेषवृत्त्यादितत्स्वरूपानुवेधतः ॥१॥ " इति । ' धर्ममेघः ' इत्यप्यस्यैव नाम यावत्तत्त्वभावनेन फलमलिप्सोः सर्वथा विवेकख्यातौ धर्ममशुक्लकृष्णं मेहति सिंचतीति व्युत्पत्तेः । तदुक्तं–" प्रसंख्याने ( प्य ) कुसीदस्य सर्वथा विवेकख्यातौ धर्ममेघसमाधिरिति " ( ४-२९ ) । एवमन्येषामपि तत्तत्तंत्रसिद्धानां शब्दानामर्थोऽत्र यथायोगं भावनीयः । तदाह–" धर्ममेघोऽमृतात्मा च भवशत्रुशिवोदयः । सत्त्वानन्दपरश्चेति योज्योऽत्रैवार्थयोगतः ॥ १ ॥ " अस्माद्वृत्तिसंक्षयात् फलीभूतात् । सर्वतः सर्वैः प्रकारैः । पापगोचरः पापविषयः । अकरणनियमोऽनुमीयते इति शेषः । नरकगमनादिवृत्तिनिर्वृत्तेर्मद्दारंभपरिग्रहादिहेत्वकरणनियमेनैवोपपत्तेः ॥

**ग्रन्थिभेदे यथाऽयं स्याद्बन्धहेतुं परं प्रति । नरकादिगतिष्वेवं ज्ञेयस्तद्धेतुगोचरः ॥ २२ ॥**

ग्रन्थिभेद इति–यथाऽयमकरणनियमो बन्धहेतुं मिथ्यात्वं परमुत्कृष्टं सप्ततिकोटिकोट्यादिस्थितिनिमित्तं प्रत्याश्रित्य ग्रन्थिभेदे निरूप्यते । एवं नरकादिगतिषु निवर्तनीयासु तद्धेतुगोचरो नरकादिहेतुविषयोऽकरणनियमो ज्ञेयः ॥ २२ ॥

**दुःखात्यन्तविमुक्त्यादि नान्यथा स्याच्छ्रुतोदितम् । हेतुः सिद्धश्च भावोऽस्मिन्निति वृत्तिद्वयोचिती ॥**

दुःखेति–अन्यथा दुःखात्यन्तविमुक्त्यादि श्रुतोदितं सिद्धान्तप्रतिपादितं न स्यात् । तदाह–" अन्यथात्यन्तिको मृत्युर्भूयस्तत्रागतिस्तथा । न युज्यते हि सन्न्यायादित्यादि समयोदितम् ॥ १ ॥ " न च तत्त्वज्ञानेनैव दुःखात्यन्तविमुक्त्युपपत्तौ किमकरणनियमेनेति वाच्यं, तस्यात्यन्तिकमिथ्याज्ञाननाशद्वारा हेतुत्वोपगमे तद्धेत्वकरणनियमस्यावश्याश्रय-

णीयत्वादिति भावः । अस्मिंश्चतत्पापस्याकरणनियमे च सिद्धः परापराधनिवृत्तिहेतुतत्त्वज्ञानानुगततया प्रतिष्ठितो भावोऽन्तःकरणपरिणामो हेतुः । तदुक्तं—"हेतुमस्य परं भावं सत्त्वाद्यागोनिवर्तनम् । प्रधानं करुणारूपं ब्रुवते सूक्ष्मदर्शिनः ॥ १ ॥" इति । एवमकरणनियमोपपत्तौ वृत्तिद्वयौचिती वृत्तिद्वयस्य न्याय्यता हेत्वकरणनियमेन फलानुत्पत्तिपर्यायोपपत्तेस्तत्प्रत्यवायापगमस्यापि योग्यताविगमाख्यस्य हेत्वकरणनियमेनैव फलवत्त्वात् तद्विरहितस्य फलनियतत्वात् । तदुक्तं—"मण्डूकभस्मन्यायेन वृत्तिबीज महामुनिः । योग्यतापगमाद्दग्ध्वा ततः कल्याणमश्नुते ॥ १ ॥ इति" ॥ २३ ॥

ननु यद्येक एव योगस्तदा कथं भेदः ? भेदे च प्रकृते किं तदन्तर्भावप्रयासेनेत्यत आह—

योगे जिनोक्तेऽप्येकस्मिन् दृष्टिभेदः प्रवर्तते । क्षयोपशमवैचित्र्यात् समेघामेघदृष्टिवत् ॥ २४ ॥

योग इति—अर्हता सर्वज्ञेन प्रोक्ते तत्त्वत एकस्मिन्नपि योगे क्षयोपशमवैचित्र्यात् दृष्टिभेदो दर्शनविशेषः प्रवर्तते । समेघादौ मेघसहितरात्र्यादावोघदृष्टिवत् सामान्यदर्शने इव । यथा हि एकस्मिन्नपि दृश्ये समेघायां रात्रौ दृष्टिः किञ्चिन्मात्रग्राहिणी, अमेघायां तु मनागधिकतरग्राहिणी । एवं समेघामेघयोर्दिवसयोरप्यस्ति विशेषः । तथा सग्रहाग्रहयोश्चित्तविभ्रमतदभावाभ्यामर्भकानर्भकयोरपि मुग्धत्वविवेकाभ्यामुपहतानुपहतलोचनयोश्च दोषगुणाभ्यां ग्राहकयोरपि । तथा प्रकृतेऽपि योगदृष्टिभेद इति भावनीयं । एतस्मिन्नपनोऽयं दर्शनभेद इति योगाचार्याः । न खल्वयं स्थिरादिदृष्टिमतां भिन्नग्रन्थीनां योगिनां यथाविषयं नयभेदावबोधाप्रवृत्तिरपि अमीषां परार्थं शुद्धबोधभावेन विनिवृत्ताग्रहतया मैत्र्यादिपारतन्त्र्येण गम्भीरोदाराशयत्वाच्चारिचरकसंजीविन्यचरकचारणनीत्येत्याहुः ॥ २४ ॥

सच्छ्रद्धासंगतो बोधो दृष्टिः सा चाष्टधोदिता। मित्रा तारा बला दीप्रा स्थिरा कान्ता प्रभा परा ॥२५॥

सच्छ्रद्धेति–सच्छ्रद्धया शास्त्रबाह्याभिप्रायविकलसद्रूहलक्षणया संगतो बोधो दृष्टिः, तस्या उत्तरोत्तरगुणाधानद्वारा सत्प्रवृत्तिपदावहत्वात्। तदुक्तं–“सच्छ्रद्धासंगतो बोधो दृष्टिरित्यभिधीयते। असत्प्रवृत्तिव्याघातसत्प्रवृत्तिपदावहः ॥ १ ॥” इति। सा चाष्टधोदिता मित्रा तारा बला दीप्रा स्थिरा कान्ता प्रभा परा चेति ॥ २५ ॥

तृणगोमयकाष्ठाग्निकणदीपप्रभोपमा। रत्नतारार्कचन्द्राभा क्रमेणेक्ष्वादिसन्निभा ॥ २६ ॥

तृणेति–मित्रा दृष्टिस्तृणाग्निकणोपमा, न तत्त्वतोऽभीष्टकार्यक्षमा, सम्यक्प्रयोगकालं यावदनवस्थानात्, । अल्पवीर्यतया ततः पटुस्मृतिबीजसंस्काराधानानुपपत्तेः, विकलप्रयोगभावाद्भावतो वन्दनादिकार्यायोगादिति । तारा दृष्टिर्गोमयाग्निकणसदृशी, इयमप्युक्तकल्पैव, तत्त्वतो विशिष्टस्थितिवीर्यविकलत्वात्, अतोऽपि प्रयोगकाले स्मृतिपाटवासिद्धेः तदभावे प्रयोगवैकल्यात्, ततः तथातत्कार्याभावादिति। बला दृष्टिः काष्ठाग्निकणतुल्या, ईषद्विशिष्टोक्तबोधद्वयात्, तद्भावेनात्र मनाक् स्थितिवीर्ये, अतः पटुप्राया स्मृतिः, इह प्रयोगसमये तद्भावे चार्थप्रयोगमात्रप्रीत्या यत्नलेशभावादिति । दीप्रा दृष्टिर्दीपप्रभासदृशी, विशिष्टतरोक्तबोधत्रयात्, अतोऽत्रोदग्रे स्थितिवीर्ये, तत्पट्व्यपि प्रयोगसमये स्मृतिः, एवंभावतोऽप्यत्र द्रव्यप्रयोगो वन्दनादौ, तथाभक्तितो यत्नभेदप्रवृत्तेरिति प्रथमगुणस्थानकप्रकर्ष एतावानिति समयविदः। स्थिरा च भिन्नग्रन्थेरेव सा च रत्नाभा, तदवबोधो हि रत्नाभासमानः, तद्भावोऽप्रतिपाती प्रवर्धमानो निरपायो नापर-

परितापकृत् परितोषहेतुः प्रायेण प्रणिधानादियोनिरिति । कान्ता ताराभा, तदवबोधस्ताराभासमानः, अतः स्थित एव प्रकृत्या निरतिचारमत्रानुष्ठानं शुद्धोपयोगानुसारि विशिष्टाप्रमादसचिवं विनियोगप्रधानं गम्भीरोदाराशयमिति । प्रभाऽर्काभा, तदवबोधस्तरणिभासमानः, सद्ध्यानहेतुरेव सर्वदा, नेह प्रायो विकल्पावसरः, प्रशमसारं सुखमिह, अकिञ्चित्कराण्यत्रान्यशास्त्राणि, समाधिनिष्ठमनुष्ठानं, तत्संनिधौ वैरादिनाशः, परानुग्रहकर्तृता, औचित्ययोगो विनेयेषु, तथाऽवन्ध्या सत्क्रियेति । परा तु दृष्टिश्चन्द्राभा, तदवबोधश्चन्द्रिकाभासमानः, सद्ध्यानरूप एव सर्वदा, विकल्परहितं मनः, तदभावेनोत्तमं सुखं, आरूढारोहणवन्ना(तोऽ)नुष्ठानं प्रतिक्रमणादि, परोपकारित्वं, यथाभव्यमवन्ध्या क्रियेति । तथा क्रमेण मित्राद्यनुक्रमेणेत्यादिसंज्ञिता दृष्टिः, इक्षुरसकक्वगुडकल्पाः खण्डाद्यास्तदाः सम्शर्करामत्स्यण्डवर्णामृतकसमाश्चाऽमिमा इत्याचार्याः । इक्ष्वादिकल्पानामेव रुच्यादिगोचराणां संवेगमाधुर्योपपत्तेः नलादिकल्पानामभव्यानां संवेगमाधुर्यशून्यत्वादिति ॥ २६ ॥

यमादियोगयुक्तानां खेदादिपरिहारतः । अद्वेषादिगुणस्थानां क्रमेणैषा सतां मता ॥ २७ ॥

यमादीति–यमादयो योगाङ्गत्वाद्योगाः । यथोक्तं–" यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि योगस्येति " ( २-२९ ) । तैर्युक्तानां खेदादीनां ध्यानाभिधानस्थले प्रोक्तानां योगप्रत्यनीकाशयलक्षणानां परिहारतोऽद्वेषादयो येऽष्टौ गुणाः । तदुक्तं–" अद्वेषो जिज्ञासा शुश्रूषा श्रवणबोधमीमांसाः । परिशुद्धा प्रतिपत्तिः प्रवृत्तिरष्टाङ्गिकी तत्त्व इति" । तत्स्थानां तत्प्रतिपन्नवृत्तीनां क्रमेणैषा दृष्टिः सतां भगवत्पतञ्जलिभदन्तभास्करादीनां योगिनां मतेष्टा॥२७॥

**आद्याश्चतस्रः सापायपाता मिथ्यादृशामिह । तत्त्वतो निरपायाश्च भिन्नग्रन्थेस्तथोत्तराः ॥ २७ ॥**

आद्या इति–आद्याश्चतस्रो मित्राद्या दृष्टय इह जगति मिथ्यादृशां भवति । सापायपाता दुर्गतिहेतुकर्मबलेन तन्निमित्तभावादपायसहिताः । कर्मवैचित्र्याद्भ्रंशयोगेन सपाताश्च । न तु सपाता एव, तान्यस्तदुत्तरभावादिति । तथोत्तराश्चतस्रः स्थिराद्या दृष्टयो भिन्नग्रन्थेस्तत्त्वतः परमार्थतश्च निरपायाः । श्रेणिकादीनामेतदभावोपात्तकर्मसामर्थ्ये हि तस्यापायस्यापि सद्दृष्टयविघातेन तत्त्वतोऽनपायत्वाद्वज्रतंडुलवत्पाकेन तदाशयस्य कायदुःखभावेऽपि विक्रियानुपपत्तेः । योगाचार्या एवात्र प्रमाणं । तदुक्तं–“ प्रतिपातयुताश्चाद्याश्चतस्रो नोत्तरास्तथा । सापाया अपि चैतास्तत्प्रतिपातेन नेतराः ॥ १ ॥ ” इति ॥ २७ ॥

**प्रयाणभंगाभावेन निशि स्वापसमः पुनः । विघातो दिव्यभवतश्चरणस्योपजायते ॥ २९ ॥**

प्रयाणेति–प्रयाणस्य कन्यकुब्जादावनवरतगमनलक्षणस्य भंगाभावेन निशि रात्रौ स्वापसमः पुनर्विघातः प्रतिबन्धः पुनर्दिव्यभवतः स्वर्गजन्मनः सकाशाच्चरणस्य चारित्रस्योपजायते ॥ २९ ॥

**तादृश्यौदयिके भावे विलीने योगिनां पुनः । जाग्रन्निरन्तरगतिप्राया योगप्रवृत्तयः ॥ ३० ॥**

तादृशीति–तादृशि स्वर्गगतिनिबन्धने सरागचारित्रदशावति (दशाभाविनि) औदयिके भावे प्रशस्तरागादिरूपे विलीने ॥ १२९ ॥
पुनर्योगिनां जाग्रतो या निरन्तरा गतयस्तत्प्राया योगिनां प्रवृत्तयो भवन्ति । अक्षेपेणैव मोक्षपुरप्राप्त्युपपत्तेः तथाविधकर्मरूपश्रमाभावेन तदपनयनार्थस्वापसमस्वभावेनाविलंबादिति भावः ॥ ३० ॥

मिथ्यात्वे मन्दतां प्राप्ते मित्राद्या अपि दृष्टयः । मार्गाभिमुखभावेन कुर्वते मोक्षयोजनम् ॥ ३१ ॥

मिथ्यात्व इति–मिथ्यात्वे मिथ्यात्वमोहनीये कर्मणि मन्दतां प्राप्तेऽपुनर्बन्धकत्वादिभावेन । मित्राद्या अपि दृष्टयश्च-तस्रः । किं पुनः स्थिराद्या इत्यप्यर्थः । मार्गाभिमुखभावेन मार्गसांमुख्येन द्रव्ययोगतया मोक्षयोजनं कुर्वते । चरमावर्त-जातित्वेन समुचितयोग्यतासिद्धेः ॥ ३१ ॥

प्रकृत्या भद्रकः शान्तो विनीतो मृदुरुत्तमः । सूत्रे मिथ्यादृगप्युक्तः परमानन्दभागतः ॥ ३२ ॥

प्रकृत्येति–अत एवेत्यतः सूत्रे जिनप्रवचने प्रकृत्या निसर्गेण । भद्रको निरुपमकल्याणमूर्तिः । शान्तः क्रोधविकार-रहितः । विनीतोऽनुद्धतप्रकृतिः । मृदुर्निर्दम्भः । उत्तमः सन्तोषसुखप्रधानः । मिथ्यादृगपि परमानन्दभाक् निरतिशययो-गसुखभाजनमुक्तः शिवराजर्षिवदिति ॥ ३२ ॥

॥ इति योगावतारद्वात्रिंशिका ॥ २० ॥

# ॥ अथ मित्राद्वात्रिंशिका ॥ २१ ॥

योगावतारद्वात्रिंशिकायां मित्राद्या दृष्टयोऽप्यवतारितास्तत्र मित्रां दृष्टिमत्र सप्रपंचं निरूपयन्नाह–

**मित्रायां दर्शनं मन्दं योगाङ्गं च यमो भवेत् । अखेदो देवकार्यादावन्यत्राद्वेष एव च ॥ १ ॥**

मित्रायामिति–मित्रायां दृष्टौ । दर्शनं मन्दं स्वल्पो बोधः । तृणाग्निकणोद्योतेन सदृशः । योगांगं च यमो भवेदहिंसादिभेदः । अखेदोऽव्याकुलतालक्षणः । देवकार्यादावादिशब्दाद्गुरुकार्यादिपरिग्रहः । तथा तथोपनतेऽस्मिंस्तत्रापरितोषान्न खेदः, अपि तु प्रवृत्तिरेव शिरोगुरुत्वादिदोषभावत्वेऽपि भवाभिनन्दिनो भोगकार्यवत् । अद्वेषश्चामत्सरश्चापरत्र त्वदेवकार्यादौ तथा तत्त्वावेदितया मात्सर्यवीर्यबीजसद्भावेऽपि तद्भावांकुरानुदयात्तथाविधानुष्ठानमधिकृत्यात्र स्थितस्य हि करुणांशबीजस्यैवेषत्स्फुरणमिति ॥ १ ॥

यमस्वरूपं सभेदमभिधत्ते–

**अहिंसासूनृतास्तेयब्रह्माकिञ्चनता यमाः । दिक्कालाद्यनवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ २ ॥**

अहिंसेति–प्राणवियोगप्रयोजनो व्यापारो हिंसा तदभावोऽहिंसा । वाङ्मनसोर्यथार्थत्वं सूनृतं । परस्वापहरणं स्तेयं तदभावोऽस्तेयं । उपस्थसंयमो ब्रह्म । भोगसाधनानामस्वीकारोऽकिंचनता । एते यमाः । तदुक्तं– " अहिंसासत्यास्तेय

ब्रह्मचर्यापरिग्रहा यमा इति" (२-३०)। दिग्देशस्तीर्थादिः, कालश्चतुर्दश्यादिः, आदिना ब्राह्मण्यादिरूपाया जातेर्ग्रहणादिप्रयोजनरूपस्य समयस्य च ग्रहः। ततो दिक्कालादिनाऽनवच्छिन्नाः "तीर्थे कञ्चन न हनिष्यामि, चतुर्दश्यां न हनिष्यामि, ब्राह्मणांश्च हनिष्यामि, देवब्राह्मणाद्यर्थव्यतिरेकेण न कमपि हनिष्यामि" इत्येवंविधावच्छेदव्यतिरेकेण सर्वविषया अहिंसादयो यमाः सार्वभौमाः सर्वासु क्षिप्ताद्यासु चित्तभूमिषु संभवन्तो महाव्रतमित्युच्यते। तदुक्तं—"एते तु जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्" (२-३१)। इति ॥ २ ॥

**बाधनेन वितर्काणां प्रतिपक्षस्य भावनात्। योगसौकर्यतोऽमीषां योगाङ्गत्वमुदाहृतम् ॥ ३ ॥**

बाधनेनेति—वितर्काणां योगपरिपन्थिनां हिंसादीनां प्रतिपक्षस्य भावनात् बाधनेनानुष्ठानोपहतिलक्षणेन योगस्य सौकर्यतः सामग्रीसंपत्तिलक्षणादमीषामहिंसादीनां यमानां योगाङ्गत्वमुदाहृतम्। न तु धारणादीनामिव समाधेः साक्षादुपकारकत्वेन, न चासनादिवदुत्तरोत्तरोपकारकत्वेनैव, किं तु प्रतिबन्धकहिंसाद्यपनायकत्वेनैवेत्यर्थः। तदुक्तं—"वितर्कबाधने प्रतिपक्षभावनमिति" (२-३३) ॥ ३ ॥

**क्रोधाल्लोभाच्च मोहाच्च कृतानुमितकारिताः। मृदुमध्याधिमात्राश्च वितर्काः सप्तविंशतिः ॥ ४ ॥**

क्रोधादिति—क्रोधः कृत्याकृत्यविवेकोन्मूलकः प्रज्वलनात्मकश्चित्तधर्मस्तस्मात्। लोभस्तृष्णालक्षणस्ततश्च। मोहश्च सर्वक्लेशानां मूलमनात्मन्यात्माभिमानलक्षणः। इत्थं च कारणभेदेन त्रैविध्यं दर्शितं भवति। तदुक्तं—"लोभक्रोधमोह-

मूल" इति । (२-३४ पूर्वकाः) व्यत्ययाभिधानेऽप्यत्र मोहस्य प्राधान्यं, स्वपरविभागपूर्वकयोर्लोभक्रोधयोस्तन्मूलत्वादिति वदन्ति । ततः कारणत्रयात् कृतानुमितकारिता एतेऽहिंसादयो नवधा भिद्यन्ते । तेऽपि मृदवो मन्दाः, मध्यांश्चातीव्रमन्दाः, अधिमात्राश्च तीव्रा इति प्रत्येकं त्रिधा भिद्यन्ते । तदुक्तं–"मृदुमध्याधिमात्राः" इति (२–३४ वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्)। एवं च सप्तविंशतिर्वितर्का भवन्ति । अत्र मृद्वादीनामपि प्रत्येकं मृदुमध्याधिमात्राभेदो भावनीय इति वदन्ति ॥ ४ ॥

**दुःखाज्ञानानन्तफला अमी इति विभावनात् । प्रकर्षं गच्छतामेतद्यमानां फलमुच्यते ॥ ५ ॥**

दुःखेति–दुःखं प्रतिकूलतयाऽवभासमानो राजसश्चित्तधर्मः, अज्ञानं मिथ्याज्ञानं संशयविपर्ययादिरूपं, ते अनन्ते अपरिछिन्ने फलं येषां ते तथोक्ताः । अमी वितर्का इति विभावनान्निरन्तरं ध्यानात् प्रकर्षं गच्छतां यमानामेतद्वक्ष्यमाणं फलमुच्यते ॥ ५ ॥

**वैरत्यागोऽन्तिके तस्य फलं चाकृतकर्मणः । रत्नोपस्थानसद्वीर्यलाभो जनुरनुस्मृतिः ॥ ६ ॥**

वैरेति–तस्याहिंसाभ्यासवतोऽन्तिके सन्निधौ वैरत्यागः सहजविरोधिनामप्यहिनकुलादीनां हिंस्रत्वपरित्यागः । तदुक्तं–(अहिंसाप्रतिष्ठायां) "तत्सन्निधौ वैरत्यागः" (२-३५) । सत्याभ्यासवतश्चाकृतकर्मणोऽविहितानुष्ठानस्यापि फलं तदर्थोपनतिलक्षणक्रियमाणा हि क्रिया यागादिकाः फलं स्वर्गादिकं प्रयच्छन्ति । अस्य तु सत्यं तथा प्रकृष्यते, यथाऽकृ-

तायामपि क्रियाया योगी फलमाश्रयते, तद्वचनाच्च यस्य कस्यचित् क्रियामकुर्वतोऽपि फलं भवतीति। तदाह–"(सत्यप्रतिष्ठायां) क्रियाफलाश्रयत्वं" २-३६। अस्तेयाभ्यासवतश्च रत्नोपस्थानं तत्प्रकर्षान्निरभिलाषस्यापि सर्वतोदिक्कानि रत्नान्युपतिष्ठन्त इत्यर्थः। ब्रह्मचर्याभ्यासवतश्च सतो निरतिशयस्य वीर्यस्य लाभः, वीर्यनिरोधो हि ब्रह्मचर्यं, तस्य प्रकर्षाच्च वीर्यं शरीरेन्द्रियमनःसु प्रकर्षमागच्छतीति। अपरिग्रहाभ्यासवतश्च जन्मन उपस्थितिः "कोऽहमासं? कीदृशः? किंकार्यकारी" इति जिज्ञासायां सम्यग्ज्ञानाभीत्यर्थः। न केवल भोगसाधनपरिग्रह एव परिग्रहः, किं त्वात्मनः शरीरपरिग्रहोऽपि, तथाभोगसाधनत्वाच्छरीरस्य, तस्मिन् सति रागानुबन्धाद्बहिर्मुखायामेव प्रवृत्तौ न तात्त्विकज्ञानप्रादुर्भावः। यदा पुनः शरीरादिपरिग्रहनैरपेक्ष्येण माध्यस्थ्यमवलम्बते तदा मध्यस्थस्य रागादित्यागात् सम्यग्ज्ञानहेतुर्भवत्येव पूर्वापरजन्मसंबोध इति तदाह–(अपरिग्रहस्थैर्ये)जन्मकथंतासंबोधः" इति (२-३९) ॥ ६ ॥

इत्थं यमप्रधानत्वमवगम्य स्वतंत्रत.। योगबीजमुपादत्ते श्रुतमत्र श्रुतादपि ॥ ७ ॥

इत्थमिति–इत्थमुक्तप्रकारेण स्वतन्त्रतः स्वाभिमतपातञ्जलादिशास्त्रतो यमप्रधानत्वमवगम्य। अत्र मित्रायां दृष्टौ निवृत्तासद्ग्रहतया सद्गुरुयोगे श्रुताज्जिनप्रवचनात् श्रुतमपि योगबीजमुपादत्ते तथास्वाभाव्यात् ॥ ७ ॥

तत्र्योगबीजमेवाह–

जिनेषु कुशलं चित्त तन्नमस्कार एव च। प्रणामादि च संशुद्धं योगबीजमनुत्तमम् ॥ ८ ॥

जिनेष्विति–जिनेष्वर्हत्सु कुशलं द्वेषाद्यभावेन प्रीत्यादिमच्चित्तं, अनेन मनोयोगवृत्तिमाह । तन्नमस्कार एव जिननमस्कार एव च, तथामनोयोगप्रेरितः, इत्यनेन वाग्योगवृत्तिं(आह) । प्रणामादि च पंचांगादिलक्षणं, आदिशब्दान्मंडलादिग्रहः । संशुद्धमशुद्धव्यवच्छेदार्थमेतत् तस्य सामान्येन यथाप्रवृत्तकरणभेदत्वात्तस्य च योगबीजत्वानुपपत्तेरेतत्सर्वं सामस्त्यप्रत्येकभावाभ्यां योगबीजं मोक्षयोजकानुष्ठानकारणमनुत्तमं सर्वप्रधानं विषयप्राधान्यात् ॥ ८ ॥

**चरमे पुद्गलावर्ते तथाभव्यत्वपाकतः । प्रतिबन्धोज्झितं शुद्धमुपादेयधिया ह्यदः ॥ ९ ॥**

चरम इति–अदो हि एतच्च चरमेऽन्त्ये पुद्गलावर्ते भवति । तथाभव्यत्वस्य पाकतो मिथ्यात्वकटुकत्वनिवृत्त्या मनाग्माधुर्यसिद्धेः । प्रतिबन्धेनासंगेनोज्झितं आहारादिसंज्ञोदयाभावात् फलाभिसन्धिरहितत्वाच्च । तदुपात्तस्य तु स्वतः प्रतिबन्धसारत्वात् । अत एवोपादेयधियाऽन्यापोहेनादरणीयत्वबुद्ध्या शुद्धं । तदुक्तं–"उपादेयधियात्यन्तं संज्ञाविष्कंभणान्वितम् । फलाभिसन्धिरहितं संशुद्धं ह्येतदीदृशम् ॥ १ ॥" ॥ ९ ॥

**प्रतिबन्धैकनिष्ठं तु स्वतः सुन्दरमप्यदः । तत्स्थानस्थितिकार्येव वीरे गौतमरागवत् ॥ १० ॥**

प्रतिबन्धेति–प्रतिबन्धे स्वासंगे एका केवला निष्ठा यस्य तत्तथा । अदो जिनविषयकुशलचित्तादि तत्स्थानस्थितिकार्येव तथास्वभावत्वात् । वीरे वर्धमानस्वामिनि गौतमरागवत् गौतमीयबहुमानवत् । असंगसक्त्यैव ह्यनुष्ठानमुत्तरोत्तरपरिणामप्रवाहजननेन मोक्षफलपर्यवसानं भवति इति विवेचितं प्राक् ॥ १० ॥

सरागस्याप्रमत्तस्य वीतरागदशानिभम्। अभिन्दतोऽप्यदो ग्रन्थिं योगाचार्यैर्यथोदितम्॥ ११॥

सरागस्येति—अदः शुद्धयोगबीजोपादानं ग्रन्थिमभिन्दतोऽपि जीवस्य चरमयथाप्रवृत्तकरणसामर्थ्येन तथाविधक्षयोपशमातिशायितानन्दानुभवात्। सरागस्याप्रमत्तस्य सतो यतेर्वीतरागदशानिभं सरागस्य वीतरागत्वप्रासादिव योगबीजोपादानवेलायामपूर्वः कोऽपि स्वानुभवसिद्धोऽतिशयश्चात्र इति भावः। यथोदितं योगाचार्यैः॥ ११॥

ईषदुन्मज्जनाभोगो योगचित्तं भवोदधौ। तच्छक्त्यतिशयोच्छेदि दंभोलिर्ग्रन्थिपर्वते॥ १२॥

ईषदिति—योगचित्तं योगबीजोपादानमभिमानचित्तं। भवोदधौ संसारसमुद्रे। ईषन्मनागुन्मज्जनस्याभोगः। तच्छक्तेर्भवशक्तेरतिशयस्योत्कर्षस्योच्छेदि नाशकं। ग्रन्थिरूपे पर्वते दंभोलिर्वज्रं नियमाद्भेदकारित्वात्। इत्थं चैतत्फलप्रापकारम्भसरसास्वादस्येति समयविदः॥ १२॥

आचार्यादिष्वपि ह्येतद्विशुद्धं भावयोगिषु। न चान्येष्वप्यसारत्वात्कूटेऽकूटधियोऽपि हि॥ १३॥

आचार्यादिष्वपीति—आचार्यादिष्वपि आचार्योपाध्यायतपस्व्यादिष्वपि। एतत् कुशलचित्तादि। विशुद्धं संशुद्धमेव। भावयोगिषु सात्त्विकगुणशालिषु योगबीजं। न चान्येष्वपि द्रव्याचार्यादिष्वपि। कूटेऽकूटधियोऽपि हि। असारत्वादसुन्दरत्वात्। तस्याः सद्योगबीजत्वानुपपत्तेः॥ १३॥

श्लाघनाद्यसदाशंसापरिहारपुरःसरम्। वैयावृत्त्यं च विधिना तेष्वाशयविशेषतः॥ १४॥

श्लाघनेति—श्लाघनादेः स्वकीर्त्यादेर्योऽसत्यसुन्दराशंसा प्रार्थना तत्परिहारपुरस्सरं । वैयावृत्त्यं च व्यापृतभावलक्षणमाहारादिदानेन । विधिना सूत्रोक्तन्यायेन । तेषु भावयोगिष्वाचार्येषु । आशयविशेषतश्चित्तोत्साहातिशयात् । योगबीजम् १४

**भवादुद्विग्नता शुद्धौषधदानाद्यभिग्रहः । तथा सिद्धान्तमाश्रित्य विधिना लेखनादि च ॥ १५ ॥**

भवादिति—भवात्संसारात् उद्विग्नता इष्टवियोगाद्यनिमित्तकसहजत्यागेच्छालक्षणा । शुद्धो निर्दोष औषधदानादेरभिग्रहो भावाभिग्रहस्य विशिष्टक्षयोपशमलक्षणस्य भिन्नग्रन्थेरेव भावेऽपि द्रव्याभिग्रहस्य स्वाश्रयशुद्धस्यान्यस्यापि संभवात् । तथा सिद्धान्तमार्षं वचनमाश्रित्य, न तु कामादिशास्त्राणि । विधिना न्यायात्तधनसत्प्रयोगादिलक्षणेन लेखनादिकं च योगबीजम् ॥ १५ ॥

लेखनादिकमेवाह—

**लेखना पूजना दानं श्रवणं वाचनोद्ग्रहः । प्रकाशनाथ स्वाध्यायश्चिन्तना भावनेति च ॥ १६ ॥**

लेखनेति—लेखना सत्पुस्तकेषु । पूजना पुष्पवस्त्रादिभिः । दानं पुस्तकादेः । श्रवणं व्याख्यानस्य । वाचना स्वयमेवास्य । उद्ग्रहो विधिग्रहणमस्यैव । प्रकाशना गृहीतस्य भव्येषु । अथ स्वाध्यायो वाचनादिरस्यैव । चिन्तना ग्रन्थार्थतोऽस्यैव । भावनेति चैतद्गोचरैव । योगबीजम् ॥ १६ ॥

**बीजश्रुतौ परा श्रद्धान्तर्विश्रोतसिकाव्ययात् । तदुपादेयभावश्च फलौत्सुक्यं विनाधिकः ॥ १७ ॥**

बीजेति—बीजश्रुतौ योगबीजश्रवणे । परा उत्कृष्टा श्रद्धा 'इदमित्थमेव' इति प्रतिपत्तिरूपा । अन्तर्विस्रोतसिकायाश्चि-त्ताशङ्काया व्ययात् । तस्या बीजश्रुतेरुपादेयत्वाभावादरपरिणामश्च । फलौत्सुक्यं अभ्युदयाशंसात्वरालक्षणं विनाऽधिकोऽतिशयितो योगबीजम् ॥ १७ ॥

निमित्तं सत्प्रणामादेर्भद्रमूर्तेरमुष्य च । शुभो निमित्तसंयोगोऽवञ्चकोदयतो मतः ॥ १८ ॥

निमित्तमिति—अमुष्य चानन्तरोदितलक्षणयोगिनो जीवस्य । भद्रमूर्तेः प्रियदर्शनस्य । सत्प्रणामादेर्योगबीजस्य निमित्तं शुभः प्रशस्तः । निमित्तसंयोगः सद्योगादिसंबन्धः । सद्योगादीनामेव निःश्रेयससाधननिमित्तत्वाज्ञायते । अवञ्चकोदयाद्-क्ष्यमाणसमाधिविशेषोदयात् ॥ १८ ॥

योगक्रियाफलाख्यं च साधुभ्योऽवञ्चकत्रयम् । श्रुतः समाधिरव्यक्त इषुलक्ष्यक्रियोपमः ॥ १९ ॥

योगेति—साधुभ्यः साधूनाश्रित्य । योगक्रियाफलाख्यं अवञ्चकत्रयं योगावञ्चकक्रियावञ्चकफलावञ्चकलक्षणं । अव्यक्तः समाधिः श्रुतः, तदधिकारे पाठात् । इषुलक्ष्यक्रियोपमः शरशरव्यक्रियासदृशः । यथा शरस्य शरव्यक्रिया तदविसंवादि-न्येव, अन्यथा तत्क्रियात्वायोगात्, तथा सद्योगावञ्चकादिकमपि सद्योगाद्यविसंवाद्येवेति भावः ॥ १९ ॥

हेतुरत्रान्तरङ्गश्च तथा भावमलाल्पता । ज्योत्स्नादाविव रत्नादिमलापगम उच्यते ॥ २० ॥

हेतुरिति—अत्र सत्प्रणामादौ । अन्तरंगश्च हेतुः तथा भावमलस्य कर्मसंबन्धयोग्यतालक्षणस्याल्पता । ज्योत्स्नादाविव र-

लकान्त्यादाविव रत्नादिमलापगम उच्यते । तत्र मृत्पुटपाकादीनामिवात्र सद्योगादीनां निमित्तत्वेनैवोपयोगादिति भावः॥२०

**सत्सु सत्त्वधियं हन्त मले तीव्रे लभेत कः । अङ्गुल्या न स्पृशेत् पङ्गुः शाखां सुमहतस्तरोः ॥ २१ ॥**

सत्स्विति—सत्सु साधुषु सत्त्वधियं साधुत्वबुद्धिं हन्त तीव्रे प्रबले मले कर्मबन्धयोग्यतालक्षणे सति को लभेत ? ततो लाभशक्तेरयोगान्न कोऽपीत्यर्थः । अङ्गुल्या पंगुः सुमहतस्तरोः शाखां न स्पृशेत्, तत्प्राप्तिनिमित्तस्योच्चत्वस्यारोहशक्तेर्वाऽभावात्, तद्वत्प्रकृतेऽपि भावनीयम् ॥ २१ ॥

**वीक्ष्यते स्वल्परोगस्य चेष्टा चेष्टार्थसिद्धये । स्वल्पकर्ममलस्यापि तथा प्रकृतकर्मणि ॥ २२ ॥**

वीक्ष्यत इति—स्वल्परोगस्य मन्दव्याधेश्चेष्टा राजसेवादिप्रवृत्तिलक्षणा चेष्टार्थस्य कुटुंबपालनादिलक्षणस्य सिद्धये निष्पत्तये वीक्ष्यते । न तु तीव्ररोगस्येव प्रत्यपायाय । स्वल्पकर्ममलस्यापि पुंसस्तथा प्रकृतकर्मणि योगबीजोपादानलक्षणे । ईदृशस्यैव स्वप्रतिपन्ननिर्वाहक्षमत्वात् ॥ २२ ॥

**यथाप्रवृत्तकरणे चरमे चेदृशी स्थितिः । तत्त्वतोऽपूर्वमेवेदमपूर्वासत्तितो विदुः ॥ २३ ॥**

यथेति—यथाप्रवृत्तकरणे चरमे पर्यन्तवर्तिनि च । ईदृशी योगबीजोपादाननिमित्ताऽल्पकर्मत्वनियामिका । स्थितिः स्वभावव्यवस्था । अपूर्वस्यापूर्वकरणस्यासत्तितः सन्निधानात्फलव्यभिचारायोगात् । इदं चरमं यथाप्रवृत्तिकरणं । तत्त्वतः

परमार्थतः । अपूर्वमेव विदुर्जानते योगविदः । यत उक्तं—"अपूर्वासन्नजावेन व्यभिचारवियोगतः । तत्त्वतोऽपूर्वमेवेद-मिति योगविदो विदुः ॥ १ ॥" ॥ २३ ॥

**प्रवर्तते गुणस्थानपदं मिथ्यादृशीह यत् । अन्वर्थयोजना नूनमस्यां तस्योपपद्यते ॥ २४ ॥**

प्रवर्तत इति—यदिह जिनप्रवचने गुणस्थानपदं मिथ्यादृशि मिथ्यादृष्टौ पुंसि प्रवर्ततेऽस्खलद्वृत्तियोगविषयीभवति । तस्य गुणस्थानपदस्य । नूनं निश्चितं । अस्यां मित्रायां दृष्टौ । अन्वर्थयोजना योगार्थघटना । उपपद्यते । सत्प्रणामादि योगबीजोपादानगुणजातजनत्वस्यास्यामेवोपपत्तेः । तदुक्तं हरिभद्रसूरिभिः—"प्रथमं यद्गुणस्थानं सामान्येनोपवर्णितम् । अस्यां तु तदवस्थायां मुख्यमन्वर्थयोगतः ॥ १ ॥" इति ॥ २४ ॥

**व्यक्तमिथ्यात्वधीप्राप्तिरप्यन्यत्रेयमुच्यते । घने मले विशेषस्तु व्यक्ताव्यक्तधियोर्नु कः ॥ २५ ॥**

व्यक्तेति—अन्यत्र ग्रन्थान्तरे व्यक्तमिथ्यात्वधीप्राप्तिः मिथ्यात्वगुणस्थानपदप्रवृत्तिनिमित्तत्वेन । इयं मित्रा दृष्टिरियो-च्यते । व्यक्तत्वेन तत्रास्या एव ग्रहणात् । घने तीव्रे मले तु सति । नु इति वितर्के । व्यक्ताव्यक्तयोर्धियोः को विशेषः ? दुष्टाया धियो व्यक्ताया अव्यक्तापेक्षया प्रत्युतातिदुष्टत्वाच्च कथञ्चिद्गुणस्थानत्वनिबन्धनत्वमिति भावः । विचित्रतया निगमस्य बहुभेदत्वात् तद्भेदविशेषाश्रयणेन चाऽन्यत्र तथाभिधानमिति परिभावनीयं सूरिभिः ॥ २५ ॥

यमः सद्योगमूलस्तु रुचिवृद्धिनिबन्धनम् । शुक्लपक्षद्वितीयाया योगश्चन्द्रमसो यथा ॥ २६ ॥
उत्कर्षादपकर्षाच्च शुद्ध्यशुद्ध्योरयं गुणः । मित्रायामपुनर्बन्धात् कर्मणां स प्रवर्तते ॥ २७ ॥
गुणाल्लासस्त्वकल्याणमित्रयोगे न कश्चन । अनिवृत्ताग्रहत्वेनान्यन्तरज्वरसन्निभः ॥ २८ ॥
मुग्धः सद्योगतो धत्ते गुणं दोषं विपर्ययात् । स्फटिको नु विधत्ते हि शोणश्यामसुमत्विषम् ॥ २९ ॥
यथौषधीषु पीयूषं द्रुमेषु स्वर्द्रुमो यथा । गुणेष्वपि सतां योगस्तथा मुख्य इहेष्यते ॥ ३० ॥
विनैनं मतिमूढानां येषां योगोत्तमस्पृहा । तेषां हन्त विना नावमुत्तितीर्षा महोदधेः ॥ ३१ ॥
तन्मित्रायां स्थितो दृष्टौ सद्योगेन गरीयसा । समारुह्य गुणस्थानं परमानन्दमश्नुते ॥ ३२ ॥

॥ शिष्टा सप्तश्लोकी सुगमा ॥ २६-२७-२८-२९-३०-३१-३२ ॥

॥ इति मित्राद्वात्रिंशिका ॥ २१ ॥

## ॥ अथ तारादित्रयद्वात्रिंशिका ॥ २२ ॥

मित्रानिरूपणानन्तरं तारादित्रयं निरूपयन्नाह—

तारायां तु मनाक् स्पष्टं दर्शनं नियमाः शुभाः । अनुद्वेगो हितारंभे जिज्ञासा तत्त्वगोचरा ॥ १ ॥

तारायामिति—तारायां पुनर्दृष्टौ । मनागीषत् स्पष्टं मित्रापेक्षया दर्शनं । शुभाः प्रशस्ताः । नियमा वक्ष्यमाणा शौचादिरूपाः । तथा हितारम्भे पारलौकिकप्रशस्तानुष्ठानप्रवृत्तिलक्षणेऽनुद्वेगः । तथा तत्त्वगोचरा तत्त्वविषया जिज्ञासा ज्ञातुमिच्छा । अद्वेषत एव तत्प्रतिपत्त्यानुगुण्यात् ॥ १ ॥

नियमाः शौचसन्तोषौ स्वाध्यायतपसी अपि । देवताप्रणिधानं च योगाचार्यैरुदाहृताः ॥ २ ॥

नियमा इति—शौचं शुचित्वं, तद्द्विविधं, बाह्यमाभ्यन्तरं च, बाह्यं मृज्जलादिभिः कायप्रक्षालनं, आभ्यन्तरं मैत्र्यादिभिश्चित्तमलप्रक्षालनं । सन्तोषः सन्तुष्टिः । स्वाध्यायः प्रणवपूर्वाणां मंत्राणां जपः । तपः कृच्छ्रचान्द्रायणादि । देवताप्रणिधानमीश्वरप्रणिधानं सर्वक्रियाणां फलनिरपेक्षतया ईश्वरसमर्पणलक्षणं । एते योगाचार्यैः पतञ्जल्यादिभिर्नियमा उदाहृताः । यदुक्तं—शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः” इति ( २-३२ ) ॥ २ ॥

शौचभावनया स्वांगजुगुप्साऽन्यैरसंगमः । सत्त्वशुद्धिः सौमनस्यैकाग्र्याक्षजययोग्यता ॥ ३ ॥

शौचेति–शौचस्य भावनया स्वांगस्य स्वकायस्य कारणरूपपर्यालोचनद्वारेण जुगुप्सा घृणा भवति "अशुचिरयं कायो नात्राग्रहः कर्तव्यः" इति । तथा चान्यैः कायवद्भिरसंगमस्तत्संपर्कपरिवर्जनमित्यर्थः । यः किल स्वयमेव कायं जुगुप्सते तत्तदवद्यदर्शनात्, स कथं परकीयैस्तथाभूतैः कायैः संसर्गमनुभवति? । तदुक्तं–"शौचात्स्वांगे जुगुप्सा परैरसंसर्गः"(२-४०)। तथा सुसत्त्वस्य प्रकाशसुखात्मकस्य शुद्धी रजस्तमोभ्यामनभिभवः । सौमनस्यं खेदाननुभवेन मानसी प्रीतिरैकाग्र्यं नियते विषये चेतसः स्थैर्यं, अक्षाणामिन्द्रियाणां जयो विषयपराङ्मुखानां स्वात्मन्यवस्थानं योग्यता चात्मदर्शने विवेकख्यातिरूपे समर्थत्वं । एतावन्ति फलानि शौचभावनयैव भवन्ति । तदुक्तं–"सुसत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि चेति" ( २-४१ ) ॥ ३ ॥

**सन्तोषादुत्तमं सौख्यं स्वाध्यायादिष्टदर्शनम् । तपसोऽङ्गाक्षयोः सिद्धिः समाधिः प्रणिधानतः ॥ ४ ॥**

सन्तोषादिति–सन्तोषात् स्वभ्यस्तात् योगिन उत्तममतिशयितं सौख्यं भवति, यस्य बाह्येन्द्रियप्रभवं सुखं शतांशेनापि न समं । तदाह–"सन्तोषादनुत्तमः सुखलाभः"(२-४२) । स्वाध्यायात् स्वभ्यस्तादिष्टदर्शनं जप्यमानमंत्राभिप्रेतदेवतादर्शनं भवति । तदाह–"स्वाध्यायादिष्टदेवतासंप्रयोगः"(२-४४) । तपसः स्वभ्यस्तात् क्लेशाद्यशुचिक्षयद्वाराङ्गाक्षयोः कायेन्द्रिययोः सिद्धिः, यथेत्थमणुत्वमहत्त्वादिप्राप्तिसूक्ष्मव्यवहितविप्रकृष्टदर्शनसामर्थ्यलक्षणोत्कर्षः स्यात् । यथोक्तं–"कायेन्द्रियसिद्धिरशुचिक्षयात्तपसः"(२-४३) । प्रणिधानत ईश्वरप्रणिधानात् समाधिः स्यात्, ईश्वरभक्त्या प्रसन्नो हीश्वरोऽन्तरायरूपान् क्लेशान् परिहृत्य समाधिमुद्बोधयतीति । यथोक्तं–"समाधिसिद्धिरीश्वरप्रणिधानादिति" (२-४५)। तपःस्वाध्याये-

श्वरप्रणिधानानां त्रयाणामपि च योजनाध्यवसायरूपत्वेन क्लेशकार्यप्रतिबन्धद्वारा समाध्यनुकूलत्वमेव श्रूयते। यथोक्तं—"तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः (२-१) समाधिभावनार्थः क्लेशतनूकरणार्थश्चेति" (२-२) ॥ ४ ॥

विज्ञाय नियमानेतानेवं योगोपकारिणः। अत्रैतेषु रतो दृष्टौ भवेदिच्छादिकेषु हि ॥ ५ ॥

विज्ञायेति—एतान् शौचादीन्नियमान् एवं स्वाङ्गजुगुप्सादि साधकत्वेन योगोपकारिणः समाधिनिमित्तान् विज्ञाय। अत्र तारायां दृष्टावेतेषु इच्छादिकेषु हि नियमेषु रतो भवेत्। तथाज्ञानस्य तथारुचिहेतुत्वात्। तदत्र काचित्प्रतिपत्तिः प्रदर्शिता ॥ ५ ॥

भवत्यस्यामविच्छिन्ना प्रीतिर्योगकथासु च। यथाशक्त्युपचारश्च बहुमानश्च योगिषु ॥ ६ ॥

भवतीति—अस्यां दृष्टावविच्छिन्ना भावप्रतिबन्धसारतया विच्छेदरहिता योगकथासु प्रीतिर्भवति। योगिषु भावयोगिषु यथाशक्ति स्वशक्त्यौचित्येनोपचारश्च ग्रासादिसंपादनेन, बहुमानश्च अभ्युत्थानगुणगानादिना। अयं च शुश्रूषापातपुण्यविपाकाद्योगवृद्धिलाभान्तरशिष्टसंमतत्वक्षुद्रोपद्रवहान्यादिफल इति ध्येयम् ॥ ६ ॥

भयं न भवजं तीव्रं हीयते नोचितक्रिया। न चानाभोगतोऽपि स्यादत्यन्तानुचितक्रिया ॥ ७ ॥

भयमिति—भवजं संसारोत्पन्नं तीव्रं भयं न भवति, तथाऽशुभाऽप्रवृत्तेः। उचिता क्रिया क्वचिदपि कार्ये न हीयते, सर्वत्रैव धर्मादरात्। न चानाभोगतोऽप्यज्ञानादप्यत्यन्तानुचितक्रिया साधुजननिन्दादिका स्यात् ॥ ७ ॥

**स्वकृत्ये विकले त्रासो जिज्ञासा सस्पृहाधिके । दुःखोच्छेदार्थिनां चित्रे कथंताधीः परिश्रमे ॥ ८ ॥**

स्वकृत्य इति–स्वकृत्ये स्वाचारे कायोत्सर्गकरणादौ । विकले विधिहीने । त्रासो 'हा विराधकोऽह'मित्याशयलक्षणः अधिके स्वभूमिकापेक्षयोत्कृष्टे आचार्यादिकृत्ये जिज्ञासा 'कथमेतदेवं स्यादिति' सस्पृहाऽभिलाषसहिता । दुःखोच्छेदार्थिनां संसारक्लेशजिहासूनां । चित्रे नानाविधे । परिश्रमे तत्तन्नीतिप्रसिद्धक्रियायोगे । कथंताधीः कथंभावबुद्धिः । कथं नानाविधा मुमुक्षुप्रवृत्तिः कार्त्स्न्येन ज्ञातुं शक्यत इति । तदाह–"दुःखरूपो भवः सर्व उच्छेदोऽस्य कुतः कथम् । चित्रा सतां प्रवृत्तिश्च साऽशेषा ज्ञायते कथम् ॥ १ ॥" ॥ ८ ॥

**नास्माकं महती प्रज्ञा सुमहान् शास्त्रविस्तरः । शिष्टाः प्रमाणमिह तदित्यस्यां मन्यते सदा ॥ ९ ॥**

नेति–नास्माकं महती प्रज्ञाऽविसंवादिनी बुद्धिः,स्वप्रज्ञाकल्पिते विसंवाददर्शनात् । तथा सुमहानपारः शास्त्रस्य विस्तरः तत्तस्मात् शिष्टाः साधुजनसंमताः प्रमाणमिह प्रस्तुतव्यतिकरे, यत्तैराचरितं तदेव यथाशक्ति सामान्येन कर्तुं युज्यत इत्यर्थः । इत्येतदस्यां दृष्टौ मन्यते सदा निरन्तरम् ॥ ९ ॥

**सुखस्थिरासनोपेतं बलायां दर्शनं दृढम् । परा च तत्त्वशुश्रूषा न क्षेपो योगगोचरः ॥ १० ॥**

सुखमिति–सुखमनुद्वेजनीयं स्थिरं च निष्कंपं यदासनं तेनोपेतं सहितं, उक्तविशेषणविशिष्टस्यैवासनस्य योगाङ्गत्वात् । यत्पतञ्जलिः–"(तत्र) स्थिरसुखमासनमिति (२-४६")। बलायां दृष्टौ दर्शनं दृढं काष्ठाग्निकणोद्योतसममिति कृत्वा । परा प्रकृष्टा च तत्त्वशुश्रूषा तत्त्वश्रवणेच्छा जिज्ञासासंभवात् । न क्षेपो योगगोचरस्तदनुद्वेगे उद्वेगजन्यक्षेपाभावात् ॥ १० ॥

असत्तृष्णात्वराभावात् स्थिरं च सुखमासनम् । प्रयत्नश्लथतानन्त्यसमापत्तिवशादिह ॥ ११ ॥

असदिति—असत्तृष्णाया असुन्दरलालसायास्त्वरायाश्चान्यान्यफलौत्सुक्यलक्षणाया अभावात् स्थिरं सुखं चासनं भवति । प्रयत्नस्य श्लथताऽक्लेशेनैवासनं बध्नामीतीच्छायामङ्गलाघवेन तद्विघ्नघः, आनन्त्ये चाकाशादिगते समापत्तिरवधानेन मनस्तादात्म्यापादनं दुःखहेतुदेहाहंकाराभावफलं तद्वशादिह यथायां दृष्टौ भवति । यथोक्तं—"प्रयत्नशैथिल्यानन्त्य(न्त)समापत्तिभ्यां" (२-४७) ॥ ११ ॥

अतोऽन्तरायविजयो द्वन्द्वानभिहतिस्तथा (ऽपरा) । दृष्टदोषपरित्यागः प्रणिधानपुरःसरः ॥ १२ ॥

अत इति—अतो यथोक्तादासनादन्तरायाणामंगमेजयादीनां विजयः । द्वन्द्वैः शीतोष्णादिभिरनभिहतिर्द्धोऽप्राप्तिः परा आत्यन्तिकी 'ततो द्वन्द्वानभिघात' (२-४८) इत्युक्तेः । दृष्टानां च दोषाणां मनःस्थितिजनितक्लेशादीनां परित्यागः प्रणिधानपुरस्सरः प्रशस्तावधानपूर्वः ॥ १२ ॥

कान्तायुतो विदग्धस्य दिव्यगेयश्रुतौ यथा । यूनो भवति शुश्रूषा तथास्यां तत्त्वगोचरा ॥ १३ ॥

कान्तेति—कान्तायुतः कामिनीसहितस्य विदग्धस्य गेयनीतिनिपुणस्य दिव्यस्यातिशयितस्य गेयस्य किन्नरादिसम्बन्धिनः श्रुतौ श्रवणे यथा यूनो यौवनगामिनो कामिनो भवति शुश्रूषा, तथाऽस्यां बलायां तत्त्वगोचरा शुश्रूषा ॥ १३ ॥

अभावेऽस्याः श्रुतं व्यर्थं बीजन्यास इवोषरे । श्रुताभावेऽपि भावेऽस्या ध्रुवः कर्मक्षयः पुनः ॥ १४ ॥

अभाव इति—अस्या उक्तलक्षणशुश्रूषाया अभावे। श्रुतमर्थश्रवणं व्यर्थं, ऊषर इव बीजन्यासः। श्रुताभावेऽप्यर्थश्रवणाभावेऽप्यस्या उक्तशुश्रूषाया भावे पुनः ध्रुवो निश्चितः कर्मक्षयः। अतोऽन्वयव्यतिरेकाभ्यामियमेव प्रधानफलकारणमिति भावः ॥ १४ ॥

**योगारंभ इहाक्षेपात् स्यादुपायेषु कौशलम्। उप्यमाने तरौ दृष्टा पयःसेकेन पीनता ॥ १५ ॥**

योगेति—इह बलायामक्षेपादन्यत्र चित्ताभ्यासाद्योगारंभे उपायेषु योगसाधनेषु कौशलं दक्षत्वं भवति, उत्तरोत्तरमतिवृद्धियोगादिति भावः। उप्यमाने तरौ पयःसेकेन पीनता दृष्टा, तद्वदिहाप्यक्षेपेणैवमतिपीनत्वलक्षणमुपायकौशलं स्यात्। अन्यथा पूर्णपयःसेकं विनोप्तस्य तरोरिव प्रकृतानुष्ठानस्य कार्श्यमेवाकौशललक्षणं स्यादिति भावः ॥ १५ ॥

**प्राणायामवती दीप्रा योगोत्थानविवर्जिता। तत्त्वश्रवणसंयुक्ता सूक्ष्मबोधमनाश्रिता ॥ १६ ॥**

प्राणायामवतीति—प्राणायामवती प्राणायामसहिता दीप्रा दृष्टिः। योगोत्थानेन विवर्जिता प्रशान्तवाहितालाभात्तत्त्वश्रवणेन संयुक्ता शुश्रूषाफलभावात् सूक्ष्मबोधेन विवर्जिता वेद्यसंवेद्यपदाप्राप्तेः ॥ १६ ॥

**रेचकः स्याद्बहिर्वृत्तिरन्तर्वृत्तिश्च पूरकः। कुंभकः स्तंभवृत्तिश्च प्राणायामस्त्रिधेत्ययम् ॥ १७ ॥**

रेचक इति—बहिर्वृत्तिः श्वासो रेचकः स्यात्। अन्तर्वृत्तिश्च प्रश्वासः पूरकः। स्तंभवृत्तिश्च कुंभकः। यस्मिन् जलमिव कुंभे निश्चलतया प्राणोऽवस्थाप्यते। इत्ययं त्रिधा प्राणायामः प्राणगतिविच्छेदः। यदाह—"(तस्मिन्सति) श्वासप्रश्वासयोर्ग-

तिविच्छेदः प्राणायामः" इति (२-४९)। अयं च नासाद्वादशान्ताविदेशेन षट्त्रिंशतिमात्रादिप्रमाणकालेन संख्यया चेयतो वारान् कृत एतावद्भिः श्वासप्रश्वासैः प्रथम उद्घातो भवतीत्यादिलक्षणोपलक्षितो दीर्घसूक्ष्मसंज्ञ आख्यायते। यथोक्तं—" स तु बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मसंज्ञ (सूक्ष्मः) इति"(२-५०)। बाह्याभ्यन्तरविषयो द्वादशान्तहृदयनाभिचक्रादिरूप एव पर्यालोच्यैव सहसा तप्तोपलनिपतितजलन्यायेन युगपत् स्तम्भवृत्त्या निष्पद्यमानात् कुम्भकात्तत्पर्यालोचनपूर्वकस्यमात्रभेदेन च चतुर्थोऽपि प्राणायाम इष्यते। यथोक्तं—"बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः" इति ( २ ५१ ) ॥ १७ ॥

धारणायोग्यता तस्मात् प्रकाशावरणक्षयः। अन्यैरुक्तः क्वचिच्चैतद्युज्यते योग्यतानुगम् ॥ १८ ॥

धारणेति—तस्मात्प्राणायामात् धारणानां योग्यता,प्राणायामेन स्थिरीकृतं चेतः सुखेन नियतदेशे धार्यत इति। तदुक्तं—"धारणा (सु) च योग्यता मनसः"(२-५३) इति। तथा प्रकाशस्य चित्तसत्त्वगतस्य यदावरणं क्लेशरूपं तत्क्षयः। तदुक्तं—" ततः क्षीयते प्रकाशावरणमिति" (२-५२)। अयमन्यैः पतञ्जल्यादिभिरुक्तः। नागरप्रपञ्चने तु व्याकुलताहेतुत्वेन निषिद्ध एव श्वासप्रश्वासरोधः, यथायोगसमाधानमेव प्रवृत्तेः श्रेयस्त्वात्,'प्राणरोधपठितमन्त्रस्यानतिप्रयोजनत्वात्। तदुक्तं—"उस्सासं ण णिरुंभइ आभिग्गहीओ वि किमु अचेट्ठा। सज्जमरण णिरोहे सुहुमुस्सासं च जयणाए ॥ १ ॥" एतच्च पतञ्जल्याद्युक्तं क्वचित्पुरुषविशेषे योग्यतानुगं योग्यतानुसारि युज्यते, नानारुचित्वाद्योगिनां, प्राणायामरुचीनां प्राणायामेनापि फलसिद्धेः स्वरुचिसम्पत्तिसिद्धस्योत्साहस्य योगोपायत्वात्। यथोक्तं योगबिन्दौ—"उत्साहान्निश्चयाद्धैर्यात्सन्तोषा-

त्त्वदर्शनात्। मुनेर्जनपदत्यागात् षड्भिर्योगः प्रसिध्यति ॥ १ ॥" इति। तस्माद्यस्य प्राणवृत्तिनिरोधेनैवेन्द्रियवृत्तिनिरोधस्तस्य तदुपयोग इति तत्त्वम् ॥ १७ ॥

रेचनाद्बाह्यभावानामन्तर्भावस्य पूरणात्। कुंभनान्निश्चितार्थस्य प्राणायामश्च भावतः ॥ १९ ॥

रेचनादिति–बाह्यभावानां कुटुंबदारादिममत्वलक्षणानां रेचनात्। अन्तर्भावस्य श्रवणजनितविवेकलक्षणस्य पूरणात्। निश्चितार्थस्य कुंभनात् स्थिरीकरणाच्च। भावतः प्राणायामोऽयमेवाव्यभिचारेण योगाङ्गं। अत एवोक्तं–"प्राणायामवती चतुर्थांगभावतो भावरेचकादिभावादिति" ॥ १९ ॥

प्राणेभ्योऽपि गुरुर्धर्मः प्राणायामविनिश्चयात्। प्राणांस्त्यजन्ति धर्मार्थं न धर्मं प्राणसंकटे ॥ २० ॥

प्राणेभ्योऽपीति–प्राणेभ्योऽपीन्द्रियादिभ्योऽपि गुरुर्महत्तरो धर्मः। इत्यतो भावप्राणायामतो विनिश्चयात् धर्मार्थं प्राणांस्त्यजति, तत्रोत्सर्गप्रवृत्तेः। अत एव न धर्मं त्यजति प्राणसंकटे प्राणकष्टे ॥ २० ॥

पुण्यबीजं नयत्येवं तत्त्वश्रुत्या सदाशयः। भवक्षारांभसस्त्यागाद्वृद्धिं मधुरवारिणा ॥ २१ ॥

पुण्यबीजमिति–एवं धर्मस्य प्राणेभ्योऽप्यधिकत्वप्रतिपत्त्या, तत्रोत्सर्गप्रवृत्त्या। तत्त्वश्रुत्या तथातत्त्वश्रवणेन। मधुरवारिणा। सदाशयः शोभनपरिणामः। भवलक्षणस्य क्षारांभसस्त्यागात्। पुण्यबीजं वृद्धिं नयति। यथा हि मधुरोदक-

योगतस्तन्माधुर्यानवगमेऽपि बीजं प्ररोहमादत्ते, तथा तत्त्वश्रुतेरचिन्त्यसामर्थ्यात्तत्त्वविषयसद्बोधस्याभावेऽपि अतत्त्वश्रवणत्यागेन तद्योगात् पुण्यवृद्धिः स्यादेवेति भावः ॥ २१ ॥

**तत्त्वश्रवणतस्तीव्रा गुरुभक्तिः सुखावहा । समापत्त्यादिभेदेन तीर्थकृद्दर्शनं ततः ॥ २२ ॥**

तत्त्वेति–तत्त्वश्रवणतः । तीव्रा उत्कटा । गुरौ तत्त्वश्रावयितरि भक्तिराराध्यत्वेन प्रतिपत्तिः । सुखावहोभयलोकसुखकरी । ततो गुरुभक्तेः समापत्त्यादिभेदेन तीर्थकृद्दर्शनं भगवत्साक्षात्कारलक्षणं भवति । तदुक्तं–"गुरुभक्तिप्रभावेण तीर्थकृद्दर्शनं मतम् । समापत्त्यादिभेदेन निर्वाणैकनिबन्धनम् ॥ १ ॥" समापत्तिरत्र ध्यानजस्पर्शना भण्यते, आदिना तन्नामकर्मबन्धविपाकतद्भावापत्त्युपपत्तिपरिग्रहः ॥ २२ ॥

**कर्मवज्रविभेदेनानन्तधर्मैकगोचरे । वेद्यसंवेद्यपदजे बोधे सूक्ष्मत्वमत्र न ॥ २३ ॥**

कर्मेति–कर्मैव वज्रमतिदुर्भेदत्वात् तस्य विभेदेनानन्तधर्मकं भेदाभेदनित्यत्वानित्यत्वाद्यनन्तधर्मशबलं यद्वस्तु तद्गोचरे वस्तुनस्तथात्वपरिच्छेदिनि । वेद्यसंवेद्यपदजे बोधे सूक्ष्मत्वं यत्तदत्र दीप्रायां दृष्टौ न भवति, तद्बोधभूमिकारूपत्वादस्याः । तदुक्तं–"भवाम्भोधिसमुत्तारात् कर्मवज्रविभेदतः । ज्ञेयव्याप्तेश्च कार्त्स्न्येन सूक्ष्मत्वं नायमत्र तु ॥ १ ॥" ॥ २३ ॥

**अवेद्यसंवेद्यपदं चतसृष्वासु दृष्टिषु । पक्षिच्छायाजलचरप्रवृत्त्याभं यदुल्बणम् ॥ २४ ॥**

अवेद्येति–आसु मित्राद्यासु चतसृषु दृष्टिषु यद्यस्मादवेद्यसंवेद्यपदं उल्बणमधिकं । पक्षिच्छायाया जलसंसर्गिन्यां जल-

धिया जलचरप्रवृत्तिरिवाज्ञा वेद्यपदसंवेद्यसंबन्धिनी यत्र तत्तथा। तत्र हि न तात्त्विकं वेद्यसंवेद्यपदं, किं त्वारोपाधिष्ठानसंसर्गितयाऽतात्त्विकं। अत एवानुल्बणमित्यर्थः। एतदपि चरमासु चरमयथाप्रवृत्तकरणेन एवेत्याचार्याः। तदिदमभिप्रेत्योक्तं—"अवेद्यसंवेद्यपदं यस्मादासु तथोल्बणम्। पक्षिच्छायाजलचरप्रवृत्त्याभमतः परम् ॥ १ ॥" ॥ २४ ॥

वेद्यं संवेद्यते यस्मिन्नपायादिनिबन्धनम्। पदं तद्वेद्यसंवेद्यमन्यदेतद्विपर्ययात् ॥ २५ ॥

वेद्यमिति—वेद्यं वेदनीयं वस्तुस्थित्या तथाभावयोगिसामान्येनाविकल्पकज्ञानग्राह्यमित्यर्थः। संवेद्यते क्षयोपशमानुरूपं निश्चयबुद्ध्या विज्ञायते। यस्मिन्नाशयस्थाने। अपायादिनिबन्धनं नरकस्वर्गादिकारणं स्यादि ( हिंसाहिंसादि )। तद्वेद्यसंवेद्यं पदं, अन्यदवेद्यसंवेद्यपदमेतद्विपर्ययाडुक्तलक्षणव्यत्ययात्। यद्यपि शुद्धं यथावद्वेद्यसंवेदनं माषतुषादावसंभवि, योग्यतामात्रेण च मित्रादिदृष्टिष्वपि संभवि, तथापि वेद्यसंवेद्यपदप्रवृत्तिनिमित्तं ग्रन्थिभेदजनितो रुचिविशेष एवेति न दोषः ॥ २५ ॥

अपायशक्तिमालिन्यं सूक्ष्मबोधविघातकृत्। न वेद्यसंवेद्यपदे वज्रतण्डुलसन्निभे ॥ २६ ॥

अपायेति—अपायशक्तिमालिन्यं नरकाद्यपायशक्तिमलिनत्वं सूक्ष्मबोधस्य विघातकृत्, अपायहेत्वासेवनक्लिष्टबीजसद्भावात्तस्य सज्ज्ञानावरणक्षयोपशमाभावनियतत्वात्। न वेद्यसंवेद्यपदे उक्तलक्षणे वज्रतंडुलसन्निभे। प्रायो दुर्गतावपि मानसदुःखाभावेन तद्वेद्यसंवेद्यपदवतो भावपाकायोगात्। एतच्च व्यावहारिकं वेद्यसंवेद्यपदं भावमाश्रित्योक्तं। निश्चयतस्तु प्रतिपतितसद्दर्शनानामनन्तसंसारिणां नास्त्येव वेद्यसंवेद्यपदभावः। नैश्चयिकतद्वति क्षायिकसम्यग्दृष्टौ श्रेणिकादाविव

पुनर्दुर्गत्ययोगेन तप्तलोहपदन्यासतुल्याया अपि पापप्रवृत्तेश्चरमाया यथोपपत्तेः । यथोक्तं—“अतोऽन्यदुत्तरा स्वस्मात् पापे कर्मागसोऽपि हि । तप्तलोहपदन्यासतुल्या वृत्तिः क्वचिद्यदि ॥ १ ॥ वेद्यसंवेद्यपदतः संवेगातिशयादिति । चरमैव भवत्येषा पुनर्दुर्गत्ययोगतः ॥ २ ॥” इति ॥ २६ ॥

तच्छक्तिः स्थूलबोधस्य बीजमन्यत्र चाहृतम् । तत्र यत्पुण्यबन्धोऽपि हन्तापायोत्तरः स्मृतः ॥ २७ ॥

तच्छक्तिरिति—अन्यत्र चावेद्यसंवेद्यपदे तच्छक्तिरपायशक्तिः स्थूलबोधस्य बीजमाहृतमनभिव्यक्तं । तत्रावेद्यसंवेद्यपदे यद्यस्मात् पुण्यबन्धोऽपि हन्तापायोत्तरो विघ्नान्तरीयकः स्मृतः । ततस्तत्पुण्यस्य पापानुबन्धित्वात् ॥ २७ ॥

प्रवृत्तिरपि योगस्य वैराग्यान्मोहगर्भतः । प्रसूतेऽपायजननीमुत्तरां मोहवासनाम् ॥ २८ ॥

प्रवृत्तिरपीति—तत्रेति प्राक्तनमत्रानुषज्यते । तत्र मोहगर्भतो, वैराग्यात् योगस्य प्रवृत्तिरपि सद्गुरुपारतन्त्र्याज्जातेऽपायजननीमुत्तरां मोहवासनां प्रसूते । मोहमूलानुष्ठानस्य मोहवासनाऽवन्ध्यबीजत्वात् । अतोऽत्र योगप्रवृत्तिरप्यकिञ्चित्करीति न्यायः ॥ २८ ॥

अवेद्यसंवेद्यपदे पुण्यं निरनुबन्धकम् । भवाभिनन्दिजन्तूनां पापं स्यात्सानुबन्धकम् ॥ २९ ॥

अवेद्येति— अवेद्यसंवेद्यपदे पुण्यं निरनुबन्धकमनुबन्धरहितं स्यात् । यदि कदाचिच्च स्यात् पापानुबन्धि । सानुबन्धे तत्र ग्रन्थिभेदस्य नियामकत्वात् । भवाभिनन्दिनां क्षुद्रत्वादिदोषवतां जन्तूनां पापं सानुबन्धकमनुबन्धसहितं स्यात् । रागद्वेषादिप्राबल्यस्य तदनुबन्धावन्ध्यबीजत्वात् ॥ २९ ॥

कुकृत्यं कृत्यमाभाति कृत्यं चाकृत्यमेव हि । अत्र व्यामूढचित्तानां कण्डूकण्डूयनादिवत् ॥ ३० ॥

कुकृत्यमिति–कुकृत्यं प्राणातिपातादिकृत्यं करणीयमाभाति । कृत्यं चाहिंसादि अकृत्यमेव हि अनाचरणीयमेव । अत्रावेद्यसंवेद्यपदे व्यामूढचित्तानां मोहग्रस्तमानसानां कंडूलानां कंडूयनादिवत् । आदिना कृम्याकुलस्य कुष्ठिनोऽग्निसेवनग्रहः । कंडूयकादीनां कंड्वादेरिव भवाभिनन्दिनामवेद्यसंवेद्यपदादेव विपर्ययधीरिति भावः ॥ ३० ॥

एतेऽसच्चेष्टयात्मानं मलिनं कुर्वते निजम् । वडिशामिषवत्तुच्छे प्रसक्ता भोगजे सुखे ॥ ३१ ॥

एत इति–एते भवाभिनन्दिनोऽसच्चेष्टया महारम्भादिप्रवृत्तिलक्षणया निजमात्मानं मलिनं कुर्वते, कर्मरजःसंबन्धात् । बडिशामिषवत् मत्स्यगलमांसवत् । तुच्छेऽल्पे रौद्रविपाके प्रसक्ता भोगजे भोगप्रभवे सुखे ॥ ३१ ॥

अवेद्यसंवेद्यपदं सत्संगागमयोगतः । तद्दुर्गतिप्रदं जेयं परमानन्दमिच्छता ॥ ३२ ॥

अवेद्येति–यतोऽस्यायं दारुणो विपाकस्तत्तस्मादवेद्यसंवेद्यपदं दुर्गतिप्रदं नरकादिदुर्गतिकारणं । सत्संगागमयोगतो विशिष्टसंगमागमसंबन्धात् । परमानन्दं मोक्षसुखमिच्छता जेयं । अस्यामेव भूमिकायामन्यदा जेतुमशक्यत्वात् । अत एवानुवादपरोऽप्यागम इति योगाचार्या अयोग्यनियोगासिद्धेरिति ॥ ३२ ॥

॥ इति तारादित्रयद्वात्रिंशिका ॥ २२ ॥

## ॥ अथ कुतर्कग्रहनिवृत्तिद्वात्रिंशिका ॥ २३ ॥

अनन्तरमवेद्यसंवेद्यपदं जेयमित्युक्तं, अत्र तज्जयेनैव कुतर्कनिवृत्तिर्जयति, सैव चात्यन्तमादरणीयेत्याह–

जीयमानेऽत्र राज्ञीव चमूचरपरिप्लवः । निवर्तते स्वतः शीघ्रं कुतर्कविषमग्रहः ॥ १ ॥

जीयमान इति–जीयमानेऽत्रावेद्यसंवेद्यपदे महामिथ्यात्वनिबन्धने पशुत्वादिशब्दवाच्ये । स्वत एवात्मनैवापरोपदेशेन शीघ्रं । कुतर्क एव विषमग्रहो दृष्टापायहेतुत्वेन क्रूरग्रहः । कुतर्कस्य विषमग्रहः कुदिशावेशरूपो वा निवर्तते । राज्ञि जीयमान इव चमूचरपरिप्लवः ॥ १ ॥

शमारामानलज्वाला हिमानी ज्ञानपङ्कजे । श्रद्धाशल्यं स्मयोल्लासः कुतर्कः सुनयार्गला ॥ २ ॥

शमेति–व्यक्त ॥ २ ॥

कुतर्केऽभिनिवेशस्तन्न युक्तो मुक्तिमिच्छताम् । युक्तः पुनः श्रुते शीले समाधौ च महात्मनाम् ॥ ३ ॥

कुतर्क इति–श्रुते आगमे । शीले परद्रोहविरतिलक्षणे । समाधौ ध्यानफलभूते ॥ ३ ॥

उक्तं च योगमार्गज्ञैस्तपोनिर्धूतकल्मषैः । भावियोगिहितायोच्चैर्मोहदीपसमं वचः ॥ ४ ॥

उक्तं चेति–उक्तं च निरूपितं पुनः । योगमार्गज्ञैरध्यात्मविद्भिः पतञ्जलिप्रभृतिभिः । तपसा निर्धूतकल्मषैः प्रशमप्रधा-

नेन तपसा क्षीणमार्गानुसारिबोधबाधकमोहमलैः । जावियोगिहिताय जविष्यद्विवादबहुलकलिकालयोगिहितार्थं । उच्चैरत्यर्थं । मोहदीपसमं मोहान्धकारप्रदीपस्थानीयं । वचो वचनम् ॥ ४ ॥

**वादांश्च प्रतिवादांश्च वदन्तो निश्चितांस्तथा । तत्त्वान्तं नैव गच्छन्ति तिलपीलकवद्गतौ ॥ ५ ॥**

वादांश्चेति–वादांश्च पूर्वपक्षरूपान् । प्रतिवादांश्च परोपन्यस्तपक्षप्रतिवचनरूपान् । वदन्तो ब्रुवाणाः । निश्चितान् असिद्धानैकान्तिकादिहेत्वाभासनिरासेन । तथा तेन प्रकारेण तत्तच्छास्त्रप्रसिद्धेन सर्वेऽपि दर्शनिनो मुमुक्षवोऽपि । तत्त्वान्तमात्मादितत्त्वप्रसिद्धिरूपं । न नैव गच्छन्ति प्रतिपद्यन्ते । तिलपीलकवत् तिलपीलक इव । निरुद्धाक्षिसंचारस्तिलयंत्रवाहनपरो यथा ह्ययं नित्यं भ्राम्यन्नपि निरुद्धाक्षतया न तत्परिमाणमवबुध्यते, एवमेतेऽपि वादिनः स्वपक्षाभिनिवेशान्धा विचित्रं वदन्तोऽपि नोच्यमानतत्त्वं प्रतिपद्यन्ते इति ॥ ५ ॥

**विकल्पकल्पनाशिल्पं प्रायोऽविद्याविनिर्मितम् । तद्योजनामयश्चात्र कुतर्कः किमनेन तत् ॥ ६ ॥**

विकल्पेति–विकल्पाः शब्दविकल्पा अर्थविकल्पाश्च तेषां कल्पनारूपं शिल्पं । प्रायो बाहुल्येन । अविद्याविनिर्मितं ज्ञानावरणीयादिकर्मसंपर्कजनितं । तद्योजनामयस्तदेकधारात्मा चात्र कुतर्कः । तत् किमनेन मुमुक्षूणां दुष्टकारणप्रभवस्य सत्कार्याहेतुत्वात् ॥ ६ ॥

**जातिप्रायश्च बाध्योऽयं प्रकृतान्यविकल्पनात् । हस्ती हन्तीतिवचने प्राप्ताप्राप्तविकल्पवत् ॥ ७ ॥**

आतिमायश्चेति—आतिमायश्च दूषणाभासकल्पश्च । माध्यः प्रतीविफलान्यामय कुतर्कः । प्रकृतान्यस्योपादेयायविरिक्तस्य अप्रयोजनस्य यस्त्यंशस्य विकल्पनात् । हस्ती हन्तीति यचने हस्त्यारूढेनोक्ते प्राप्ताप्राप्तविकल्पवन्नैयायिकान्नस्य । यथा ह्ययमित्थं यत्कारं प्रति—"किमयं हस्ती प्राप्त व्यापादयति ? उताप्राप्त ? आद्ये त्वामपि व्यापादयेत्, अन्त्ये च जगदपीति विकल्पयन्नेव हस्तिना गृहीतो मिठेन कथमपि मोचितः । तथा तथाविधविकल्पकारी तत्तद्दर्शनस्थोऽपि कुतर्कहस्तिना गृहीतः सद्गुरुमिठेनैव मोच्यत इति ॥ ७ ॥

स्वभावोत्तरपर्यन्त एषोऽत्रापि च तत्त्वतः । नार्वाग्दृग्ज्ञानगम्यत्वमन्यथान्येन कल्पनात् ॥८॥

स्वभावेति—एष कुतर्कः । स्वभावोत्तरपर्यन्तः । अत्र च " वस्तुस्वभावैरुत्तरं वाच्य" इति वचनात् । अत्रापि च स्वभावे नार्वाग्दृशस्त्वस्त्यस्यज्ञानगम्यत्व तत्त्वतः । अन्यथा क्लृप्तस्यैकेन वादिना स्वभावस्यान्येनान्यथाकल्पनात् ॥ ८ ॥

तथाहि—

अपां दाहस्वभावत्वे दर्शिते दहनान्तिके । विप्रकृष्टेऽप्ययस्कान्ते स्वार्थशक्तेः किमुत्तरम् ॥ ९ ॥

अपामिति—अपां शैत्यस्वभावत्ववादिन प्रति अपां दहनान्तिके दाहस्वभावत्वे दर्शिते । अध्यक्षविरोधपरिहारात् । विप्रकृष्टेऽप्ययस्कान्ते स्वार्थशक्तेर्लोहाकर्षणशक्तेर्विप्रकर्षमात्रस्याप्रयोजकत्वात् किमुत्तर ? अन्यथावादिन स्वभावस्यापर्यनुयोज्यत्वाद्विशेषस्यावििनिगमात् । तदुक्तं—"अतोऽग्निः क्लेदयत्यम्बु सन्निधौ दहतीति च । अयस्कान्तसन्निधौ तत्स्वाभाव्याद्विस्थुदिते तयोः ॥१॥ कोशपानादृते ज्ञानोपायो नास्त्यत्र युक्तितः । विप्रकृष्टोऽप्ययस्कान्तः स्वार्थकृद्दृश्यते यतः ॥२॥" ॥९॥

दृष्टान्तमात्रसौलभ्यात्तदयं केन बाध्यताम् । स्वभावबाधने नालं कल्पनागौरवादिकम् ॥ १० ॥

दृष्टान्तेति–दृष्टान्तमात्रस्य सौलभ्यात् । तत्तस्मात् । अयमन्यथास्वभावविकल्पकः कुतर्कः केन वार्यता ? । अग्निसन्निधावपां दाहस्वभावत्वे कल्पनागौरवं बाधकं स्यादित्यत आह–स्वभावस्योपपत्तिसिद्धस्य बाधने कल्पनागौरवादिकं नालं न समर्थं, कल्पनासहस्रेणापि स्वभावस्यान्यथाकर्तुमशक्यत्वात् । अत एव न कल्पनालाघवेनापि स्वभावान्तरं कल्पयितुं शक्यमिति द्रष्टव्यं । अथ स्वस्य भावोऽनागन्तुको धर्मो नियतकारणत्वादिरूप एव, स च कल्पनालाघवज्ञानेन गृह्यते, अन्यथागृहीतश्च कल्पनागौरवज्ञानेन त्यज्यतेऽपीति चेन्न, गौरवेऽपि अप्रामाणिकत्वस्य दुर्ग्रहत्वात् प्रामाणिकस्य च गौरवादेरप्यदोषत्वादिति दिक् ॥ १० ॥

द्विचन्द्रस्वप्नविज्ञाननिदर्शनबलोत्थितः । धियां निरालंबनतां कुतर्कः साधयत्यपि ॥ ११ ॥

द्विचन्द्र इति–द्विचन्द्रस्वप्नविज्ञाने एव निदर्शने उदाहरणमात्रे तद्बलादुत्थितः कुतर्कः । धियां सर्वज्ञानानां । निरालंबनतामलीकविषयतामपि साधयति ॥ ११ ॥

तत्कुतर्केण पर्याप्तमसमञ्जसकारिणा । अतीन्द्रियार्थसिद्ध्यर्थं नावकाशोऽस्य कुत्रचित् ॥ १२ ॥

तदिति–तदसमञ्जसकारिणा प्रतीतिबाधितार्थसिद्ध्यनुधाविना पर्याप्तं कुतर्केण । अतीन्द्रियार्थानां धर्मार्थानां सिद्ध्यर्थं नास्य कुतर्कस्य कुत्रचिदवकाशः ॥ १२ ॥

शास्त्रस्यैवावकाशोऽत्र कुतर्कग्रहतस्ततः । शीलवान् योगवानत्र श्रद्धावांस्तत्त्वविद्भवेत् ॥ १३ ॥

शास्त्रस्येति–अत्रातीन्द्रियार्थसिद्धौ शास्त्रस्यैवावकाशः, तस्यातीन्द्रियार्थसाधनसमर्थत्वाच्छुष्कतर्कस्यातथात्वात् । तदुक्तं–"गोचरस्त्वागमस्यैव ततस्तदुपलब्धितः चन्द्रसूर्योपरागादिसंवाद्यागमदर्शनात् ॥ १ ॥" ततस्तस्मात् कुतर्कग्रहतोऽत्र शास्त्रे श्रद्धावान् शीलवान् परद्रोहविरतियोगवान् सदा योगतत्परः तत्त्वविद्धर्माद्यतीन्द्रियार्थदर्शी भवेत् ॥ १३ ॥

ननु शास्त्राणामपि भिन्नत्वात्कथं शास्त्रश्रद्धापि स्यादित्यत आह–

तत्त्वतः शास्त्रभेदश्च न शास्तृणामभेदतः । मोहस्तदधिमुक्तीनां तद्भेदाश्रयणं ततः ॥ १४ ॥

तत्त्वत इति–तत्त्वतो धर्मवादापेक्षया तात्पर्यग्रहात् शास्त्रभेदश्च नास्ति । शास्तॄणां धर्मप्रणेतॄणामभेदतः । तत्तन्नया-पेक्षदेशनाभेदेनैव स्थूलबुद्धीनां तद्भेदाभिमानात् । अत एवाह–ततस्तस्मात्तदधिमुक्तीनां शास्तृश्रद्धावतां तद्भेदाश्रयणं शास्तृभेदाङ्गीकरणं मोहोऽज्ञानं । निर्दोषत्वेन सर्वेषामैक्यरूप्यात् । तदुक्तं–"न तत्त्वतो भिन्नमताः सर्वज्ञा बहवो यतः । मोहस्तदधिमुक्तीनां तद्भेदाश्रयणं ततः ॥ १ ॥" ॥ १४ ॥

सर्वज्ञो मुख्य एकस्तत्प्रतिपत्तिश्च यावताम् । सर्वेऽपि ते तमापन्ना मुख्यं सामान्यतो बुधाः ॥ १५ ॥

सर्वज्ञ इति–सर्वज्ञो मुख्यस्तात्त्विकाराधनाविषय एकः, सर्वज्ञत्वजात्यविशेषात् । तदुक्तं–"सर्वज्ञो नाम यः कश्चित् पारमार्थिक एव हि । स एक एव सर्वत्र व्यक्तिभेदेऽपि तत्त्वतः ॥ १ ॥" तत्प्रतिपत्तिः सर्वज्ञभक्तिश्च यावतां तत्त्वदर्शि-

नस्थानां ते सर्वेऽपि बुधास्तं सर्वज्ञं मुख्यं सामान्यतो विशेषानिर्णयेऽप्यापन्ना आश्रिताः, निरतिशयितगुणवत्त्वेन प्रतिपत्तेः वस्तुतः सर्वज्ञविषयकत्वात् गुणवत्तावगाहनेनैव तस्या भक्तित्वाच्च । यथोक्तं–"प्रतिपत्तिस्ततस्तस्य सामान्येनैव यावताम् । ते सर्वेऽपि तमापन्ना इति न्यायगतिः परा ॥ १ ॥" ॥ १५ ॥

**न ज्ञायते विशेषस्तु सर्वथाऽसर्वदर्शिभिः । अतो न ते तमापन्ना विशिष्य भुवि केचन ॥ १६ ॥**

नेति–विशेषस्तु सर्वज्ञज्ञानादिगतभेदस्तु । असर्वदर्शिभिश्छद्मस्थैः । सर्वथा सर्वैः प्रकारैः । न ज्ञायते । अतो न ते सर्वज्ञाभ्युपगन्तारः । तं सर्वज्ञमापन्ना आश्रिताः । विशिष्य भुवि पृथिव्यां केचन। तदुक्तं "विशेषस्तु पुनस्तस्य कार्त्स्न्येनाऽसर्वदर्शिभिः । सर्वैर्न ज्ञायते तेन तमापन्नो न कश्चन ॥ १ ॥" ॥ १६ ॥

अतः सामान्यप्रतिपत्त्यंशेन सर्वयोगिषु परिशिष्टा तुल्यतैव भावनीयेत्याह–

**सर्वज्ञप्रतिपत्त्यंशमाश्रित्यामलया धिया । निर्व्याजं तुल्यता भाव्या सर्वतंत्रेषु योगिनाम् ॥ १७ ॥**

सर्वज्ञेति–सर्वज्ञप्रतिपत्त्यंशमाश्रित्य । अमलया रागद्वेषमलरहितया । धिया बुद्ध्या । निर्व्याजमौचित्येन सर्वज्ञोक्तपालनपरतया तुल्यता भाव्या । सर्वतंत्रेषु सर्वदर्शनेषु । योगिनां मुमुक्षूणां । तदुक्तं–"तस्मात्सामान्यतोऽप्येनमभ्युपैति य एव हि । निर्व्याजं तुल्य एवासौ तेनांशेनैव धीमता ॥ १ ॥" ॥ १७ ॥

अवान्तरभेदस्तु सामान्याविरोधीत्याह—

दूरासन्नादिभेदोऽपि तद्भृत्यत्वं निहन्ति न । एको नामादिभेदेन भिन्नाचारेष्वपि प्रभुः ॥ १८ ॥

दूरेति—दूरासन्नादिभेदस्तु तद्भृत्यत्वं सर्वज्ञोपासकत्वं न निहन्ति । एकस्य राज्ञो नानाविधप्रतिपत्तिकृतामपि एकभृत्यत्वाविरोधवत् प्रकृतोपपत्तेः । भिन्नाचारेष्वपि तथाधिकारभेदेन नानाविधानुष्ठानेष्वपि योगिषु नामादीनामर्हदादिसंज्ञादीनां भेदेनैकः प्रभुरुपास्यः । तदुक्तं—"यथैवैकस्य नृपतेर्बहवोऽपि समाश्रिताः । दूरासन्नादिभेदेऽपि तद्भृत्याः सर्व एव ते ॥ १ ॥ सर्वज्ञतत्त्वाभेदेन तथा सर्वज्ञवादिनः । सर्वे तत्तत्त्वगा ज्ञेया भिन्नाचारस्थिता अपि ॥ २ ॥ न भेद एव तत्त्वेन सर्वज्ञानां महात्मनाम् । तथानामादिभेदेऽपि भाव्यते तन्महात्मभिः ॥ ३ ॥" ॥ १८ ॥

देवेषु योगशास्त्रेषु चित्राचित्रविभागतः । भक्तिवर्णनमप्येवं युज्यते तद्भेदतः ॥ १९ ॥

देवेष्विति—एवमिष्टानिष्टनामभेदेऽपि । तदभेदतः तत्त्वतः सर्वज्ञाभेदात् । योगशास्त्रेषु सौवाध्यात्मचिन्ताशास्त्रेषु देवेषु लोकपालमुक्तादिषु । चित्राचित्रविभागतो भक्तिवर्णनं युज्यते । तदुक्तं—"चित्राचित्रविभागेन यच्च देवेषु वर्णिता । भक्तिः सद्योगशास्त्रेषु ततोऽप्येवमिदं स्थितम् ॥ १ ॥" ॥ १९ ॥

संसारिषु हि देवेषु भक्तिस्तत्कायगामिनाम् । तदतीते पुनस्तत्त्वे तदतीतार्थयायिनाम् ॥ २० ॥

संसारिष्विति—संसारिषु हि देवेषु लोकपालादिषु । भक्तिः सेवा । तत्कायगामिनां संसारिदेवकायगामिनां । तदतीते पुनः संसारातीते तु तत्त्वे तदतीतार्थयायिनां संसारातीतमार्गगामिनां योगिनां भक्तिः ॥ २० ॥

चित्रा चाद्येषु तद्रागतदन्यद्वेषसंगता । अचित्रा चरमे त्वेषा शमसाराखिलैव हि ॥ २१ ॥

चित्रा चेति–चित्रा च नानाप्रकारा च । आद्येषु सांसारिकेषु देवेषु । तद्रागतदन्यद्वेषाभ्यां स्वाभीष्टदेवतारागानभीष्टद्वेषाभ्यां संगता युक्ता, मोहगर्भत्वात् । अचित्रा एकाकारा चरमे तु तदतीते तु । एषा भक्तिः । शमसारा शमप्रधाना अखिलैव हि, तथासंमोहाभावात् इति ॥ २१ ॥

इष्टापूर्तानि कर्माणि लोके चित्राभिसन्धितः । फलं चित्रं प्रयच्छन्ति तथाबुद्ध्यादिभेदतः ॥ २२ ॥

इष्टापूर्तानीति–इष्टापूर्तानि कर्माणि लोके चित्राभिसन्धितः संसारिदेवस्थानादिगतविचित्राध्यवसायात् । मृदुमध्याधिमात्ररागादिरूपात् । तथा बुद्ध्यादीनां वक्ष्यमाणलक्षणानां भेदतः फलं चित्रं नानारूपं प्रयच्छन्ति । विभिन्नानां नगराणामिव विभिन्नानां संसारिदेवस्थानानां प्राप्तेरुपायस्यानुष्ठानस्याभिसन्ध्यादिभेदेन विचित्रत्वात् । तदुक्तं–"संसारिणां हि देवानां यस्माच्चित्राण्यनेकधा । स्थित्यैश्वर्यप्रभावाद्यैः स्थानानि प्रतिशासनम् ॥ १ ॥ तत्तस्मात्साधनोपायो नियमाच्चित्र एव हि । न भिन्ननगराणां स्यादेकं वर्त्म कदाचन ॥ २ ॥" २२ ॥

बुद्धिर्ज्ञानमसंमोहस्त्रिविधो बोध इष्यते । रत्नोपलम्भतज्ज्ञानतदवाप्तिनिदर्शनात् ॥ २३ ॥

बुद्धिरिति–बुद्धिः तथाविधोहरहितं शब्दार्थश्रवणमात्रजं ज्ञानं। यदाह–"इन्द्रियार्थाश्रया बुद्धिः ।" ज्ञानं तथाविधोहेन गृहीतार्थतत्त्वपरिच्छेदनं । तदाह–"ज्ञानं त्वागमपूर्वकम्" । असंमोहो हेयोपादेयत्यागोपादानोपहितं ज्ञानं । यदाह–"सद-

नुष्ठानचयैतदसंमोहोऽभिधीयते"। एवं त्रिविधो बोध इष्यते स्वस्वपूर्वाणां कर्मणां भेदसाधकः "तद्भेदात्सर्वकर्माणि भिद्यन्ते सर्वदेहिनां" इति वचनात्। रत्नोपलम्भतज्ज्ञानतत्प्राप्त्यासीनां निदर्शनात्। यथा सुपक्षपादिभेदाद्रत्नलक्षणभेदस्तथा प्रकृतेऽपि बुद्ध्यादिभेदादनुष्ठानभेद इति ॥ २३ ॥

आदरः करणे प्रीतिरविघ्नः संपदागमः। जिज्ञासा तज्ज्ञसेवा च सदनुष्ठानलक्षणम् ॥ २४ ॥

आदर इति—आदरो यत्नातिशय इष्टार्थे। करणे प्रीतिरभिष्वंगात्मिका। अविघ्नः करणे एवादृष्टसामर्थ्यादपायाभावः। संपदागमस्तत्र एव शुभभावपुण्यसिद्धेः। जिज्ञासा इष्टादिगोचरा। तज्ज्ञसेवा चेष्टादिज्ञसेवा। चशब्दात्तदनुग्रहः। एतत्सदनुष्ठानलक्षणं तदनुबन्धसारत्वात् ॥ २४ ॥

भवाय बुद्धिपूर्वाणि विपाकविरसत्वतः। कर्माणि ज्ञानपूर्वाणि श्रुतशक्त्या च मुक्तये ॥ २५ ॥

भवायेति—बुद्धिपूर्वाणि कर्माणि स्वकल्पनाप्राधान्याच्छास्त्रविवेकानादरात्। विपाकस्य विरसत्वतो भवाय संसाराय भवन्ति। तदुक्तं—"बुद्धिपूर्वाणि कर्माणि सर्वाण्येवेह देहिनाम्। संसारफलदान्येव विपाकविरसत्वतः ॥ १॥" ज्ञानपूर्वाणि च तानि तथाविवेकसम्पत्तिजनितया श्रुतशक्त्या अमृतशक्तिकल्पया मुक्तये निःश्रेयसाय। यदुक्तं—"ज्ञानपूर्वाणि तान्येव मुक्त्यंगं कुलयोगिनाम्। श्रुतशक्तिसमावेशादनुबन्धफलत्वतः ॥ १ ॥" ॥ २५ ॥

असमोहसमुत्थानि योगिनामाशु मुक्तये। भेदेऽपि तेषामेकोऽध्वा जलधौ तीरमार्गवत् ॥ २६ ॥

असंमोहेति–असंमोहसमुत्थानि तु कर्माणि । योगिनां भवातीतार्थयायिनां । आशु शीघ्रं न पुनर्ज्ञानपूर्वकवदभ्युदयलाभव्यवधानेऽपि मुक्तये भवन्ति । यथोक्तं–"असंमोहसमुत्थानि त्वेकान्तपरिशुद्धितः । निर्वाणफलदान्याशु भवातीतार्थयायिनाम् ॥ १ ॥ प्राकृतेष्विह भावेषु येषां चेतो निरुत्सुकम् । भवभोगविरक्तास्ते भवातीतार्थयायिनः ॥ २ ॥" भेदेऽपि गुणस्थानपरिणतितारतम्येऽपि तेषां योगिनामेकोऽध्वा एक एव मार्गः । जलधौ समुद्रे तीरमार्गवत् दूरासन्नादिभेदेऽपि तत्त्वतस्तदैक्यात् । प्राप्यस्य मोक्षस्य सदाशिवपरब्रह्मसिद्धात्मतथतादिशब्दैर्वाच्यस्य शाश्वतशिवयोगातिशयितसद्भावालंबनबृहत्त्वबृंहकत्वनिष्ठितार्थत्वाकालतथाभावाद्यर्थाभेदेनैकत्वात्तन्मार्गस्यापि तथात्वात् । तदुक्तं–"एक एव तु मार्गोऽपि तेषां शमपरायणः । अवस्थाभेदभेदेऽपि जलधौ तीरमार्गवत् ॥ १ ॥ संसारातीततत्त्वं तु परं निर्वाणसंज्ञितम् । तथैकमेव नियमाच्छब्दभेदेऽपि तत्त्वतः ॥ २ ॥ सदाशिवः परंब्रह्म सिद्धात्मा तथतेति च । शब्दैस्तदुच्यतेऽन्वर्थादेकमेवैवमादिभिः ॥ ३ ॥ तल्लक्षणाविसंवादान्निराबाधमनामयम् । निष्क्रियं च परं तत्त्वं यतो जन्माद्ययोगतः ॥ ४ ॥ ज्ञाते निर्वाणतत्त्वेऽस्मिन्नसंमोहेन तत्त्वतः । प्रेक्षावतां न तद्भक्तौ विवाद उपपद्यते ॥ ५ ॥" २६ ॥

**तस्मादचित्रभक्त्याप्याः सर्वज्ञा न भिदामिताः । चित्रा गीर्भववैद्यानां तेषां शिष्यानुगुण्यतः ॥ २७ ॥**

तस्मादिति–तस्मात् सर्वेषां योगिनामेकमार्गगामित्वात् । अचित्रभक्त्या एकरूपया भक्त्या । आप्याः प्राप्याः सर्वज्ञाः । न भिदामिता न भेदं प्राप्ताः । तदुक्तं–"सर्वज्ञपूर्वकं चैतन्नियमादेव यत्स्थितम् । आसन्नोऽयमृजुर्मार्गस्तद्भेदस्तत्कथं भवेत् ॥ १ ॥" कथं तर्हि देशनाभेदः ? इत्यत आह–तेषां सर्वज्ञानां भववैद्यानां संसाररोगभिषग्वराणां । चित्रा नानाप्रकारा

गीः । शिष्यानुगुण्यतो विनेयाभिप्रायानुरोधात् । यथा वैद्या वातादीन् प्रति नैकमौषधमुपदिशन्ति, किं तु यथायोग्यं विचित्रं, तथा कपिलादीनामपि कालान्तरापायभीरून् शिष्यानधिकृत्योपसर्जनीकृतपर्याया द्रव्यप्रधाना देशना, सुगतादीनां तु भोगास्थापततोऽधिकृत्योपसर्जनीकृतद्रव्या पर्यायप्रधाना देशनेति । न तु तेऽन्वयव्यतिरेकवस्तुवेदिनो न भवन्ति, सर्वज्ञत्वानुपपत्तेः । तदुक्तं—"चित्रा तु देशनैतेषां स्याद्विनेयानुगुण्यतः । यस्मादेते महात्मानो भवव्याधिभिषग्वराः ॥ १ ॥" ॥२७॥

तथैव बीजाधानादेर्यथाभव्यमुपक्रिया । अचिन्त्यपुण्यसामर्थ्यादेकस्या वापि भेदतः ॥ २८ ॥

तथैवेति—तथैव चित्रदेशनयैव । बीजाधानादेर्भवोद्वेगादिभावलक्षणात् । यथाभव्यं भव्यसदृशं । उपक्रिया उपकारो भवति । यदुक्तं—"यस्य येन प्रकारेण बीजाधानादिसंभवः । साधु बन्धो भवत्येते तथा तस्य जगुस्ततः ॥ १ ॥" एकस्या वा तीर्थकरदेशनाया अचिन्त्यपुण्यसामर्थ्यादनिर्वचनीयपरयोगाश्रयोपात्तकर्मविपाकादिभेदतः श्रोतृभेदेन विचित्रतया परिणमनाद्यथाभव्यमुपक्रिया भवतीति न देशनावैचित्र्यात्सर्वज्ञवैचित्र्यसिद्धिः । यदाह—"एकापि देशनैतेषां यद्वा श्रोतृविभेदतः । अचिन्त्यपुण्यसामर्थ्यात्तथा चित्रावभासते ॥ १ ॥ यथाभव्यं च सर्वेषामुपकारोऽपि तत्कृतः । जायतेऽवन्ध्यताप्येवमस्याः सर्वत्र सुस्थिता ॥ २ ॥" ॥ २८ ॥

प्रकारान्तरमाह—

चित्रा वा देशना तत्तन्नयैः कालादियोगतः । यन्मूला तत्प्रतिक्षेपोऽयुक्तो भावमजानतः ॥ २९ ॥

चित्रेति—वाऽथवा । तत्तन्नयैः द्रव्यास्तिकादिभिः । कालादियोगतो दुःषमादियोगमाश्रित्य । यन्मूला यद्वचनानुसारिणी । चित्रा नानारूपा देशना कपिलादीनामृषीणां । तस्य सर्वज्ञस्य प्रतिक्षेपः । भावं तत्तद्देशनानयाभिप्रायमजानतोऽयुक्तः । आर्यापवादस्यानाभोगजस्यापि महापापनिबन्धनत्वात् । तदुक्तं—"यद्वा तत्तन्नयापेक्षा तत्तत्कालादियोगतः । ऋषिभ्यो देशना चित्रा तन्मूलैषापि तत्त्वतः ॥ १ ॥ तदभिप्रायमज्ञात्वा न ततोऽर्वाग्दृशां सताम् । युज्यते तत्प्रतिक्षेपो महानर्थकरः परः ॥ २ ॥ निशानाथप्रतिक्षेपो यथान्धानामसंगतः । तद्भेदपरिकल्पश्च तथैवार्वाग्दृशामयम् ॥३॥ न युज्यते प्रतिक्षेपः सामान्यस्यापि तत्सताम् । आर्यापवादस्तु पुनर्जिह्वाच्छेदाधिको मतः ॥ ४ ॥ कुदृष्ट्यादि च नो सन्तो भाषन्ते प्रायशः क्वचित् । निश्चितं सारवच्चैव किं तु सत्त्वार्थकृत्सदा ॥ ५ ॥" ॥ २९ ॥

तस्मात्सर्वज्ञवचनमनुसृत्यैव प्रवर्तनीयं, न तु तद्विप्रतिपत्त्यानुमानाद्यास्थया स्थेयं, तदननुसारिणस्तस्याव्यवस्थितत्वादित्यत्र भर्तृहरिवचनमनुवदन्नाह—

यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्य एवोपपद्यते ॥ ३० ॥

यत्नेनेति—यत्नेनासिद्धत्वादिदोषनिरासप्रयासेनानुमितोऽप्यर्थः । कुशलैर्व्याप्तिग्रहादिदक्षैरनुमातृभिरभियुक्ततरैरधिकव्याप्त्यादिगुणदोषव्युत्पत्तिकैरन्यैरन्यथैवासिद्धत्वादिनैवोपपद्यते ॥ ३० ॥

अन्युच्चयमाह–

ज्ञायेरन् हेतुवादेन पदार्था यद्यतीन्द्रियाः । कालेनैतावता प्राज्ञैः कृत. स्यात्तेषु निश्चय. ॥ ३१ ॥

ज्ञायेरन्निति–हेतुवादेनानुमानवादेन । यदि अतीन्द्रिया धर्मादयः पदार्था ज्ञायेरन् । तदा एतावता कालेन प्राज्ञैस्तार्किकैः तेषु अतीन्द्रियेषु पदार्थेषु निश्चयः कृतः स्यात्, उत्तरोत्तरतर्कोपपत्तेः ॥ ३१ ॥

तत्कुतर्कग्रहस्त्याज्यो ददता दृष्टिमागमे । प्रायो धर्मा अपि त्याज्याः परमानन्दसंपदि ॥ ३२ ॥

तदिति–तत्तस्मात् कुतर्कग्रहः शुष्कतर्काभिनिवेशः त्याज्यो दृष्टिमागमे ददता । परमानन्दसंपदि मोक्षसुखसंपत्तौ प्रायो धर्मा अपि क्षायोपशमिकाः क्षान्त्यादयस्त्याज्याः । ततः कुतर्कग्रहः सुतरां त्याज्य एव । कस्मिंश्चिदपि ग्रहस्यासंगानुष्ठानप्रतिपन्थित्वेनाश्रेयस्त्वादिति भावः । क्षायिकव्यपदेशार्थं प्रायोग्रहणम् । तदिदमुक्तं–"न चैतदेव यत्तस्माच्छुष्कतर्कग्रहो महान् । मिथ्याभिमानहेतुत्वात्त्याज्य एव मुमुक्षुभिः ॥ १ ॥ ग्रहः सर्वत्र तत्त्वेन मुमुक्षूणामसंगतः । मुक्तौ धर्मा अपि प्रायस्त्यक्तव्याः किमनेन तत् ॥ २ ॥" इति ॥ ३२ ॥

॥ इति कुतर्कग्रहनिवृत्तिद्वात्रिंशिका ॥ २३ ॥

# ॥ अथ सद्दृष्टिद्वात्रिंशिका ॥ २४ ॥

अनन्तरमवेद्यसंवेद्यपदजयात् कुतर्कनिवृत्तिर्भवति, सैव च विधेयेत्युक्तं, अथ तत्फलीभूताः सद्दृष्टीर्विवेचयन्नाह–

**प्रत्याहारः स्थिरायां स्याद्दर्शनं नित्यमभ्रमम् । तथा निरतिचारायां सूक्ष्मबोधसमन्वितम् ॥ १ ॥**

प्रत्याहार इति--स्थिरायां दृष्टौ प्रत्याहारः स्यात् वक्ष्यमाणलक्षणः । तथा निरतिचारायां दर्शनं नित्यमप्रतिपाति, सातिचारायां तु प्रक्षीणनयनपटलोपद्रवस्य तदुत्कोपाद्यनवबोधकल्पमपि भवति, तथातिचारभावात्, रत्नप्रभायामिव-धूल्यादेरुपद्रवः । अभ्रमं भ्रमरहितं । तथा सूक्ष्मबोधेन समन्वितम् ॥ १ ॥

**विषयासंप्रयोगेऽन्तःस्वरूपानुकृतिः किल । प्रत्याहारो हृषीकाणामेतदायत्तताफलः ॥ २ ॥**

विषयेति–विषयाणां चक्षुरादिग्राह्याणां रूपादीनामसंप्रयोगे तद्ग्रहणाभिमुख्यत्यागेन स्वरूपमात्रावस्थाने सति । अन्तः स्वरूपानुकृतिश्चित्तनिरोधनिरोध्यतासंपत्तिः किल । हृषीकाणां चक्षुरादीनामिन्द्रियाणां प्रत्याहारः । यत उक्तं–"स्वविषयासंप्रयोगे चित्त(स्य)स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः" इति (२-५४) । कीदृशोऽयमित्याह–एतदायत्तताफल इन्द्रियवशीकरणैकफलः । अभ्यस्यमाने हि प्रत्याहारे तथायत्तानीन्द्रियाणि भवन्ति यथा बाह्यविषयाभिमुखतां नीयमानान्यपि न यान्तीति । तदुक्तं–"ततः परमा वश्यतेन्द्रियाणामिति" (२-५५) । 

अतो ग्रन्थिविभेदेन विवेकोपेतचेतसाम्। त्रपायै भवचेष्टा स्याद्बालक्रीडोपमाखिला ॥ ३ ॥

अत इति—अतः प्रत्याहारात्। ग्रन्थिविभेदेन विवेकोपेतचेतसां भवचेष्टाऽखिला चक्रवर्त्यादिसुखरूपापि बालक्रीडोपमा बालधूलिगृहक्रीडातुल्या, प्रकृत्यसुन्दरत्वास्थिरत्वाभ्यां त्रपायै स्यात् ॥ ३ ॥

तत्त्वमत्र परंज्योतिर्ज्ञस्वभावैकमूर्तिकम्। विकल्पतल्पमारूढः शेषः पुनरुपप्लवः ॥ ४ ॥

तत्त्वमिति—अत्र स्थिरायां ज्ञस्वभाव एका मूर्तिर्यस्य तत्तथा। ज्ञानादिगुणभेदस्यापि व्यावहारिकत्वात्। परंज्योतिरात्मरूपं तत्त्वं परमार्थसत्। शेषः पुनर्भवप्रपञ्चो विकल्पलक्षणं तल्पमारूढ उपप्लवो भ्रमविषयः, परिदृश्यमानरूपस्याभासात् ॥ ४ ॥

भवभोगिफणाभोगो भोगोऽस्यामवभासते। फलं स्वनात्मधर्मत्वात्तुल्यं यत्पुण्यपापयोः ॥ ५ ॥

भयेति—अस्यां स्थिरायाम्। भोग इन्द्रियार्थसुखसम्बन्धः। भवभोगिफणाभोगः संसारसर्पफणाटोपोऽवभासते, बहुदुःखहेतुत्वात्। नानुपहत्य भूतानि भोगः संभवति, ततश्च पापं, ततो दारुणदुःखपरंपरेति। धर्मप्रभवस्तु भोगो न दुःखदो भविष्यतीत्यत आह—यद्यस्मात् पुण्यपापयोर्द्वयोर्हि फलं अनात्मधर्मत्वात्तुल्यं। व्यवहारतः सुशीलत्वकुशीलत्वाभ्यां द्वयोर्विभेदेऽपि निश्चयतः संसारप्रवेशकत्वेन कुशीलत्वाविशेषात् ॥ ५ ॥

धर्मादपि भवन् भोगः प्रायोऽनर्थाय देहिनाम्। चन्दनादपि संभूतो दहत्येव हुताशनः ॥ ६ ॥

धर्मादिति—धर्मादपि भवन् भोगो देवलोकादौ। प्रायो बाहुल्येन। अनर्थाय देहिनां तत्रात्मप्रमादविधानात्। प्रायोग्रहणं

शुद्धधर्माक्षेपिभोगनिरासार्थं, तस्य प्रमादबीजत्वायोगात् । अत्यन्तानवद्यतीर्थंकरादिफलशुद्धेः पुण्य ( पुष्प ) शुद्ध्यादावागमाग्निनिवेशाद्धर्मसारचित्तोपपत्तेरिति । सामान्यतो दृष्टान्तमाह–चन्दनादपि तथाशीतप्रकृतेः संभूतो दहत्येव हुताशनः । दहनस्य दाहस्वभावापरावृत्तेः । प्राय एतदेवं न दहत्यपि कश्चित्सत्यमंत्राग्निसंस्कृताद्दाहासिद्धेः सकललोकसिद्धत्वादिति वदति । युक्तं चैतन्निश्चयतो येनांशेन ज्ञानादिकं तेनांशेनाबन्धनमेव, येन च प्रमादादिकं तेन बन्धनमेव । सम्यक्त्वादीनां तीर्थंकरनामकर्मादिबन्धकत्वस्यापि तदविनाभूतयोगकषायगतस्योपचारेणैव संभवात् । इन्द्रियार्थसंबन्धादिकं तूदासीनमेवेत्यन्यत्र विस्तरः ॥ ६ ॥

**स्कन्धात्स्कन्धान्तरारोपे भारस्येव न तात्त्विकी । इच्छाया विरतिर्भोगात्तत्संस्कारानतिक्रमात् ॥ ७ ॥**

स्कन्धादिति–स्कन्धात् स्कन्धान्तरारोपे भारस्येव भोगादिच्छाया विरतिर्न तात्त्विकी । तत्संस्कारस्य कर्मबन्धजनितानिष्टभोगसंस्कारस्यानतिक्रमात् । तदतिक्रमो हि प्रतिपक्षभावनया तत्तनूकरणेन स्यात् । न तु विच्छेदेन प्रसुप्ततामात्रेणेति । इत्थं भोगासारताविभावनेन स्थिरायां स्थैर्यमुपजायते। सत्यामस्यामपरैरपि योगाचार्यैरलौल्यादयो गुणाः प्रोच्यन्ते। यथोक्तं–"अलौल्यमारोग्यमनिष्ठुरत्वं, गन्धः शुभो मूत्रपुरीषमल्पम् । कान्तिः प्रसादः स्वरसौम्यता च, योगप्रवृत्तेः प्रथमं हि चिह्नम् ॥ १ ॥ मैत्र्यादियुक्तं विषयेषु चेतः, प्रभाववद्धैर्यसमन्वितं च । द्वन्द्वैरधृष्यत्वमभीष्टलाभो, जनप्रियत्वं च तथा परं स्यात् ॥ २ ॥ दोषव्यपायः परमा च तृप्तिरौचित्ययोगः समता च गुर्वी । वैरादिनाशोऽथ ऋतंभराधीर्निष्पन्नयोगस्य तु चिह्नमेतत् ॥ ३ ॥" इति । इहाप्येतदकृत्रिमं गुणजातमित एवारभ्य विज्ञेयम् ॥ ७ ॥

**धारणा प्रीतयेऽन्येषां कान्तायां नित्यदर्शनम्। नान्यमुत् स्थिरभावेन मीमांसा च हितोदया ॥ ८ ॥**

धारणेति–कान्तायामुक्तरीत्या नित्यदर्शनं। तथा धारणा वक्ष्यमाणलक्षणा। अन्येषां प्रीतये भवति। तथा स्थिरभावेन नान्यमुत् नान्यत्र हर्षः तदा तत्प्रतिभासाभावात्। हितोदया सम्यग्ज्ञानफला मीमांसा च सद्विचारात्मिका भवति॥८॥

**देशबन्धो हि चित्तस्य धारणा तत्र सुस्थितः। प्रियो भवति भूतानां धर्मैकाग्रमनास्तथा ॥ ९ ॥**

देशेति–देशे नाभिचक्रनासाग्रादौ बन्धो विषयान्तरपरिहारेण स्थिरीकरणात्मा हि चित्तस्य धारणा। यदाह–"देशबन्धश्चित्तस्य धारणा" ३–१। तत्र धारणायां सुस्थितः मैत्र्यादिचित्तपरिकर्मवासितान्तःकरणतया, स्वभ्यस्तयमनियमतया, जितासनत्वेन परिहृतप्राणविक्षेपतया, प्रत्याहृतेन्द्रियग्रामत्वेन ऋजुकायतया, जितद्वन्द्वतया, सम्प्रज्ञाताभ्यासाविष्टतया च सम्यग्व्यवस्थितः। भूतानां जगल्लोकानां प्रियो भवति। तथा धर्मैकाग्रमना भवति ॥ ९ ॥

**अस्यामाक्षेपकज्ञानान्न भोगा भवहेतवः। श्रुतधर्मे मनोयोगाच्चेष्टाशुद्धेर्यथोदितम् ॥ १० ॥**

अस्यामिति–अस्यां कान्तायां। कायचेष्टाया अन्यपरत्वेऽपि। श्रुतधर्मे आगमे। मनोयोगाश्रित्य मनःसम्बन्धात्। आक्षेपकज्ञानाश्रित्यप्रतिबन्धरूपचित्ताक्षेपकारिज्ञानात्। न भोगा इन्द्रियार्थसम्बन्धा भवहेतवो भवन्ति। चेष्टायाः प्रवृत्तेः शुद्धेः मनोनैर्मल्यात्। यथोदितं हरिभद्रसूरिभिर्योगदृष्टिसमुच्चये ॥ १० ॥

**मायाम्भस्तत्त्वतः पश्यन्नुद्विग्नस्ततो द्रुतम्। तन्मध्येन प्रयात्येव यथा व्याघातवर्जितः ॥ ११ ॥**

मायांभ इति–मायांभसतत्त्वतो मायांभस्त्वेनैव पश्यन् अनुद्विग्नः । ततो मायांभसो द्रुतं शीघ्रं । तन्मध्येन मायांभोमध्येन प्रयात्येव, न न प्रयाति । यथेत्युदाहरणोपन्यासार्थः । व्याघातवर्जितो मायांभसस्तत्त्वेन व्याघातासमर्थत्वात्॥११॥

भोगान् स्वरूपतः पश्यंस्तथा मायोदकोपमान् । भुञ्जानोऽपि ह्यसंगः सन् प्रयात्येव परं पदम् ॥ १२॥

भोगानिति–भोगानिन्द्रियार्थसंबन्धान् स्वरूपतः पश्यन् समारोपमन्तरेण । तथा तेनैव प्रकारेण । मायोदकोपमानसारान् भुञ्जानोऽपि हि कर्माक्षिप्तान् असंगः सन् प्रयात्येव परं पदं तथाऽनभिष्वंगतयाऽपरवशभावात् ॥ १२ ॥

भोगतत्त्वस्य तु पुनर्न भवोदधिलङ्घनम् । मायोदकदृढावेशस्तेन यातीह कः पथा ॥ १३ ॥

भोगेति–भोगतत्त्वस्य तु भोगं परमार्थतया पश्यतस्तु न भवोदधिलंघनं । मायोदकदृढावेशः तथाविपर्यासात् । तेन यातीह कः पथा यत्र मायायामुदकबुद्धिः ॥ १३ ॥

स तत्रैव भवोद्विग्नो यथा तिष्ठत्यसंशयम् । मोक्षमार्गेऽपि हि तथा भोगजंबालमोहितः ॥ १४ ॥

स इति–स मायायामुदकसमावेशः । तत्रैव पथि । भवोद्विग्नः सन् । यथेत्युदाहरणोपन्यासार्थः । तिष्ठत्यसंशयं तिष्ठत्येव जलबुद्धिसमावेशात् । मोक्षमार्गेऽपि हि ज्ञानादिलक्षणे तिष्ठत्यसंशयं । भोगजंबालमोहितो भोगनिबन्धनदेहादिप्रपञ्चमोहित इत्यर्थः ॥ १४ ॥

धर्मशक्तिं न हन्त्यस्यां भोगशक्तिर्बलीयसीम् । हन्ति दीपापहो वायुर्ज्वलन्तं न दवानलम् ॥ १५ ॥

धर्मशक्तिमिति—अस्यां कान्तायाः। कर्माक्षिप्तस्येन निर्बला भोगशक्तिः। अनवरतस्वरसप्रवृत्तत्वेन बलीयसीं धर्मशक्तिं न हन्ति। विरोधिनोऽपि निर्बलस्याकिंचित्करत्वात्। अत्र दृष्टान्तमाह—दीपापहो दीपविनाशको वायुर्यथा ज्वलन्तं दवानलं न हन्ति। प्रत्युत बलीयसस्तस्य सहायतामेवावलंबते। इत्थमत्र धर्मशक्तेरपि बलीयस्या अवश्यभोग्यकर्मोदये भोगशक्तिः सहायतामेवावलंबते न तु निर्बलत्वेन तां विरुणद्धीति। यद्यपि स्थिरायामपि ज्ञानापेक्षया भोगानामकिंचित्करत्वमेव, तथापि सदां (दं)शे प्रमादसहकारित्वमपि तेषां। कान्तायां तु धारणया ज्ञानोत्कर्षात्तु तथात्वमपि तेषां। गृहिणोऽप्येवंविधदशायामुपचारतो यतिभाव एव। चारित्रमोहोदयमात्रात्केवलं न संयमस्थानलाभः। न तु तद्विरोधिपरिणामक्लेशतोऽपीत्याचार्याणामाशयः ॥ १५ ॥

मीमांसा दीपिका चास्यां मोहध्वान्तविनाशिनी। तत्त्वालोकेन तेन स्यान्न कदाप्यसमञ्जसम् ॥ १६ ॥

मीमांसेति—मीमांसा सद्विचारणा दीपिका चास्यां कान्तायां। मोहध्वान्तविनाशिनी अज्ञानतिमिरापहारिणी। तत्त्वालोकेन परमार्थप्रकाशेन। तेन कारणेन। न कदाप्यसमञ्जसं स्यात्। अज्ञाननिमित्तको हि तद्भाव इति ॥ १६ ॥

ध्यानसारा प्रभा तत्त्वप्रतिपत्तियुता रुजा। वर्जिता च विनिर्दिष्टा सत्प्रवृत्तिपदावहा ॥ १७ ॥

ध्यानेति—ध्यानेन सारा रुचिरा प्रभा। तत्त्वप्रतिपत्त्या यथास्थितात्मानुभवलक्षणया युता। रुजा वर्जिता। वक्ष्यमाणलक्षणसत्प्रवृत्तिपदावहा च विनिर्दिष्टा ॥ १७ ॥

**चित्तस्य धारणादेशे प्रत्ययस्यैकतानता। ध्यानं ततः सुखं सारमात्मायत्तं प्रवर्तते ॥ १८ ॥**

चित्तस्येति–चित्तस्य मनसो धारणादेशे धारणाविषये। प्रत्ययस्यैकतानता विसदृशपरिणामपरिहारेण सदृशपरिणामधाराबन्धो ध्यानं। यदाह–"तत्र प्रत्ययैकतानता ध्यानं" इति ( ३–२ )। ततस्तस्मात् सुखं सारमुत्कृष्टं। आत्मायत्तं परानधीनं प्रवर्तते ॥ १८ ॥

**सर्वं परवशं दुःखं सर्वमात्मवशं सुखम्। एतदुक्तं समासेन लक्षणं सुखदुःखयोः ॥ १९ ॥**

सर्वमिति–सर्वं परवशं पराधीनं दुःखं, तल्लक्षणयोगात्। सर्वमात्मवशमपराधीनं सुखं। अत एव हेतोः। एतदुक्तं मुनिना। संक्षेपेण समासेन। लक्षणं स्वरूपं सुखदुःखयोः। इत्थं च ध्यानजमेव तत्त्वतः सुखं, न तु पुण्योदयभवमपीत्यावेदितं भवति। तदाह–"पुण्यापेक्षमपि ह्येवं सुखं परवशं स्थितम्। ततश्च दुःखमेवैतद्ध्यानजं तात्त्विकं सुखम्॥१॥"॥१९॥

**ध्यानं च विमले बोधे सदैव हि महात्मनाम्। सदा प्रसृमरोऽनभ्रे प्रकाशो गगने विधोः ॥ २० ॥**

ध्यानं चेति–विमले बोधे च सति महात्मनां सदैव हि ध्यानं भवति। तस्य तन्नियतत्वात्। दृष्टान्तमाह–अनभ्रेऽभ्ररहिते गगने विधोरुदितस्य प्रकाशः सदा प्रसृमरो भवति, तथावस्थास्वाभाव्यादिति ॥ २० ॥

**सत्प्रवृत्तिपदं चेहासंगानुष्ठानसंज्ञितम्। संस्कारतः स्वरसतः प्रवृत्त्या मोक्षकारणम् ॥ २१ ॥**



सदिति–सत्प्रवृत्तिपदं चेह प्रभायामसंगानुष्ठानसंज्ञितं भवति। संस्कारतः प्राच्यप्रयत्नजात् स्वरसत इच्छानैरपेक्ष्येण।

प्रवृत्त्या प्रकृष्टवृत्त्या । मोक्षकारणं । यथा दण्डचक्रनोदनानन्तरमुत्तरभ्रमिसन्तानस्तत्संस्कारानुवेधादेव भवति, तथा प्रथमाभ्यासाख्यानानन्तरं तत्संस्कारानुवेधादेव, तत्सदृशपरिणामप्रवाहोऽसंगानुष्ठानसंज्ञो जायत इति भावार्थः ॥ २१ ॥

प्रशान्तवाहितासंज्ञं विसभागपरिक्षयः । शिववर्त्म ध्रुवाध्वेति योगिभिर्गीयते ह्यदः ॥ २२ ॥

प्रशान्तेति–प्रशान्तवाहितासंज्ञं सांख्यानां । विसभागपरिक्षयो बौद्धानां । शिववर्त्म शैवानां । ध्रुवाध्वा महाव्रतिकानां । इत्येवं हि योगिभिरदोऽसंगानुष्ठानं गीयते ॥ २२ ॥

प्रशान्तवाहिता वृत्तेः संस्कारात् स्यान्निरोधजात् । प्रादुर्भावतिरोभावौ तद्व्युत्थानजयोरयम् ॥ २३ ॥

प्रशान्तेति–प्रशान्तवाहिता परिहृतविक्षेपतया सदृशप्रवाहपरिणामिता । वृत्तेर्वृत्तिमयस्य चित्तस्य निरोधजात् संस्कारात् स्यात् । तदाह–"तस्य प्रशान्तवाहिता संस्कारात्" ( ३ १० ) । कोऽयं निरोध एवेत्यत आह–तद्व्युत्थानजयोर्निरोधजव्युत्थानजयोः संस्कारयोः प्रादुर्भावतिरोभावौ वर्तमानाध्वाभिव्यक्तिकार्यकरणासामर्थ्यावस्थालक्षणौ अयं निरोधः । चलत्वेऽपि गुणवृत्तस्योभयक्षयवृत्तित्वान्वयेन चित्तस्य तथाविधस्थैर्यमादाय निरोधपरिणामशब्दव्यवहारात् । तदुक्तं–"व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः" इति (३-९ ) ॥२३॥

सर्वार्थतैकाग्रतयोः समाधिस्तु क्षयोदयौ । तुल्यावेकाग्रता शान्तोदितौ च प्रत्ययाविह ॥ २४ ॥

सर्वार्थतेति–सर्वार्थता चलत्वान्नानाविधार्थग्रहणं । चित्तस्य विक्षेपो धर्म एकाग्रता एकस्मिन्नेवालम्बने सदृशपरिणा-

मिता तयोः । क्षयोदयौ तु अत्यन्ताभिभवाभिव्यक्तिलक्षणौ समाधिरुद्रिक्तसत्त्वचित्तान्वयितयाऽवस्थितः समाधिपरिणामोऽभिधीयते । यदुक्तं–"सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः" इति ( ३-११ ) । पूर्वत्र विक्षेपस्याभिभवमात्रं, इह त्वत्यन्ताभिभवोऽनुत्पत्तिरूपोऽतीताध्वप्रवेश इत्यनयोर्भेदः । इहाधिकृतदर्शने तुल्यावेकरूपालंबनत्वेन सदृशौ । शान्तोदितौ अतीताध्वप्रविष्टवर्तमानाध्वस्फुरितलक्षणौ च प्रत्ययौ एकाग्रता उच्यते समाहितचित्तान्वयिनी । तदुक्तं–"शान्तोदितौ हि तु ( तौ तु ) ल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः" ( ३-१२ ) । न चैवमन्वयव्यतिरेकवस्त्वसंभवः, यतोऽन्यत्रापि धर्मलक्षणावस्थापरिणामा दृश्यन्ते, तत्र धर्मिणः पूर्वधर्मनिवृत्तावुत्तरधर्मापत्तिर्धर्मपरिणामः । यथा मृल्लक्षणस्य धर्मिणः पिंडरूपधर्मपरित्यागेन घटरूपधर्मान्तरस्वीकारः । लक्षणपरिणामश्च यथा तस्यैव घटस्यानागताध्वपरित्यागेन वर्तमानाध्वस्वीकारः, तत्परित्यागेन वाऽतीताध्वपरिग्रहः । अवस्थापरिणामश्च यथा तस्य घटस्य प्रथमद्वितीययोः क्षणयोः सदृशयोरन्वयित्वेन चलगुणवृत्तीनां गुणपरिणामनं धर्मा च शान्तोदितेषु शक्तिरूपेण स्थितेषु सर्वत्र सर्वात्मकत्वव्यपदेशेषु धर्मेषु कथञ्चिद्भिन्नेष्वन्वयी दृश्यते । यथा पिंडघटादिषु मृदेव प्रतिक्षणमन्यान्यत्वाद्विपरिणामान्यत्वं । तत्र केचित्परिणामाः प्रत्यक्षेणैवोपलक्ष्यन्ते यथा सुखादयसंस्थानादयो वा । केचिच्चानुमानगम्या यथा कर्मसंस्कारशक्तिप्रभृतयः । धर्मिणश्च भिन्नाभिन्नरूपतया सर्वत्रानुगम इति न काचिदनुपपत्तिः । तदिदमुक्तं–"एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ( ३-१३ )" शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ( ३-१४ ) "क्रमान्यत्वं परिणामान्यत्वे हेतुरिति ( ३-१५ )" ॥ २४ ॥

अस्यां व्यवस्थितो योगी त्रयं निष्पादयत्यदः । ततश्चेयं विनिर्दिष्टा सत्प्रवृत्तिपदावहा ॥ २५ ॥

अस्यामिति-अस्यां प्रज्ञायां व्यवस्थितो योगी त्रयमदो निरोधसमाध्येकाग्रताख्यं निष्पादयति साधयति । ततश्चेयं प्रज्ञा सत्प्रवृत्तिपदावहा विनिर्दिष्टा, सर्वैः प्रकारैः प्रशान्तवाहितायाः एव सिद्धेः ॥ २५ ॥

समाधिनिष्ठा तु परा तदासंगविवर्जिता । सात्मीकृतप्रवृत्तिश्च तदुत्तीर्णाशयेति च ॥ २६ ॥

समाधीति-परा तु दृष्टिः समाधिनिष्ठा वक्ष्यमाणलक्षणसमाध्यासक्ता । तदासंगेन समाध्यासंगेन विवर्जिता । सात्मीकृतप्रवृत्तिश्च सर्वांगीणैकत्वपरिणतप्रवृत्तिश्च चन्दनगन्धन्यायेन । तदुत्तीर्णाशयेति च सर्वथा विशुद्ध्या प्रवृत्तियासक्तचित्ताभावेन २६

स्वरूपमात्रनिर्भासं समाधिर्ध्यानमेव हि । विभागमनतिक्रम्य परे ध्यानफलं विदुः ॥ २७ ॥

स्वरूपेति-स्वरूपमात्रस्य ध्येयस्वरूपमात्रस्य निर्भासो यत्र तत्तथा । अर्थाकारसमावेशेन भूतार्थरूपतया न्यग्भूतज्ञानस्वरूपतया च ज्ञानस्वरूपशून्यतापत्तेः ध्यानमेव हि समाधिः । तदुक्तं-"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" इति ( ३ ३ ) । विभागमष्टांगो योग इति प्रसिद्धमनतिक्रम्यानुल्लंघ्य परे ध्यानफलं समाधिरिति विदुः ॥ २७ ॥

निराचारपदो ह्यस्यामतिचारविवर्जितः स्यान्नातिचारभाक् । चेष्टा चास्याखिला भुक्तभोजनाभाववन्मता ॥ २८ ॥

निराचारेति-अस्यां दृष्टौ योगी नातिचारभाक् स्यात् तन्निबन्धनाभावात् । अतो निराचारपदः प्रतिक्रमणाद्यभावात् । चेष्टा चास्यैतद्दृष्टिमतोऽखिला भुक्तभोजनाभाववन्मता आचारजेयकर्माभावात् तस्य भुक्तप्रायत्वात्सिद्धत्वेन तदिच्छाविघटनात् ॥ २८ ॥

## ॥ अथ क्लेशहानोपायद्वात्रिंशिका ॥ २५ ॥

सद्दृष्टिनिरूपणानन्तर ज्ञानक्रियामिश्रतयैवैता क्लेशहानोपायजता नयन्ति नान्यथेति त्रियेषयन्नाह–

ज्ञानं च सदनुष्ठान सम्यक् सिद्धान्तवेदिन । क्लेशाना कर्मरूपाणां हानोपायं प्रचक्षते ॥ १ ॥

ज्ञानं चेति–सज्ज्ञानं सदनुष्ठान च सम्यगवैपरीत्येन सिद्धान्तवेदिनः कर्मरूपाणा क्लेशानां हानोपायं त्यागसामग्री प्रचक्षते प्रकथयन्ति "संजोगसिद्धीइ फलं वयंति" इत्यादिग्रन्थेन ॥ १ ॥

नैरात्म्यदर्शनादन्ये निबन्धनवियोगत. । क्लेशप्रहाणमिच्छन्ति सर्वथा तर्कवादिन. ॥ २ ॥

नैरात्म्येति–नैरात्म्यदर्शनात् सर्वत्रैवात्माजायावलोकनात् । अन्ये बौद्धा निबन्धनवियोगतो निमित्तपरिहारात् । क्लेशप्रहाणं तृष्णाहानिलक्षणमिच्छन्ति । सर्वथा सर्वः प्रकारैस्तर्कवादिन', न तु शास्त्रानुसारिण ॥ २ ॥

( अ ) त एव स्वमत पुरस्कर्तुमाहु'–

समाधिराज एतच्च तदेतत्तत्त्वदर्शनम् । आग्रहच्छेदकार्येतत्तदेतदमृतं परम् ॥ ३ ॥

समाधिराज इति–समाधिराजः सर्वयोगाग्रेसरत्वात् । एतच्च नैरात्म्यदर्शनं । तदेतत्तत्त्वदर्शनं परमार्थावलोकनवः । आग्रहच्छेदकारि मूर्छाविच्छेदकं । एतत्तदेतदमृत पीयूष परं नायकपम् ॥ ३ ॥

**जन्मयोनिर्यतस्तृष्णा ध्रुवा सा चात्मदर्शने । तदभावे च नेयं स्याद्बीजाभाव इवाङ्कुरः ॥ ४ ॥**

जन्मेति–यद्यस्मात्तृष्णा लोभलक्षणा जन्मयोनिः पुनर्भवहेतुः । ध्रुवा निश्चिता । सा च तृष्णा आत्मदर्शनेऽहमस्मीति निरीक्षणरूपे । तदभावे आत्मदर्शनाभावे च । नेयं तृष्णा स्यात् । अंकुर इव बीजाभावे ॥ ४ ॥

**न ह्यपश्यन्नहमिति स्निह्यत्यात्मनि कश्चन । न चात्मनि विना प्रेम्णा सुखहेतुषु धावति ॥ ५ ॥**

न हीति–न नैव । हिर्यस्मात् । अपश्यन्ननिरीक्षमाणः अहमित्युल्लेखेन । स्निह्यति स्नेहवान् भवति । आत्मनि विषयभूते । कश्चन बुद्धिमान् । न चात्मनि प्रेम्णा विना । सुखहेतुषु धावति प्रवर्तते कश्चन । तस्मादात्मदर्शनस्य वैराग्यप्रतिपन्थित्वान्नैरात्म्यदर्शनमेव मुक्तिहेतुरिति सिद्धम् ॥ ५ ॥

एतद्दूषयति–

**नैरात्म्यायोगतो नैतदभावक्षणिकत्वयोः । आद्यपक्षेऽविचार्यत्वाद्धर्माणां धर्मिणं विना ॥ ६ ॥**

नैरात्म्येति–एतदन्येषां मतं न युक्तं । अभावक्षणिकत्वयोरर्थादात्मना विकल्पमानयोः सतोर्नैरात्म्यायोगतः । आद्यपक्षे आत्मनोऽभावपक्षे धर्मिणमात्मानं विना धर्माणां सदनुष्ठानमोक्षादीनामविचार्यत्वाद्विचारायोग्यत्वात् । न हि वन्ध्यासुताभावे तद्गतान् सुरूपकुरूपत्वादीन् विशेषांश्चिन्तयितुमारभते कश्चिदिति ॥ ६ ॥

**वक्राद्यभावतश्चैव कुमारीसुतबुद्धिवत् । विकल्पस्याप्यशक्यत्वादुक्तं वस्तु विना स्थितम् ॥ ७ ॥**

यज्ञादीति–यज्ञादीनां नैरात्म्यप्रतिपादकतद्ग्रन्थादीनामज्ञायतश्चैव । आद्यपक्षे नैरात्म्यायोगतो नैतदिति संबन्धः । ज्ञान-यादिसते स्यात्–कुमारीसुतबुद्धिवत् अकृतविवाहस्त्रीपुत्रज्ञानवत् । विकल्पस्यापि प्रतिपादकादिगतस्य स्थितं वस्तु विना यकृमशक्यत्वात् । कुमारीसुतबुद्धिरपि हि प्रसिद्धयोः कुमारीसुतपदार्थयोः संबन्धमेवारोपितमवगाहते । प्रकृते त्वात्मन एवाभावात्प्रतिपादकादिव्यपदेशो निर्मूल एव । क्वचित्प्रमितस्यैव क्वचिदारोप्यत्वात् । इत्थं च–“ यथा कुमारी स्वप्ना-न्तरेऽस्मिन् जातं च पुत्रं विगतं च पश्येत् । जाते च हृष्टाऽपगते विषण्णा तथोपमान् जानत सर्वधर्मान् ॥ १ ॥ ” इत्यादि परेषां शास्त्रमपि संसारासारतार्थवादमात्रपरतयैवोपयुज्यते इति द्रष्टव्यम् ॥ ७ ॥

द्वितीयेऽपि क्षणादूर्ध्वं नाशादन्याप्रसिद्धितः । अन्यथोत्तरकार्यार्हभावाविच्छेदतोऽन्वयात् ॥ ८ ॥

द्वितीयेऽपीति–द्वितीयेऽपि पक्षे नैरात्म्यायोगतो नैतदिति संबन्धः । क्षणादूर्ध्वं क्षणिकस्यात्मनो नाशात् अन्यस्यान्तरक्षणस्याप्रसिद्धितः आत्माश्रयानुष्ठानफलाद्यनुपपत्तेः । अन्यथा भावादेव भावाभ्युपगमे, उत्तरकार्यं प्रत्यग्रभावेन परिणामिभावेनाविच्छेदतोऽन्वयात् पूर्वक्षणस्यैव कथञ्चिद्भावीभूतस्य तथापरिणमने क्षणान्वयानुवृत्तिध्रौव्यात् । सर्वथाऽसतः खरविषाणादेरिवोत्तरभावपरिणमनशक्त्यभावात्तत्क्षणान्तरसामग्रीसंपत्तेरतियोग्यताविशिष्टशक्त्यैवोपपत्तेरिति ॥ ८ ॥

किं च क्षणिको ह्यात्माभ्युपगम्यमानः स्वनिवृत्तिस्वभावः स्यात्, उतान्यजननस्वभावः, उताहो उभयस्वभावः ? इति त्रयी गतिः, तत्राद्यपक्षे आह–

स्वनिवृत्तिस्वभावत्वे न क्षणस्यापरोदयः । अन्यजन्मस्वभावत्वे स्वनिवृत्तिरसंगता ॥ ९ ॥

स्वनिवृत्तीति–स्वनिवृत्तिस्वभावत्वे क्षणस्यात्मक्षणस्य अभ्युपगम्यमाने । नापरोदयः सदृशोत्तरक्षणोत्पादः स्यात् । पूर्वक्षणस्योत्तरक्षणजननास्वभावत्वात् । द्वितीये त्वाह–अन्यजन्मस्वभावत्वे सदृशापरक्षणोत्पादकस्वभावत्वे स्वनिवृत्तिरसंगता, तदजननस्वभावत्वादेव ॥ ९ ॥

तृतीये त्वाह–

**उभयैकस्वभावत्वे न विरुद्धोऽन्वयोऽपि हि । न च तद्धेतुकः स्नेहः किं तु कर्मोदयोद्भवः ॥ १० ॥**

उभयेति–उभयैकस्वभावत्वे स्वनिवृत्तिसदृशापरक्षणोभयजननैकस्वभावत्वेऽन्वयोऽपि हि न विरुद्धः । यदेव किञ्चिन्निवर्तते तदेवापरक्षणजननस्वभावमितिशब्दार्थान्यथानुपपत्त्यैवान्वयसिद्धेरुक्तोभयैकस्वभावत्ववत्पूर्वापरकालसंबन्धैकस्वभावत्वस्याप्यविरोधात् । इत्थमेव प्रत्यभिज्ञाक्रियाफलसामानाधिकरण्यादीनां निरुपचरितानामुपपत्तेरिति निर्लोठितमन्यत्र । न च तद्धेतुक आत्मदर्शनहेतुकः स्नेहः किं तु कर्मोदयोद्भवो मोहनीयकर्मोदयनिमित्तकः । अतो नायमात्मदर्शनापराध इति भावः ॥ १० ॥

ननु यद्यप्यात्मदर्शनमात्रनिमित्तको न स्नेहः, क्षणिकस्याप्यात्मनः स्वसंवेदनप्रत्यक्षेण समवलोकनात्तदुद्भवप्रसंगात्, किं तु ध्रुवात्मदर्शनतो नियत एव स्नेहोद्भवस्तज्जतागामिकालसुखदुःखावाप्तिपरिहारचिन्तावश्यकत्वादित्यत्राह–

**ध्रुवेक्षणेऽपि न प्रेम निवृत्तमनुपप्लवात् । ग्राह्याकार इव ज्ञानेऽन्यथा तत्रापि तद्भवेत् ॥ ११ ॥**

**बलान्नश्यत्यविद्यास्या उत्तरेषामियं पुनः । प्रसुप्ततनुविच्छिन्नोदाराणां क्षेत्रमिष्यते ॥ १३ ॥**

बलादिति—अस्या विवेकख्यातेर्बलादविद्या नश्यति । इयमविद्या पुनरुत्तरेषामस्मितादीनां क्लेशानां प्रसुप्ततनुविच्छिन्नोदाराणां क्षेत्रमिष्यते । तदुक्तं—"अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणामिति" ( २-४ ) ॥ १३ ॥

**स्वकार्यं नारभन्ते ये चित्तभूमौ स्थिता अपि । विना प्रबोधकबलं ते प्रसुप्ताः शिशोरिव ॥ १४ ॥**

स्वकार्यमिति—ये क्लेशाश्चित्तभूमौ स्थिता अपि स्वकार्यं नारभन्ते । विना प्रबोधकस्योद्बोधकस्य बलमुद्रेकं । ते क्लेशाः प्रसुप्ताः शिशोरिव बालकस्येव ॥ १४ ॥

**भावनात्प्रतिपक्षस्य शिथिलीकृतशक्तयः । तनवोऽतिबलापेक्षा योगाभ्यासवतो यथा ॥ १५ ॥**

भावनादिति—भावनादभ्यासात् । प्रतिपक्षस्य स्वविरोधपरिणामलक्षणस्य । शिथिलीकृता कार्यसंपादनं प्रति शक्तिर्येषां ते तथा । तनवो वासनावरोधतया चेतस्यवस्थिताः, न तु बालस्येवानवरुद्धवासनात्मना । अतिबलापेक्षाः स्वकार्यारंभे प्रभूतसामग्रीसापेक्षाः, न तूद्बोधकमात्रापेक्षाः । योगाभ्यासवतो यथा रागादयः क्लेशाः ॥ १५ ॥

**अन्येनोच्चैर्बलवताभिभूतस्वीयशक्तयः । तिष्ठन्तो हन्त विच्छिन्ना रागो द्वेषोदये यथा ॥ १६ ॥**

अन्येनेति—अन्येन स्वातिरिक्तेन । उच्चैर्बलवता अतिशयितबलेन क्लेशेन । अभिभूतस्वीयशक्तयस्तिष्ठन्तो हन्त विच्छिन्नाः क्लेशा उच्यन्ते । यथा रागो द्वेषोदये । न हि रागद्वेषयोः परस्परविरुद्धयोर्युगपत्संभवोऽस्तीति ॥ १६ ॥

सर्वेषां सन्निधिं प्राप्ता उदाराः सहकारिणाम् । निर्वर्तयन्तः स्वं कार्यं यथा व्युत्थानवर्तिनः ॥ १७ ॥

सर्वेषामिति—सर्वेषां सहकारिणां सन्निधिं सन्निकर्षं प्राप्ताः स्वं कार्यं निर्वर्तयन्त उदारा उच्यन्ते । यथा व्युत्थानवर्तिनो योगप्रतिपन्थिदशावस्थिताः ॥ १७ ॥

अविद्या चास्मिता चैव रागद्वेषौ तथापरौ । पञ्चमोऽभिनिवेशश्च क्लेशा एते प्रकीर्तिताः ॥ १८ ॥

अविद्या चेति—क्लेशानां विभागोऽयं । तदुक्तं—" अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशा इति " ( २-३ ) ॥ १८ ॥

विपर्यासात्मिकाविद्यास्मिता दृग्दर्शनैकता । रागस्तृष्णा सुखोपाये द्वेषो दुःखाङ्गनिन्दनम् ॥ १९ ॥

विपर्यासात्मिकेति—विपर्यासोऽतस्मिंस्तद्ग्रहस्तदात्मिकाऽविद्या । यथाऽनित्येषु घटादिषु नित्यत्वस्य, अशुचिषु कायादिषु शुचित्वस्य, दुःखेषु विषयेषु सुखरूपस्य, अनात्मनि च शरीरादावात्मत्वस्य अभिमानः । तदुक्तं—" अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्येति " ( २-५ ) । दृग्दर्शनयोः पुरुषरजस्तमोऽनभिभूतसात्त्विकपरिणामयोः भोक्तृभोग्यत्वेनावस्थितयोरेकताऽस्मिता । तदुक्तं—" दृग्दर्शनशक्त्योरेकात्मतैवास्मिता " ( २-६ ) । सुखोपाये सुखसाधने तृष्णा सुखज्ञस्य सुखानुस्मृतिपूर्वो लोभपरिणामो रागः । तदुक्तं—" सुखानुशयी रागः " इति ( २-७ ) । दुःखाङ्गानां दुःखकारणानां निन्दनं दुःखाभिज्ञस्य तदनुस्मृतिपूर्वकं विगर्हणं द्वेषः । यत उक्तं—" दुःखानुशयी द्वेषः " इति ( २-८ ) ॥ १९ ॥

विदुषोऽपि तथारूढः सदा स्वरसवृत्तिकः । शरीराद्यवियोगस्याभिनिवेशोऽभिलाषतः ॥ २० ॥

विद्वुषोऽपीति–विदुषोऽपि पण्डितस्यापि तथारूढः पूर्वजन्मानुभूतमरणदुःखाभाववासनावलाद्भयः समुपजायमानः । शरीरादीनामवियोगस्याभिलाषतः शरीरादिवियोगो मे मा भूदित्येवंलक्षणादभिनिवेशो भवति । सदा निरन्तरं स्वरसवृत्तिकोऽनिच्छाधीनप्रवृत्तिकः । तदुक्तं–" स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः " इति ( २-९ ) ॥ २० ॥

**एभ्यः कर्माशयो दृष्टादृष्टजन्मानुभूतिभाक् । तद्विपाकश्च जात्यायुर्भोगाख्यः संप्रवर्तते ॥ २१ ॥**

एभ्य इति–एभ्य उक्तेभ्योऽविद्यादिभ्यः क्लेशेभ्यः कर्माशयो भवति । दृष्टादृष्टजन्मनोरनुभूतिं भजति यः स तथा । तद्विपाकः कर्मविपाकश्च जात्यायुर्भोगाख्यः संप्रवर्तते निरूपिततत्त्वमेतत् ॥ २१ ॥

**परिणामाच्च तापाच्च संस्काराद्विविधोऽप्ययम् । गुणवृत्तिविरोधाच्च हन्त दुःखमयः स्मृतः ॥ २२ ॥**

परिणामाच्चेति–अयं कर्मविपाको दुःखाह्लादफलत्वेन द्विविधोऽपि ' ते ह्लादपरितापफलाः ' २-१४ (पुण्यापुण्यहेतुत्वात्) इत्यत्र तच्छब्दपरामृष्टानां जात्यायुर्भोगानां द्वैविध्यश्रवणात् । परिणामाच्च यथोत्तरं गर्धाभिवृद्धेस्तदप्राप्तिकृतदुःखापरिहारलक्षणाद्दुःखान्तरजननलक्षणाच्च । तापाच्च उपभुज्यमानेषु सुखसाधनेषु सुखानुभवकालेऽपि सदावस्थिततत्प्रतिपन्थिद्वेषलक्षणात् । संस्काराच्च अभिमतानभिमतविषयसन्निधाने सुखदुःखसंविदोरुपजायमानयोः स्वक्षेत्रे तथाविधसंस्कारतथाविधानुभवपरंपरया संस्कारानुच्छेदलक्षणात् । गुणवृत्तिविरोधाच्च गुणानां सत्त्वरजस्तमसां, वृत्तीनां सुखदुःखमोहरूपाणां, परस्पराभिभाव्याभिभावकत्वेन विरुद्धानां जायमानानां सर्वत्रैव दुःखानुवेधाच्चेत्यर्थः । हन्त दुःखमयो दुःखैकस्वभावः स्मृतः । तदुक्तं–" परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः " इति ( २-१५ ) ॥ २२ ॥

इत्थं दृग्दृश्ययोगात्माऽविद्यको भवविप्लवः । नाशान्नश्यत्यविद्याया इति पातञ्जला जगुः ॥ २३ ॥

इत्थमिति–इत्थं दुःखरूपो दृग्दृश्ययोः पुरुषबुद्धितत्त्वयोर्योगो विवेकाख्यातिपूर्वकः संयोग आत्मा कारणं यस्य स तथा । अविद्यकोऽविद्यारचितो भवविप्लवः संसारप्रपञ्चोऽविद्याया नाशान्नश्यति । अविद्यानाशात्तत्कार्यदृग्दृश्यसंयोगनाशे तत्कार्यभवप्रपञ्चनाशोपपत्तेरिति पातञ्जला जगुर्जल्पितवन्तः ॥ २३ ॥

एतद्दूषयति–

नैतत्साध्यपुमर्थत्वात् पुंसः कैवल्यसंस्थितेः । क्लेशाभावेन संयोगाज्जन्मोच्छेदो हि गीयते ॥ २४ ॥

नैतदिति–न एतत् पातञ्जलमतं साधु न्याय्यं, पुंसः कैवल्यसंस्थितेः सदातनत्वेनापुमर्थत्वात् पुरुषप्रयत्नासाध्यत्वात् । हि यतः क्लेशाभावेन संयोगस्याविद्यकस्य स्वयमेव निवृत्तस्याजन्मानुत्पाद उच्छेदो गीयते । तदेव च पुरुषस्य कैवल्यं व्यपदिश्यत इति न पुनर्मूर्तद्रव्यवत्संयोगपरित्यागोऽस्य युज्यते, कूटस्थत्वहानिप्रसंगात् इति हि परसिद्धान्तः । तदुक्तं–" तदभावात्संयोगाभावो हानमिति " ( २-२५ ) ॥ २४ ॥

एतदेवाह–

तात्त्विको नात्मनो योगो ह्येकान्तापरिणामिनः । कल्पनामात्रमेवं च क्लेशास्तज्ज्ञानमप्यदः ॥ २५ ॥

तात्त्विक इति–तात्त्विकः पारमार्थिको नात्मनो हि योगः सम्बन्ध एकान्तापरिणामिनः सतो युज्यते । एवं चादो इत्या-

श्रर्ये क्लेशास्तद्धानमपि कल्पनामात्रं । उपचरितस्य भवप्रपञ्चस्य प्रकृतिगतत्वं विनापि अविद्यामात्रनिर्मितत्वेन बौद्धनयेन वेदान्तिनयेनापि च वक्तुं शक्यत्वात्, मुख्यार्थस्य च भवन्मतनीत्याद्याप्यसिद्धत्वादित्यर्थः ॥ २५ ॥

काल्पनिकत्वेनैवैतन्मतं, अन्यदपीत्थं दूपयन्नाह–

**नृपस्येवाभिधानाद्यः सातबन्धः प्रकीर्तितः । अहिशङ्काविषज्ञानाच्चेतरोऽसौ निरर्थकः ॥ २६ ॥**

नृपस्येति–नृपस्येव तथाविधनरपतेरिवाभिधानाद्राजायमिति भणनरूपाद्यः सातबन्धः सुखसंबन्धरूपः प्रकीर्तितः । नित्येऽप्यात्मनि परैः । अहिनाऽदष्टस्यापि तथाविधप्रघट्टकवशादहिशंकाविषज्ञानाच्चेतरोऽसातबन्धः, असौ निरर्थकः कल्पनामात्रस्यार्थासाधकत्वादेव । अथ प्रकृतौ कर्तृत्वभोक्तृत्वाभिमानोपवर्णनमात्रमेतत्, तन्निरासार्थमेव च सकलशास्त्रार्थोपयोग इति को दोषः? तत्त्वार्थसिद्ध्यर्थमुपचाराश्रयणस्यापि अदुष्टत्वादिति चेन्न, तत्त्वार्थस्यैवात्मनश्चिद्रूपत्वे मुक्त्यवस्थायां विषयपरिच्छेदकत्वस्याप्यापत्तेः, ज्ञानस्य ज्ञानत्ववत्सविषयकत्वस्यापि स्वभावत्वादन्तःकरणाभावेऽर्थपरिच्छेदाभावस्य च निरावरणज्ञाने तस्याहेतुत्वेन वक्तुमशक्यत्वात्, दिदृक्षाभावेऽपि दर्शनानिवृत्तेः, प्राकृताप्राकृतज्ञानयोः सविषयकत्वाविषयकत्वस्वभावभेदकल्पनस्य चान्याय्यत्वात् । आत्मचैतन्येऽविषयकत्वस्वाभाव्यवत्सविषयकत्वस्वाभाव्यकल्पने बाधकाभावात् । किं च विवेकाख्यातिरूपसंयोगाभावोऽपि विवेकाख्यातिरूप एवेति विषयग्राहकचैतन्यस्य स्वतंत्रनीत्यैवोपपत्तेः मुक्तावपि निर्विषयचिन्मात्रतत्त्वार्थासिद्धिः । तदुक्तं हरिभद्राचार्यैः–" आत्मदर्शनतश्च स्यान्मुक्तिर्यत्तंत्रनीतितः । तदस्य ज्ञानसद्भावस्तंत्रयुक्त्यैव साधितः ॥ १ ॥ " इति । ननु विवेकख्यातिरपि अन्तःकरणधर्म एव, तस्मिंश्च प्रकृतौ प्रविलीने न

॥ १५४ ॥

तद्धर्मस्थित्यवकाशः, न चैवं संयोगेऽप्यज्ञानप्रसङ्गः, परेषां घटविषयदशायां घटप्रागभावानुन्मज्जनवदुपपत्तेः, इत्थं च प्रकृतेरेव तत्त्वतः संयोगज्ञानं, आत्मनस्तूपचारादिति नास्माकमयमुपालम्भः शोभत इति चेन्न, उपचारस्यापि सम्बन्धाविना भावस्याश्रयणे चिन्मात्रधर्मकस्यत्यागात्सर्वज्ञत्वस्वभावपरित्यागस्य स्वयासनामात्रविजृम्भितत्वादित्याचार्याणामाशयात्॥२६॥

पुरुषार्थाय दुःखेऽपि प्रवृत्तेर्ज्ञानदीपतः । हानं चरमदुःखस्य क्लेशस्येति तु तार्किकाः ॥ २७ ॥

पुरुषार्थायेति—ज्ञानदीपतस्तत्त्वज्ञानप्रदीपादज्ञानध्वान्तनाशात् पुरुषार्थाय पुरुषार्थनिमित्तं दुःखेऽपि प्रवृत्तेः, राजसेवादौ तथादर्शनात् । चरमदुःखस्य क्लेशस्य स्वयमुत्पादितस्य हानमिति तु तार्किका नैयायिकाः । अतीतस्य स्वत एवोपरतत्वात्, अनागतस्य हातुमशक्यत्वात्, वर्तमानस्यापि विरोधिगुणप्रादुर्भावेनैव नाशात् । चरमदुःखमुत्पाद्य तन्नाशस्यैव पुरुषार्थत्वादिति भावः ॥ २७ ॥

एतदपि मतं दूषयति—

ब्रूते हन्त विना कश्चिद्वचोऽपि न मदोद्धतम् । सुखं विना न दुःखार्थं कृतकृत्यस्य हि श्रमः ॥ २८ ॥

ब्रूत इति—अर्थोऽपि वचनं मदोद्धतं विना । कश्चिदित्यनन्तरमपेर्गम्यमानत्वात् कश्चिदपि न ब्रूते । हि यतः कृतकृत्यस्य सुखं विना स्वसुखातिशयितसुखं विना दुःखार्थं श्रमो नास्ति । राजसेवादावपि हि सुखार्थं प्रवृत्तिर्दृश्यते । कटुकौषधपानादावपि आगामिसुखाशयैव । अन्यथा विवेकिनो दुःखजिहासोर्मरणादावपि प्रवृत्त्यापत्तेः, न च मोक्षे सुखमिष्यते भवद्भिरिति व्यर्थः सर्वः प्रयासः ॥ २८ ॥

किं च चरमदुःखत्वं तत्त्वज्ञानजन्यतावच्छेदकमपि न संभवतीत्याह–

**चरमत्वं च दुःखत्वव्याप्या जातिर्न जातितः । तच्छरीरप्रयोज्यातः सांकर्यान्नान्यदर्थवत् ॥ २९ ॥**

चरमत्वं चेति–चरमत्वं च दुःखत्वव्याप्या जातिः न तच्छरीरप्रयोज्या, अतो जातितः सांकर्यात् मैत्रीयचरमदुःखचैत्राचरमदुःखवर्तिन्योस्तयोश्चैत्रचरमदुःख एव समावेशात् । चैत्रशरीरप्रयोज्यजातिव्याप्यायाश्चैत्रचरमसुखदुःखादिनिष्ठाया भिन्नाया एव चरमत्वजातेरुपगमे तु सुखत्वादिनैव सांकर्यात् । अन्यत्समानाधिकरणदुःखप्रागभावासमानकालीनत्वलक्षणं चरमत्वं नार्थवत्, न तत्त्वाज्ञानजन्यतावच्छेदकं अर्थादेव समाजात्तदुपपत्तेः । कार्यवृत्तियावद्धर्माणां कार्यतावच्छेदकत्वे चैत्रावलोकितमैत्रनिर्मितघटत्वादेरपि तथात्वप्रसंगात् । तथा च नियतितत्त्वाश्रयणापत्तेरिति दिक् ॥ २९ ॥

अन्यमतदूषणेन निर्व्यूढं स्वमतमुपन्यस्यन्नाह–

**सुखमुद्दिश्य तद्दुःखनिवृत्त्या नान्तरीयकम् । प्रक्षयः कर्मणामुक्तो युक्तो ज्ञानक्रियाध्वना ॥ ३० ॥**

सुखमिति–तत्तस्मात् दुःखानिवृत्त्या नान्तरीयकं व्याप्तं सुखमुद्दिश्य कर्मणां ज्ञानावरणादीनां प्रक्षयो ज्ञानक्रियाध्वना युक्त उक्तः ॥ ३० ॥

**क्लेशाः पापानि कर्माणि बहुभेदानि नो मते । योगादेव क्षयस्तेषां न भोगादनवस्थितेः ॥ ३१ ॥**

क्लेशा इति–नोऽस्माकं मते पापान्यशुभविपाकानि बहुभेदानि विचित्राणि कर्माणि ज्ञानावरणीयानि क्लेशा उच्यन्ते ।

अतः कर्मक्षय एव क्लेशहानिरिति भावः । ननु—" नाभुक्तं क्षीयते कर्म, कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं, कृतं कर्म शुभाशुभम् ॥ १ ॥ " इति वचनाद्भोगादेव कर्मणां क्षये तस्याप्यपुरुषार्थत्वमनिवारितमेवेत्यत आह—योगादेव ज्ञानक्रियासमुच्चयलक्षणात् क्षयः तेषां नानाभवार्जितानां प्रचितानां । न भोगात् अनवस्थितेः । भोगजनितकर्मान्तरस्यापि भोगनाश्यत्वादनवस्थानात् । ननु निरभिष्वंगभोगस्य न कर्मान्तरजनकत्वं । प्रचितानामपि च तेषां क्षयो योगजादृष्टाधीनकायव्यूहलक्षणाद्भोगस्यत इति चेन्न, प्रायश्चित्तादिनापि कर्मनाशोपपत्तेः कर्मणां भोगेतरनाश्यत्वस्यापि व्यवस्थितौ योगेनापि तन्नाशसम्भवे कायव्यूहादिकल्पने प्रमाणाभावात् । कर्मणां ज्ञानयोगनाश्यतायाः " ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुनेति " भवदागमेनापि सिद्धत्वात् । नराधिशरीरसत्त्वे शूकरादिशरीरानुपपत्तेः कायव्यूहानुपपत्तेर्मनोऽन्तरप्रवेशादिकल्पने गौरवाच्च । ये त्वाहुः पातञ्जलाः—" अग्नेः स्फुलिंगानामिव कायव्यूहदशायामेकस्मादेव चित्तात्प्रयोजकाभानाचित्तानां परिणामोऽस्मितामात्रादिति । तदुक्तं—" निर्माणचित्तान्यस्मितामात्रात् ( ४-४ ) प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषामिति " ( ४-५ ) तेषामप्यनन्तकालप्रचितानां कर्मणां नानाशरीरोपभोगनाश्यत्वकल्पनं मोह एव । तावददृष्टानां युगपद्वृत्तिलाभस्याप्यनुपपत्तेरिति निरुपक्रमकर्मणामेव भोगैकनाश्यत्वमाश्रयणीयमिति सर्वमवदातम् ॥ ३१ ॥

ततो निरुपमं स्थानमनन्तमुपतिष्ठते । भवप्रपञ्चरहितं परमानन्दमेदुरम् ॥ ३२ ॥

तत इति—व्यक्तः ॥ ३२ ॥

॥ इति क्लेशहानोपायद्वात्रिंशिका ॥ २५ ॥

## ॥ अथ योगमाहात्म्यद्वात्रिंशिका ॥ २६ ॥

क्लेशहानोपायं विविच्य तथाभूतस्य योगस्य प्रेक्षावत्प्रवृत्त्यौपयिकं माहात्म्यमुपदर्शयन्नाह–

शास्त्रस्योपनिषद्योगो योगो मोक्षस्य वर्तनी । अपायशमनो योगो योगः कल्याणकारणम् ॥ १ ॥
संसारवृद्धिर्धनिनां पुत्रदारादिना यथा । शास्त्रेणापि तथा योगं विना हन्त विपश्चिताम् ॥ २ ॥
इहापि लब्धयश्चित्राः परत्र च महोदयः । परात्मायत्तता चैव योगकल्पतरोः फलम् ॥ ३ ॥
योगसिद्धैः श्रुतेष्वस्य बहुधा दर्शितं फलम् । दृश्यते लेशतश्चैतद्यदन्यैरपि दर्शितम् ॥ ४ ॥

शास्त्रस्येति–इयमाद्या चतुःश्लोकी सुगमा ॥ १-२-३-४ ॥

अतीतानागतज्ञानं परिणामेषु संयमात् । शब्दार्थधीविभागे च सर्वभूतरुतस्य धीः ॥ ५ ॥

अतीतेति–संयमो नाम धारणाध्यानसमाधित्रयमेकविषयं । यदाह–" त्रयमेकत्र संयमः " इति ( ३-४ ) । एतदभ्यासात् खलु हेयज्ञेयादिप्रज्ञाप्रसर इति पूर्वभूमिषु ज्ञात्वोत्तरभूमिष्वयं विनियोज्यः । तदाह–" तज्जयात्प्रज्ञालोकः (३-५) तस्य भूमिषु विनियोग इति " ( ३-६ ) । ततः परिणामेषु धर्मलक्षणावस्थारूपेषु संयमाच्चितस्य सर्वार्थग्रहणसामर्थ्यप्रतिबन्धकविक्षेपपरिहारात् । अतीतानागतज्ञानमतिक्रान्तानुत्पन्नार्थपरिच्छेदनं योगिनो भवति । तदुक्तं–" परिणामत्रयसंयमादती-

तानागतज्ञानमिति" ( ३-१६ )। शब्दः श्रोत्रेन्द्रियग्राह्यनियतक्रमवर्णात्मा क्रमरहितः स्फोटात्मा ध्वनिसंस्कृतबुद्धिग्राह्यो वा, अर्थो जातिगुणक्रियादिः, धीर्विषयाकारा बुद्धिवृत्तिः, एता हि गौरिति शब्दो गौरित्यर्थो गौरिति च धीरित्यभेदेनैवाध्यवसीयन्ते। कोऽयं शब्द इत्यादिषु प्रश्नेषु गौरयमित्येकरूपस्यैवोत्तरस्य प्रदानात्। तस्य चैकरूपप्रतिपत्तिनिमित्तकत्वात्। तत एतासां विभागे चेदं शब्दस्य तत्त्वं महावाचकस्य नाम, इदं चार्थस्य यद्वाच्यत्वं, इदं च धियो यत्प्रकाशत्वमित्येवंलक्षणे। संयमात् सर्वेषां भूतानां मृगपशुपक्षिसरीसृपादीनां रुतस्य शब्दस्य धीर्जायते। अनेनैवाभिप्रायेण अनेन प्राणिनाऽयं शब्द समुच्चरित इति। तदुक्तं–" शब्दार्थप्रत्ययानामितरेतराध्यासात्संकरस्तत्प्रवि(भा)गसंयमात्सर्वभूतरुतज्ञानमिति" ( ३-१७ )॥ ५ ॥

संस्कारे पूर्वजातीनां प्रत्यये परचेतसः। शक्तिस्तंभे तिरोधानं कायरूपस्य संयमात्॥ ६ ॥

संस्कार इति–संस्कारे स्मृतिमात्रफले जात्यायुर्भोगलक्षणे च "एष मया सोऽर्थोऽनुभूतः, एवं मया सा क्रिया कृता," इति भावनया संयमात् पूर्वजातीनां प्रागनुभूतजातीनां धीरनुस्मृतिरुद्बोधकमन्तरेणैव जायते। तदुक्तं–" संस्कारस्य साक्षात्करणात् पूर्वजातिज्ञानं" ( ३–१८ )। प्रत्यये परकीयचित्ते केनचिन्मुखरागादिना लिंगेन गृहीते परचेतसो धीर्जायते। तथा संयमवान् सरागमस्य चित्तं वीतरागं वेति परचित्तगतान् सर्वानेव धर्मान् जानातीत्यर्थः। तदुक्तं–"प्रत्ययस्य परचित्तज्ञानं ( ३-१९ ) न च सा(तत्सा)लंबनं तस्याविषयीभूतत्वादिति" ( ३-२० )। लिंगाच्चित्तमात्रमवगतं, न तु नीलविषयं पीतविषयं वा तदिति। अज्ञाते आलंबने संयमस्य कर्तुमशक्यत्वात्तदनवगतिः। सालंबनचित्तप्रणिधानोत्प-

संयमे तु तदवगतिरपि भवत्येवेति भोजः । कायः शरीरं तस्य रूपं चक्षुर्ग्राह्यो गुणः तस्य नास्त्यस्मिन् काये रूपमिति संयमाद्रूपस्य चक्षुर्ग्राह्यत्वरूपायाः शक्तेः स्तंभे भावनावशात्प्रतिबन्धे सति तिरोधानं भवति । चक्षुषः प्रकाशरूपस्य सात्त्विकस्य धर्मस्य तद्ग्रहणव्यापाराभावात् । तथा संयमवान् योगी न केनचिद्दृश्यत इत्यर्थः । एवं शब्दादितिरोधानमपि ज्ञेयं । तदुक्तं–" कायरूपसंयमात्तद्ग्राह्यशक्तिस्तंभे चक्षुः (क्षुः प्र) प्रकाशासं(प्र)योगेऽन्तर्धानं " ( ३-२१ ) । एतेन शब्दाद्यन्तर्धानमुक्तमिति ॥ ६ ॥

संयमात् कर्मभेदानामरिष्टेभ्योऽपरान्तधीः । मैत्र्यादिषु बलान्येषां हस्त्यादीनां बलेषु च ॥ ७ ॥

संयमादिति–कर्मभेदाः सोपक्रमनिरुपक्रमादयस्तत्र यत्फलजननाय सहोपक्रमेण कार्यकारणाभिमुख्येन वर्तते, यथोष्णप्रदेशे प्रसारितमार्द्रं वस्त्रं शीघ्रमेव शुष्यति । निरुपक्रमं च विपरीतं, यथा तदेवार्द्रं वासः पिंडीकृतमनुष्णे देशे चिरेण शोषमेतीति । एवमन्येऽपि । तेषां संयमादिदं शीघ्रविपाकमिदं च मन्दविपाकमित्याद्यवधानदार्ढ्यजनितादरिष्टेभ्य आध्यात्मिकाधिभौतिकाधिदैविकभेदभिन्नेभ्यः कर्णपिधानाकालीनकोष्ठ्यवायुघोषाश्रवणाकस्मिकविकृतपुरुषाशक्यदर्शनस्वर्गादिपदार्थदर्शनलक्षणेभ्योऽपरान्तस्य करणशरीरवियोगस्य धीर्नियतदेशकालतया निश्चयः सामान्यतः संशयाविलतद्धियोऽरिष्टेभ्यो योगिनामपि संभवादिति ध्येयं । तदुक्तं–" सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वेति " । ( ३-२२ ) मैत्र्यादिषु मैत्रीप्रमोदकारुण्यमाध्यस्थ्येषु संयमादेषां मैत्र्यादीनां बलानि भवन्ति, मैत्र्यादयस्तथा प्रकर्षं गच्छन्ति यथा सर्वस्य मित्रत्वादिकं प्रतिपद्यते योगीत्यर्थः । तदुक्तं–" मैत्र्यादिषु बलानि " ( ३-२३ ) । बलेषु च हस्त्यादिसंब-

न्धिषु संयमाच्चक्षुरादीनां महान्त्याविर्भवन्ति सर्वसामर्थ्ययुक्तत्वात् नियतमनःसंयमेन नियतफलप्राप्तुर्जायात् । एवं विषय वत्या ज्योतिष्मत्याश्च प्रवृत्तेः सात्त्विकप्रकाशप्रसरस्य विषयेषु संन्यासात् सूक्ष्मव्यवहितविप्रकृष्टार्थज्ञानमपि द्रष्टव्यं । सान्तःकरणेन्द्रियाणां प्रशक्तितापत्तेः । तदुक्तं–" प्रवृत्त्यालोकसंन्यासात्सूक्ष्मव्यवहितविप्रकृष्टज्ञानमिति " ( ३-२५ ) ॥७॥

सूर्ये च भुवनज्ञानं ताराव्यूहे गतिर्विधौ । ध्रुवे च तद्गतेर्नाभिचक्रे व्यूहस्य वर्ष्मणः ॥ ८ ॥

सूर्ये चेति–सूर्ये च प्रकाशमये संयमाद्भुवनानां सप्तानां लोकानां ज्ञानं भवति । तदुक्तं–" भुवनज्ञानं सूर्ये(र्ये) संयमात् " ( ३-२६ )। ताराव्यूहे ज्योतिषां विशिष्टसंनिवेशे संयमाद्विधौ चन्द्रे गतिज्ञानं भवति, सूर्याहततेजस्कतया ताराणां सूर्यसंयमात्तद्ज्ञानं न शक्नोति भवितुमिति पृथगयमुपायोऽभिहितः । तदुक्तं–" चन्द्रे ताराव्यूहज्ञानं" ( ३-२७ )। ध्रुवे च निश्चले ज्योतिषां प्रधाने संयमात्तासां ताराणां गतेर्नियतदेशकालगमनक्रियाया गतिर्भवति, इयं तारा इयता कालेन अमुं राशिमिदं वा क्षेत्रं यास्यतीति । तदुक्तं–" ध्रुवे तद्गतिज्ञानं " ( ३-२८ )। नाभिचक्रे शरीरमध्यवर्तिनि समप्रांगसन्निवेशमूलभूते संयमाद्वर्ष्मणः कायस्य व्यूहस्य रसमलनाड्यादीनां स्थानस्य गतिर्भवति । तदुक्तं–" नाभिचक्रे काय व्यूहज्ञानं " ( ३-२९ ) ॥ ८ ॥

क्षुत्तृड्व्ययः कण्ठकूपे कूर्मनाड्यामचापलम् । मूर्धज्योतिषि सिद्धानां दर्शनं च प्रकीर्तितम् ॥ ९ ॥

क्षुदिति–कण्ठे गले कूप इव कूपो गर्ताकारः प्रदेशस्तत्र संयमात् क्षुत्तृषोर्व्ययो भवति । घंटिकास्रोतःप्लावनात्तृप्ति-

सिद्धेः । तदुक्तं–" कंठकूपे क्षुत्पिपासानिवृत्तिः " ( ३-३० ) । कूर्मनाड्यां कंठकूपस्याधस्ताद्वर्तमानायां संयमादचापलं भवति, मनःस्थैर्यसिद्धेः । तदुक्तं–" कूर्मनाड्यां स्थैर्यमिति " ( ३-३१ )। मूर्धज्योतिर्नाम गृहाभ्यन्तरस्य मणेः प्रसरन्ती प्रभेव कुंचिकादौ प्रदेशे, हृदयस्थ एव सात्त्विकः प्रकाशो ब्रह्मरन्ध्रे संपिंडितत्वं भजन् तत्र संयमाच्च सिद्धानां दर्शनं प्रकीर्तितं । द्यावापृथिव्योरन्तरालवर्तिनो ये दिव्यपुरुषास्तानेतद्वान् पश्यति, तैश्चायं संभाष्यत इति भावः । तदुक्तं–" मूर्धज्योतिषि सिद्धदर्शनम् " ( ३-३२ ) ॥ ९ ॥

**प्रातिभात् सर्वतः संविच्चेतसो हृदये तथा । स्वार्थे संयमतः पुंसि भिन्ने भोगात्परार्थकात् ॥ १० ॥**

प्रातिभादिति–निमित्तानपेक्षं मनोमात्रजन्यं अविसंवादकं झगित्युत्पद्यमानं ज्ञानं प्रतिभा । तत्र संयमे क्रियमाणे यदुत्पद्यते ज्ञानं विवेकख्यातेः पूर्वभावि तारकमुदेष्यति, सवितरीव पूर्वप्रभा, ततः सर्वतः संविद्भवति । संयमान्तरानपेक्षः सर्वं जानातीत्यर्थः । " प्रातिभाद्वा सर्वमित्युक्तेः " ( ३-३३ )। तथा हृदये शरीरप्रदेशविशेषेऽधोमुखस्वल्पपुंडरीकाकारे संयमात् चेतसः संवित् स्वपरचित्तगतवासनारागादिज्ञानं भवति । तदुक्तं–" हृदये चित्तसंवित् " ( ३-३४ )। परार्थकात् सत्त्वस्य स्वार्थनैरपेक्ष्येण स्वभिन्नपुरुषार्थकाद्भोगात् सत्त्वपुरुषाभेदाध्यवसायलक्षणात् सत्त्वस्यैव सुखदुःखकर्तृत्वाभिमानाभिन्ने स्वार्थे स्वरूपमात्रालंबने परित्यक्ताहंकारे सत्त्वे चिच्छायासंक्रान्तौ पुंसि संविद्भवति। एवंभूतं स्वालंबनज्ञानं सत्त्वनिष्ठं पुरुषो जानाति, न पुनः पुरुषो ज्ञाता ज्ञानस्य विषयभावमापद्यते, ज्ञेयत्वापत्तेः । ज्ञातृज्ञेययोश्चात्यन्तविरोधादिति भावः । तदुक्तं–" सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थः (र्थात्) स्वार्थसंयमात् पुरुषज्ञानमिति" (३-३५)॥१०॥

समाधिविघ्ना व्युत्थानसिद्धयः प्रातिभं ततः । श्रावणं वेदनादर्शास्वादवार्ताश्च वित्तयः ॥ ११ ॥

समाधीति—ततः स्वार्थसंयमाद्धयात् पुरुषसंयमादभ्यस्यमानात् प्रातिभं पूर्वोक्तं ज्ञानं, यदनुजायात् सूक्ष्मार्थादिकमर्थं पश्यति । श्रावणं श्रोत्रेन्द्रियजं ज्ञानं, यस्मात्प्रकृष्टाद्दिव्यं शब्दं जानाति । वेदना स्पर्शनेन्द्रियजं ज्ञानं, वेद्यतेऽनयेति कृत्वा, तांत्रिक्या संज्ञया व्यवह्रियते, यत्प्रकर्षाद्दिव्यस्पर्शविषयं ज्ञानमुत्पद्यते । आदर्शश्चक्षुरिन्द्रियजं ज्ञानं, आ समन्ताद्दृश्यतेऽनुभूयते रूपमनेनेति कृत्वा, यत्प्रकर्षाद्दिव्यरूपज्ञानमुत्पद्यते । आस्वादो रसनेन्द्रियजं ज्ञानं, आस्वाद्यतेऽनेनेति कृत्वा, यत्प्रकर्षाद्दिव्यरससंविदुपजायते । वार्ता गन्धसंवित्तिः, वृत्तिशब्देन तांत्रिक्या परिभाषया घ्राणेन्द्रियमुच्यते, वर्तमाने गन्धविषये प्रवर्तत इति कृत्वा, वृत्तौ घ्राणेन्द्रिये जाता वार्ता, यत्प्रकर्षाद्दिव्यो गन्धोऽनुभूयते । एताश्च वित्तयो ज्ञानानि जयन्ति । तदुक्तं—" ततः प्रातिभश्रावणवेदनादर्शा(र्शना)स्वादवार्ता जायन्ते " ( ३-३६ ) । एताश्च समाधेः प्रकर्षं गच्छतः सतो विघ्ना हर्षविस्मयादिकरणेन शिथिलीकरणात् । व्युत्थाने व्यवहारदशायां च समाप्युत्साहजननादिविशिष्टफलदायकत्वाच्च सिद्धयः । यत उक्तं—" ते समाधावुपसर्गा व्युत्थाने सिद्धयः " ( ३-३७ ) ॥ ११ ॥

बन्धकारणशैथिल्यात् प्रचारस्य च वेदनात् । चित्तस्य स्यात् परपुरप्रवेशो योगसेविन. ॥ १२ ॥

बन्धेति—व्यापकत्वादात्मचित्तयोर्नियतकर्मवशादेव शरीरान्तर्गतयोर्भोग्यभोक्तृभावेन यत्संवेदनमुपजायते स शरीरबन्ध इत्युच्यते । ततो बन्धस्य शरीरबन्धस्य यत्कारणं धर्माधर्माख्यं कर्म तस्य शैथिल्यात् तानवात् । प्रचारस्य च चित्तस्य

हृदयप्रदेशादिन्द्रियद्वारेण विषयाभिमुख्येन प्रसरस्य च वेदनात् ज्ञानात् " इयं चित्तवहा नाम्नी, अनया चित्तं वहति, इयं रसप्राणादिवहाभ्यो विलक्षेति " स्वपरशरीरसंचारपरिच्छेदादित्यर्थः । योगसेविनो योगाराधकस्य चित्तस्य परपुरे मृते जीवति वा परकीयशरीरे प्रवेशः स्यात् । चित्तं च परशरीरं प्रविशदिन्द्रियाण्यनुवर्तन्ते, मधुकरराजमिव मक्षिकाः । ततः परशरीरं प्रविष्टो योगी ईश्वरवत्तेन व्यवहरति, यतो व्यापकयोश्चित्तपुरुषयोर्भोगसंकोचकारणं कर्माभूत्, तच्चेत् समाधिना क्षिप्तं तदा स्वातंत्र्यात्सर्वत्रैव भोगनिष्पत्तिरिति । तदुक्तं–" बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः " इति ( ३-३८ ) ॥ १२ ॥

## समानस्य जयाद्धामोदानस्याबाधसंगता । दिव्यं श्रोत्रं पुनः श्रोत्रव्योम्नोः संबन्धसंयमात् ॥ १३ ॥

समानस्येति–समानस्याग्निमावेष्ट्यव्यवस्थितस्य समानाख्यस्य वायोर्जयात् संयमेन वशीकारान्निरावरणस्याग्नेरूर्ध्वगत्वात् धाम तेजः तरणिप्रतापवदवभासमानमाविर्भवति, येन योगी ज्वलन्निव प्रतिभाति । यदुक्तं–" समानजयाज्ज्वलनः(म्) " ( ३-४० )। उदानस्य कृकाटिकादेशादा शिरोवृत्तेर्जयादितरेषां वायूनां निरोधादूर्ध्वगतित्वसिद्धेः अवादिना जलादिनाऽसंगताऽप्रतिरुद्धता । जितोदानो हि योगी जले महानद्यादौ महति वा कर्दमे तीक्ष्णेषु वा कंटकेषु न सजति, किं तु लघुत्वात्तूलपिण्डवज्जलादावनिमज्जन्नुपरि तेन गच्छतीत्यर्थः । तदुक्तं–" उदानजयाज्जलपंककंटकादिष्वसंग उत्क्रान्तिश्च " ( ३-३९ ) । श्रोत्रं शब्दग्राहकमाहंकारिकमिन्द्रियं व्योम, शब्दतन्मात्रजमाकाशं, तयोः पुनः संबन्धसंयमाद्देशदेशिभा-

वसंबन्धसंयमाद्दिव्यं युगपत्सूक्ष्मव्यवहितविप्रकृष्टशब्दग्रहणसमर्थं श्रोत्रं भवति । तदुक्तं–"श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रं" ( ३–४१ ) ॥ १३ ॥

लघुतूलसमापत्त्या कायव्योम्नोस्ततोऽम्बरे । गतिर्महाविदेहातः प्रकाशावरणक्षयः ॥ १४ ॥

लघ्विति–कायः पाञ्चभौतिकं शरीरं, व्योम च प्रागुक्तं, तयोः । ततोऽवकाशदानसंबन्धसंयमात् । लघुनि तूले समापत्त्या तन्मयीभावलक्षणया प्राप्तान्यन्तरलघुभावतयांबरे आकाशे गतिः स्यात् । लब्धसंयमस्तावत् प्रथमं यथारुचि जले संचरन् क्रमेणोर्णनाभतन्तुजालेन संचरमाण आदित्यरश्मिभिश्च विहरन् यथेष्टमाकाशे गच्छतीत्यर्थः । तदुक्तं–"कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेरा(श्चा)काशगमनं" ( ३-४२ )। शरीराद्बहिर्या शरीरनैरपेक्ष्येण मनोवृत्तिः सा महाविदेहेत्युच्यते, शरीराहंकारविगमात् । अत एवाकल्पितत्वेन महत्त्वात् शरीराहंकारे सति हि बहिर्वृत्तिर्मनसः कल्पितोच्यते, तस्यां कृतसंयमायाः सकाशात् प्रकाशस्य शुद्धसत्त्वलक्षणस्य यदावरणं क्लेशकर्मादि तत्क्षयो भवति, सर्वे चित्तमलाः क्षीयन्त इति यावत् । तदुक्तं–"बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः" इति ( ३-४३ ) ॥ १४ ॥

स्थूलादिसंयमाद्भूतजयोऽस्मादणिमादिकम् । कायसंपच्च तद्धर्मानभिघातश्च जायते ॥ १५ ॥

स्थूलादीति–स्थूलादीनि स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि पंचानां भूतानामवस्थाविशेषरूपाणि । तत्र भूतानां परिदृश्यमानं विशिष्टाकारवत्त्वं स्थूलं रूपं स्वरूपं च पृथिव्यादीनां कार्कश्यस्नेहौष्ण्यप्रेरणावकाशदानलक्षणं सूक्ष्मं च यथाक्रमं

भूतानां कारणत्वेन व्यवस्थितानि गन्धादितन्मात्राणि। अन्वया गुणाः प्रकाशप्रवृत्तिस्थितिरूपतया सर्वत्रैवोपलभ्यमानाः। अर्थवत्त्वं च तेष्वेव गुणेषु भोगापवर्गसंपादनशक्तिरूपं । तेषु क्रमेण प्रत्यवस्थं संयमाद्भूतजयो भवति । कृतैतत्संयमस्य संकल्पानुविधायिन्यो वत्सानुसारिण्य इव गावो भूतप्रकृतयो भवन्तीत्यर्थः । तदुक्तं–" स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः " इति ( ३-४४ )। अस्माद्भूतजयात् अणिमादिकं भवति । अणिमा, गरिमा, लघिमा, महिमा, प्राकाम्यं, ईशत्वं, वशित्वं, यत्रकामावसायित्वं चेत्यणिमादिकं । तत्राणिमा परमाणुरूपतापत्तिः । गरिमा वज्रवद्गुरुत्वप्राप्तिः। लघिमा तूलपिण्डवल्लघुत्वप्राप्तिः । महिमा महत्त्वप्राप्तिः, अङ्गुल्यग्रेण चन्द्रादिस्पर्शनयोग्यता । प्राकाम्यमिच्छाऽनभिघातः शरीरान्तःकरणयोः । ईशत्वं सर्वत्र प्रभविष्णुता । वशित्वं यतः सर्वाण्येव भूतानि वचनं नातिक्रामन्ति । यत्रकामावसायित्वं स्वाभिलषितस्य समाप्तिपर्यन्तनयनं । कायसंपच्च उत्तमरूपादिलक्षणा " रूपलावण्यबलवज्रसंहननत्वानि कायसंपत् " ( ३-४६ ) इत्युक्तेः । तद्धर्मानभिघातश्च तस्य कायस्य धर्मा रूपादयस्तेषामभिघातो नाशस्तदभावश्च जायते । न ह्यस्य रूपमग्निर्दहति, न वापः क्लेदयन्ति, न वा वायुः शोषयतीति । तदिदमुक्तं–" ततोऽणिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्चेति " ( ३–४५ ) ॥ १५ ॥

**संयमाद्ग्रहणादीनामिन्द्रियाणां जयस्ततः । मनोजवो विकरणभावश्च प्रकृतेर्जयः ॥ १६ ॥**

संयमादिति–ग्रहणादयो ग्रहणस्वरूपास्मितान्वयार्थवत्त्वानि । तत्र ग्रहणमिन्द्रियाणां विषयाभिमुखी वृत्तिः । स्वरूपं सामान्येन प्रकाशकत्वं । अस्मिता अहंकारानुगमः । अन्वयार्थवत्त्वे प्रागुक्तलक्षणे । तेषां यथाक्रमं संयमादिन्द्रियाणां

जयो भवति । तदुक्तं–" ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः " इति ( ३–४७ )। तत इन्द्रियजयान्मनोजवः शरीरस्य मनोवदनुत्तमगतिलाभः । विकरणभावश्च कायनैरपेक्ष्येणेन्द्रियाणां वृत्तिलाभः । प्रकृतेः प्रधानस्य जयः सर्ववशित्वलक्षणो भवति । तदुक्तं–" ततो मनोजवित्वं विकरणभावः प्रधानजयश्च " ( ३ ४८ ) ॥ १६ ॥

स्थितस्य सत्त्वपुरुषान्यताख्यातौ च केवलम् । सार्वज्ञ्यं सर्वभावानामधिष्ठातृत्वमेव च ॥ १७ ॥

स्थितस्येति–केवलं सत्त्वपुरुषयोरन्यताख्यातौ गुणकर्तृत्वाभिमानशिथिलीभावलक्षणायां शुद्धसात्त्विकपरिणामरूपायां स्थितस्य । सार्वज्ञ्यं सर्वेषां शान्तोदिताव्यपदेश्यधर्मत्वेन स्थितानां यथावद्विवेकजं ज्ञानलक्षणं सर्वेषां भावानां गुणपरिणामानामधिष्ठातृत्वमेव च स्वामिवदाक्रमणलक्षणं भवति । तदुक्तं–" सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च " ( ३ ४९ ) ॥ १७ ॥

स्मृता सिद्धिर्विशोकेयं तद्वैराग्याच्च योगिनः । दोषबीजक्षये नूनं कैवल्यमुपदर्शितम् ॥ १८ ॥

स्मृतेति–इयं विशोका सिद्धिः स्मृता । तस्यां विशोकायां सिद्धौ वैराग्याच्च योगिनो योगजाच्च । दोषाणां रागादीनां बीजस्याविद्यादेः क्षये निर्मूलने । नूनं निश्चितं । कैवल्यं पुरुषस्य गुणानामधिकारपरिसमाप्तेः स्वरूपप्रतिष्ठत्वमुपदर्शितं । यतः–" तद्वैराग्यादपि दोषबीजक्षये कैवल्यमिति " ( ३-५० ) ॥ १८ ॥

असङ्गश्चास्मयश्चैव स्थितावुपनिमन्त्रणे । बीजं पुनरनिष्टस्य प्रसंगः स्यात् किलान्यथा ॥ १९ ॥

असंगश्चेति–उपनिमंत्रणे उक्तसमाधिस्थस्य देवैर्दिव्यस्त्रीरसायनाद्युपढौकनेन जोगनिमंत्रणेऽसंगश्चास्मयश्चैव स्थितौ वीजं । संगकरणे पुनर्विषयप्रवृत्तिप्रसंगात् स्मयकरणे च कृतकृत्यमात्मानं मन्यमानस्य समाधावुत्साहजंगात् । एतदेवाह–अन्यथाऽसंगास्मयाकरणे पुनः किलेति सत्येऽनिष्टस्य प्रसंग इति । तदिदमुक्तं–" स्थित्युपनिमंत्रणे संगस्मयाकरणं पुनरनिष्टप्रसंगादिति " ( ३-५१ ) ॥ १९ ॥

स्यात् क्षणक्रमसंवन्धसंयमाद्यद्विवेकजम् । ज्ञानं जात्यादिजिस्तच्च तुल्ययोः प्रतिपत्तिकृत् ॥ २० ॥

स्यादिति–क्षणः सर्वान्त्यः कालावयवस्तस्य क्रमः पौर्वापर्यं तत्सं(वंधसं)यमात् सूक्ष्मान्तरसाक्षात्करणसमर्थात् यद्विवेकजं ज्ञानं स्यात् । यदाह–" क्षणक्र(तक्र)मयोः संवन्धसंयमाद्विवेकजं ज्ञानमिति " ( ३-५२ ) । तच्च जात्यादिजिस्तुल्ययोः पदार्थयोः प्रतिपत्तिकृत् विवेचकं । तदुक्तं–" जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिरिति " ( ३-५३ ) । पदार्थानां जेदहेतवो हि जातिलक्षणदेशा जवन्ति । जातिः पदार्थजेत्री, यथा गौरयं महिषोऽयमिति । जात्या तुल्ययोर्लक्षणं जेदकं, यथा इयं कर्बुरा इयं चारुणेति । उजाभ्यामजिन्नयोर्देशो जेदहेतुः, यथा तुल्यप्रमाणयोरामलकयोर्जिन्नदेशस्थितयोः । यत्र च त्रयमपि न जेदकं, यथैकदेशस्थितयोः शुक्लयोः पार्थिवयोः परमाण्वोः, तत्र संयमजनिताद्विवेकजज्ञानादेव जवति जेदधीरिति ॥ २० ॥

तारकं सर्वविषयं सर्वथाविषयाक्रमम् । शुद्धिसाम्येन कैवल्यं ततः पुरुषसत्त्वयोः ॥ २१ ॥

तारकमिति—यच्च विवेकजं ज्ञानं तारयत्यगाधात्संसारपयोधेर्योगिनमित्यान्वर्थिक्या संज्ञया तारकमुच्यते । तथा सर्वविषयं सर्वाणि तत्त्वानि महदादीनि विषयो यस्य तत्तथा । तथा सर्वथा सर्वैः प्रकारैः सूक्ष्मादिभेदैर्विषयो यस्य तच्च तदक्रमं च निःशेषनानावस्थापरिणतत्वत्र प्रा(णता)र्थिकत्वावप्रतृषे क्रमरहिते चेति कर्मधारयः । इत्थं चास्य संज्ञाविषयस्वभावा व्याख्याताः । तदुक्तं—" तारकं सर्वविषयं सर्वथा(र्थ)विषयमक्रमं चेति (विवेकजं ज्ञानं) "( ३-५४ )। ततस्तस्मात् ज्ञानात् पुरुषसत्त्वयोः शुद्धिसाम्येन कैवल्यं भवति । तत्र पुरुषस्य शुद्धिरुपचरिता भोगाभावः । सत्त्वस्य तु सर्वथा कर्तृत्वाभिमाननिवृत्त्या स्वकारणेऽनुप्रवेश इति । तदिदमुक्तं—" सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति " ( ३-५५ ) ॥ २१ ॥

अथमन्यैरुपदर्शिते योगमाहात्म्ये उपपत्त्यनुपपत्त्योर्दिशं प्रदर्शयन्नाह—

इह सिद्धिषु वैचित्र्ये बीजं कर्मक्षयादिकम् । संयमश्चात्र सदसत्प्रवृत्तिविनिवृत्तितः ॥ २२ ॥

इहेति—इह प्रागुक्तमन्थे सिद्धिषु वैचित्र्ये कर्मक्षयादिकं बीजं । तथाज्ञाने तथाज्ञानावरणक्षयोपशमादेर्वीर्यविशेषे च वीर्यान्तरायक्षयोपशमादेर्हेतुत्वात् । संयमश्चात्रोक्तसिद्धिषु सत्प्रवृत्त्यसन्निवृत्तिभ्यां तथाविधक्षयोपशमाद्याधानद्वारैव बीजं न तु तत्तद्विषयज्ञानप्रणिधानादिरूपः । अनन्तविषयकज्ञानस्य प्रतिविषयं संयमासाध्यत्वाद्विहितानुष्ठानप्रणिधानमात्रसंयमेनैव मोहक्षयाद्युपपत्तेः । चित्तप्रणिधानार्थं त्वाक्षपनमात्रं क्वापि न धारयामः । केवलमात्मप्रणिधानपर्यवसान एव सर्वः संयमः फलवानित्यात्मनो ज्ञेयत्व विना सर्वं विफलशीर्षं भवेदित्यधिकं स्वयमूहनीयम् ॥ २२ ॥

प्रायश्चित्तं पुनर्योगः प्राग्जन्मकृतकर्मणाम् । अब्धीनां निश्चयादन्तःकोटाकोटिस्थितेः किल ॥ २३ ॥

प्रायश्चित्तमिति–प्राग्जन्मकृतपाप्मनां पुनः प्रायश्चित्तं योगः, तन्नाशकत्वात् तस्य । तथा किलेति सत्ये । अब्धीनां सागरोपमाणामन्तःकोटाकोटीस्थितेर्निश्चयादपूर्वकरणारंभेऽपि तावत्स्थितिककर्मसद्भावावश्यकत्वस्य महाभाष्यादिप्रसिद्धत्वात्तस्य च धर्मसंन्यासैकनाश्यत्वादिति ॥ २३ ॥

निकाचितानामपि यः कर्मणां तपसा क्षयः । सोऽभिप्रेत्योत्तमं योगमपूर्वकरणोदयम् ॥ २४ ॥

निकाचितानामिति–निकाचितानामपि उपशमनादिकरणान्तसंयोग्य(ज्य)त्वेन व्यवस्थापितानामपि कर्मणां यस्तपसा क्षयो भणित इति शेषः । " तवसा उ निकाइआणं पि " इति वचनात् । सोऽपूर्वकरणोदयं उत्तमं योगं धर्मसंन्यासलक्षणमभिप्रेत्य । न तु यत्किंचित्तप इति द्रष्टव्यं । तत्त्वमत्रत्यमध्यात्मपरीक्षादौ विपञ्चितम् ॥ २४ ॥

अपि क्रूराणि कर्माणि क्षणाद्योगः क्षिणोति हि । ज्वलनो ज्वालयत्येव कुटिलानपि पादपान् ॥२५॥

दृढप्रहारिशरणं चिलातीपुत्ररक्षकः । अपि पापकृतां योगः पक्षपातान्न शंकते ॥ २६ ॥

अहर्निशमपि ध्यातं योग इत्यक्षरद्वयम् । अप्रवेशाय पापानां ध्रुवं वज्रार्गलायते ॥ २७ ॥

आजीविकादिनार्थेन योगस्य च विडंबना । पवनाभिमुखस्थस्य ज्वलनज्वालनोपमा ॥ २८ ॥

योगस्पृहापि संसारतापव्ययतपात्यय. । महोदयसरस्तीरसमीरलहरीलवः ॥ २९ ॥
योगानुभावको योऽन्यैः परमेश्वर इष्यते । अचिन्त्यपुण्यप्राग्भारयोगानुभाव एव सः ॥ ३० ॥
भरतो भरतक्षोणीं भुञ्जानोऽपि महामति. । तत्कालं योगमाहात्म्याद्बुभुजे केवलश्रियम् ॥ ३१ ॥
पूर्वमप्राप्तधर्मापि परमानन्दनन्दिता । योगप्रभावत. प्राप मरुदेवा परं पदम् ॥ ३२ ॥
अपीत्याद्यारभ्याष्टश्लोकी सुगमा ॥ २५-२६-२७-२८-२९-३०-३१-३२ ॥

॥ इति योगमाहात्म्यद्वात्रिंशिका ॥ २६ ॥

## ॥ अथ भिक्षुद्वात्रिंशिका ॥ २७ ॥

अनन्तरं योगमाहात्म्यमुपदर्शितं तच्च भिक्षौ संभवतीति तत्स्वरूपमिहोच्यते—

नित्यं चेतः समाधाय यो निष्क्रम्य गुरूदिते । प्रत्यापिबति नो वान्तमवशः कुटिलभ्रुवाम् ॥ १ ॥

नित्यमिति—यो निष्क्रम्य द्रव्यभावगृहात् योग्यतायां सत्यां । गुरूदिते ज्ञानवृद्धवचने । नित्यं निरन्तरं चेतः समाधाय प्रणिधाय । वान्तं परित्यक्तं विषयजंबालं । नो नैव प्रत्यापिबति पुनराद्रियते अवशः । कुटिलभ्रुवां पुरन्ध्रीणां ॥ १ ॥

पृथिव्यादींश्च षट्कायान् सुखेप्सूनसुखद्विषः । गणयित्वात्मतुल्यान् यो महाव्रतरतो भवेत् ॥ २ ॥

पृथिव्यादीनिति—व्यक्तः ॥ २ ॥

औद्देशिकं न भुञ्जीत त्रसस्थावरघातजम् । बुद्धोक्तध्रुवयोगी यः कषायांश्चतुरो वमेत् ॥ ३ ॥

औद्देशिकमिति—औद्देशिकं कृताद्यन्यच्च सावद्यं । बुद्धोक्तेन जिनवचनेन ध्रुवयोगी नित्योचितयोगवान् ॥ ३ ॥

निर्जातरूपरजतो गृहियोगं च वर्जयेत् । सम्यग्दृष्टिः सदाऽमूढस्तथा संयमबुद्धिषु ॥ ४ ॥

निर्जातरूपेति—निर्जातरूपरजतो निर्गतसुवर्णरूप्यः । परिग्रहान्तरनिर्गमोपलक्षणमेतत् । गृहियोगं मूर्छया गृहस्थसंबन्धं । सम्यग्दृष्टिर्भावसम्यग्दर्शनी यः ॥ ४ ॥

न यश्चागामिनेऽर्थाय सन्निधत्तेऽशनादिकम् । साधर्मिकान्निमंत्र्यैव भुक्त्वा स्वाध्यायकृच्च यः ॥ ५ ॥

नेति–आगामिनेऽर्थाय श्वः परश्वो वा भाविने प्रयोजनाय । निमंत्र्यैवेत्यनेन स्वात्मतुल्यसाधर्मिकवात्सल्यसिद्धिरुक्ता । भुक्त्वा स्वाध्यायकृच्चेत्यत्र च शब्दाच्छेषानुष्ठानपरत्वग्रहेण नित्याप्रमादित्वमुक्तं ॥ ५ ॥

न कुप्यति कथायां यो नाप्युच्चैः कलहायते । उचितेऽनादरो यस्य नादरोऽनुचितेऽपि च ॥ ६ ॥

न कुप्यतीति–व्यक्तः ॥ ६ ॥

आक्रोशादीन्महात्मा यः सहते ग्रामकण्टकान् । न बिभेति भयेभ्यश्च श्मशाने प्रतिमास्थितः ॥ ७ ॥

आक्रोशादीनिति–आक्रोशादीनाक्रोशप्रहारतर्जनान् ग्रामकण्टकान् ग्रामाणामिन्द्रियाणां कण्टकवद्दुःखहेतुत्वात् ॥ ७ ॥

आकुष्टो वा हतो वापि लूषितो वा क्षमासमः । व्युत्सृष्टत्यक्तदेहो योऽनिदानश्चाकुतूहलः ॥ ८ ॥

आकुष्टो वेति–आकुष्टो वा कुवचनैः । हतो वाऽपि दण्डादिभिः । लूषितो वा खड्गादिभिः । क्षमासमः पृथ्वीसमो निष्प्रतिकर्मत्वात् । व्युत्सृष्टो भावप्रतिबन्धाभावेन त्यक्तश्च विभूषाकरणेन देहः शरीरं यस्य ( येन ) स तथा । योऽनिदानो भाविफलाशंसारहितोऽकुतूहलश्च नटादिदर्शने ॥ ८ ॥

यश्च निर्ममभावेन काये दोषैरुपप्लुते । जानाति पुद्गलान्यस्य न मे किञ्चिदुपप्लुतम् ॥ ९ ॥

यश्चेति–यश्च निर्ममभावेनाकायं सकलपरिग्रहोपादानशून्यचिदानन्दैकमूर्तिकशुद्धात्मस्वभावानुभवजनितेन निर्मम-

त्वेन । काये शरीरे । दोषैर्ज्वरशूलादिभिरुपप्लुते । जानाति पुद्गलान्यस्य मतो ( स्वात्मनो ) न मे किंचिदुपप्लुतं, पुद्गला एव परमुपप्लुता इति ॥ ए ॥

स्वसंसर्गिणि निर्ममत्वभावनौपयिकं नमिराजर्षिदृष्टान्तमुपदर्शयति–

**तथाहि मिथिलानाथो मुमुक्षुर्निर्ममः पुरा । वभाण मिथिलादाहे न मे किञ्चन दह्यते ॥ १० ॥**

तथाहीति–संप्रदायव्यक्तोऽयम् ॥ १० ॥

**हस्तेन चांघ्रिणा वाचा संयतो विजितेन्द्रियः । अध्यात्मध्याननिरतः सूत्रार्थं यश्च चिन्तयेत् ॥ ११ ॥**

हस्तेन चेति–हस्तेन चांघ्रिणा च संयतः कारणं विना कूर्मवल्लीनत्वेन स्थितेः कारणे च सम्यग्गमनात् । वाचा संयतोऽकुशलवाग्निरोधकुशलवागुदीरणाभ्यां विजितेन्द्रियो निवृत्तविषयप्रसरः ॥ ११ ॥

**अज्ञातोञ्छं चरन् शुद्धमलोलोऽरसगृद्धिमान् । ऋद्धिसत्कारपूजाश्च जीवितं यो न कांक्षति ॥ १२ ॥**

अज्ञातोञ्छमिति–शुद्धं भावपरिशुद्धं स्तोकमित्यर्थः । अलोलो नाप्राप्तप्रार्थनपरः । अरसगृद्धिमान् प्राप्तेष्वप्यप्रतिबद्धः । ऋद्धिरामर्षौषध्यादिका, सत्कारो वस्त्रादिना, पूजा प्रसूनादिना, जीवितमसंयमजीवितम् ॥ १२ ॥

**यो न कोपकरं ब्रूयात् कुशीलं न वदेत्परम् । प्रत्येकं पुण्यपापज्ञो जात्यादिमदवर्जितः ॥ १३ ॥**

य इति–परं स्वपक्षविनेयव्यतिरिक्तं । प्रत्येकं प्रतिस्वं । पुण्यपापज्ञोऽन्यसंबन्धिनोऽन्यत्रासंक्रमात् । इत्थं च जात्यादिमदैर्वर्जितः ॥ १३ ॥

प्रवेदयत्यार्यपदं परं स्थापयति स्थित । धर्मचेष्टां कुशीलानां परित्यजति यः पुन. ॥ १४ ॥

प्रवेदयतीति–प्रवेदयति कथयत्यार्यपदं शुद्धधर्मपदम् ॥ १४ ॥

उद्वेगो हसितं शोको रुदितं क्रन्दितं तथा । यस्य नास्ति जुगुप्सा च क्रीडा चापि कदाचन ॥१५॥

उद्वेग इति–व्यक्तः ॥ १५ ॥

इदं शरीरमशुचि शुक्रशोणितसम्भवम् । अशाश्वतं च मत्वा य शाश्वतार्थं प्रवर्तते ॥ १६ ॥

इदमिति–व्यक्तः ॥ १६ ॥

स भावभिक्षुर्भेत्तृत्वादागमस्योपयोगत । भेदनेनोग्रतपसा भेद्यस्याशुभकर्मण ॥ १७ ॥

स इति–स भावभिक्षुर्भण्यते । उग्रतपसा भेदनेनाशुभकर्मणो भेद्यस्यागमोपयोगतो भेत्तृत्वात् तदुक्तं–"भेत्तागमोवउत्तो दुविहतवो भेयणं च भेत्तव्वं । अट्ठविहं कम्मखुहं तेण निरुत्तं सभिक्खुत्ति ॥ १७ ॥"

भिक्षामात्रेण वा भिक्षुर्यतमानो यतिर्भवेत् । भवक्षयाद्भवान्तश्च चरकः संयमं चरन् ॥ १८ ॥

भिक्षेति–भिक्षामात्रेण वा सर्वोपधिशुद्धभिक्षावृत्तिमात्रेण भिक्षुः । यतमानो भावतस्तथागुणेषु यतिर्भवेत् । भवक्षयात्संसारनाशाद्भवान्तश्च । संयमं सप्तदशप्रकारं चरन् चरकः ॥ १८ ॥

क्षपक क्षपयन् पापं तपस्वी च तप·श्रिया । भिक्षुशब्दनिरुक्तस्य भेदा. स्वस्वर्थतो क्षमी ॥ १९ ॥

क्षपक इति—पापं क्षपयन् क्षपको भण्यते । तपःश्रिया तपोलक्ष्म्या च तपस्वी । अमी हि प्रासंगिका अपि अर्थतो भिक्षुशब्दनिरुक्तस्य भेदाः तदर्थे प्रत्यव्यभिचारात् सर्वेषां । तदाह भिक्षुशब्दनिरुक्तद्वारे निर्युक्तिकृत्—"भिंदंतो अ जहकुहं भिक्खू जयमाणउ जई होइ । संजमचरउ चरउ भवं खिवंतो भवंतो अ ॥ १ ॥ जं भिक्खमत्तवित्ती तेण य भिक्खू खवेइ जं खवणो । तवसंजमे तवस्सित्ति वावि अन्नो वि पजाउ ॥ २ ॥ " ॥ १९ ॥

**तीर्णस्तायी व्रती द्रव्यं क्षान्तो दान्तो मुनिर्यतिः । ऋजुः प्रज्ञापको भिक्षुर्विद्वान् विरततापसौ ॥२०॥**

तीर्ण इति—तीर्णवत्तीर्णो विशुद्धसम्यग्दर्शनादिलाभाद्भवार्णवं । तायः सुदृष्टमार्गोक्तिस्तद्वान् तायी । सुपरिज्ञातदेशनया विनेयपालयितेत्यर्थः । हिंसादिविरतत्वाद्व्रती । रागद्वेषरहितत्वाद्द्रव्यं । क्षमां करोतीति क्षान्तः । दाम्यतीन्द्रियाणीति दान्तः । मन्यते जगतस्त्रिकालावस्थामिति मुनिः । उत्तमाश्रमी प्रयत्नवान् वा यतिः । मायारहित ऋजुः । अपवर्गमार्गस्य प्ररूपकः प्रज्ञापकः । भिक्षुः प्रागुक्तार्थः । विद्वान् पंडितः । विरतो विषयसुखनिवृत्तः । तापसः तपःप्रधानत्वात् ॥२०॥

**बुद्धः प्रव्रजितो मुक्तोऽनगारश्चरकस्तथा । पाखंडी ब्राह्मणश्चैव परिव्राजकसंयतौ ॥ २१ ॥**

बुद्ध इति—बुद्धोऽवगततत्त्वः । प्रव्रजितः पापान्निष्क्रान्तः । मुक्तो निर्लोभः । अनगारो द्रव्यभावागारशून्यः । तथा चरकः प्रागुक्तार्थः । पाषंडी पाशाड्डीनः । ब्राह्मणश्चैव विशुद्धब्रह्मचारी चैव । परिव्राजकः पापवर्जकः । संयतः संयमवान् ॥२१॥

**साधुर्रूक्षश्च तीरार्थी निर्ग्रन्थः श्रमणस्तथा । इत्यादीन्यभिधानानि गुणभाजां महात्मनाम् ॥ २२ ॥**

साधुरिति–निर्वाणसाधकयोगसाधनात् साधुः । स्वजनादिषु स्नेहविरहाद्रूक्षश्च । तीरार्थी भवार्णवस्य । निर्ग्रन्थो ग्रन्थाभावात् । तथा श्रमणः श्रामण्ययोगात् । इत्यादीन्यभिधानानि नामानि गुणजानि गुणशालिनां महात्मनां भाव-साधूनां । तदुक्तं–"तिन्ने ताईदविए वई अ खंते दंत विरए अ । मुणि तावस पन्नवगुज्जु भिक्खू बुद्धे जइ विऊ अ ॥ १ ॥ पव्वइए अणगारे पासंडी चरग बंभणे चेव । परिवायगे य समणे निग्गंथे संजए मुत्ते ॥ २ ॥ साहू लूहे अ तहा तीरट्ठी होइ चेव नायव्वो । नामाणि एवमाईणि होंति तव संजमरयाणं ॥ ३ ॥" ॥ २२ ॥

संवेगो विषयत्यागः सुशीलानां च संगतिः । ज्ञानदर्शनचारित्राराधना विनयस्तपः ॥ २३ ॥

संवेग इति–संवेगो मोक्षसुखाभिलाषः । अयं च निर्वेदस्याप्युपलक्षणः । विषयत्यागो भोगसाधनपरिहारः । सुशीलानां साधूनां च संगतिः । ज्ञानं यथास्थितपदार्थपरिच्छेदनं । दर्शनं नैसर्गिकादि । चारित्रं सामायिकादि । आराधना चरम-काले निर्यापणरूपा । विनयो ज्ञानादिविषय उपचारः । तपो यथाशक्त्यनशनाद्यासेवनम् ॥ २३ ॥

क्षान्तिर्मार्दवमृजुता तितिक्षा मुक्त्यदीनते । आवश्यकविशुद्धिश्च भिक्षोर्लिंगान्यकीर्तयन् ॥ २४ ॥

क्षान्तिरिति–क्षान्तिराक्रोशादिश्रवणेऽपि क्रोधत्यागः । मार्दवं जात्यादिभावेऽपि मानत्यागः । ऋजुता परस्मिन्निकृति-परेऽपि मायापरित्यागः । तितिक्षा क्षुदादिपरीषहोपनिपातसहिष्णुता । मुक्तिर्धर्मोपकरणेऽप्यमूर्छा । अदीनता अशना-द्यलाभेऽपि वैक्लव्याभावः । आवश्यकविशुद्धिश्चावश्यकरणीययोगनिरतिचारता । एतानि भिक्षोर्लिंगान्यकीर्तयन् गौतमा-

दयो मदर्पयः । तदुक्तं-"संवेगो णिव्वेओ विसयविवेगो सुसीलसंसग्गी । आराहणा तवो नाणदंसणचारित्तविणओ अ ॥ १ ॥ खंती य मद्दवज्जव विमुत्तया तह अदीणय तितिक्खा । आवस्सगपरिसुद्धी य होंति भिक्खुस्स लिंगाइं॥२॥"॥२४॥

**एतद्गुणान्वितो भिक्षुर्न भिन्नस्तु विपर्ययात् । स्वर्णं कषादिशुद्धं चेद्युक्तिस्वर्णं न तत्पुनः ॥ २५ ॥**

एतदिति-एतद्गुणान्वितः प्रागुक्ताखिलगुणसंपन्नो भिक्षुः । भिन्नस्तु न विपर्ययात् उक्तगुणाभावात् । यतः कषादिशुद्धं स्वर्णगुणोपेतं चेद्भवति तदा स्वर्णं भवति । ते चामी-विषघातनं, वीर्यस्तंभनकर्तृत्वं, मंगलप्रयोजनत्वं, यथेष्टकटकादिप्रकारसंपादकत्वं, तप्यमानस्य प्रादक्षिण्येनावर्तनं, सारोपेतत्वं, अग्निनाऽदाह्यत्वं, अकुथनीयत्वं च । युक्तिस्वर्णं वर्णादिसाम्येन स्वर्णवदाभासमानं पुनस्तत् स्वर्णं न भवति, स्वर्णगुणाभावात् । तथा प्रकृतेऽपि भावनीयमिति ॥ २५ ॥

**षट्कायभिद्गृहं कुर्याद्भुङ्क्तेऔद्देशिकं च यः । पिबेत् प्रत्यक्षमप्कायं स कथं भिक्षुरुच्यते ॥ २६ ॥**

षट्कायेति-षट्कायभिद् यत्र क्वचन पृथिव्याद्युपमर्दकः । गृहं संभवत्येवैषणीयालये मूर्च्छया वसतिं भाटकगृहं वा कुर्यात् । औद्देशिकं च भुञ्जीत । योऽपुष्टालंबनः प्रत्यक्षमुपलभ्यमान एवाप्कायं पिबेत् तत्त्वतो विनालंबनेन । स कथं भिक्षुर्भावभिक्षुरुच्यते ? । तदुक्तं-"उद्दिष्टकडं भुंजइ छक्कायपमद्दणो घरं कुणइ । पच्चक्खं च जलगयं जो पिबइ कहं तु सो भिक्खू ॥ १ ॥" ॥ २६ ॥

**गृहिणोऽपि सदारंभा याचमाना ऋजुं जनम् । दीनान्धकृपणा ये च ते खलु द्रव्यभिक्षवः ॥ २७ ॥**

त्रसस्थावरहन्तारा नित्यमब्रह्मचारिण. । मिथ्यादृशः संचयिनस्तथा सचित्तभोजिन ॥ २७ ॥
विशुद्धतपसोऽभावादज्ञानध्वस्तशक्तयः । त्रिधा पापेषु निरता हन्त त्यक्तगृहा अपि ॥ २९ ॥
वर्धकिर्द्रव्यतो भिक्षुरुच्यते दारुभेदनात् । द्रव्यभिक्षणशीलत्वाद्ब्राह्मणादिश्च विश्रुत. ॥ ३० ॥
प्रधानद्रव्यभिक्षुश्च शुद्ध. संविग्नपाक्षिक. । सपूर्य प्रतिमादीस्तां गृही यो वा प्रहीष्यति ॥ ३१ ॥
केचिदुक्ता अनन्तेषु भावभिक्षोर्गुणाः पुन. । भाव्यमाना अमी सम्यक् परमानन्दसंपदे ॥ ३२ ॥

॥ शिष्टाः श्लोकाः प्रहुत्तानार्याः ॥ २७ २७-२९-३०-३१-३२ ॥

॥ इति भिक्षुद्वात्रिंशिका ॥ २७ ॥

पं० भगवानदास जैन
मोतीसिंह भोमियों का रास्ता,
जयपुर सिटी (राजस्थान)

## ॥ अथ दीक्षाद्वात्रिंशिका ॥ २८ ॥

अनन्तरं भिक्षुरुक्तः स च दीक्षासंपन्नो भवतीति तत्स्वरूपमिहोच्यते—

**दीक्षा हि श्रेयसो दानादशिवक्षपणात्तथा । सा ज्ञानिनो नियोगेन ज्ञानिनिश्रावतोऽथवा ॥ १ ॥**

दीक्षा हीति—दीक्षा हि श्रेयसो दानात् । तथाऽशिवक्षपणात् निरुच्यते । तदाह—"श्रेयोदानादशिवक्षपणाच्च सतां मतेह दीक्षेति" । सा निरुक्तार्थशालिनी दीक्षा नियोगेन नियमेन ज्ञानिनो भवति । अथवा ज्ञानिनिश्रावतो गुरुपरतंत्रस्य ॥ १ ॥

एतदेव भावयति—

**एकः स्यादिह चक्षुष्मानन्यस्तदनुवृत्तिमान् । प्राप्नुतो युगपद्ग्रामं गन्तव्यं यद्भुभावपि ॥ २ ॥**

एक इति—स्पष्टः ॥ २ ॥

**यस्य क्रियासु सामर्थ्यं स्यात्सम्यग्गुरुरागतः । योग्यता तस्य दीक्षायामपि माषतुषाकृतेः ॥ ३ ॥**

यस्येति—यस्य क्रियासु चारित्रानुष्ठानेषु । सम्यग्गुरुरागतः । सामर्थ्यं स्यात् । तस्य माषतुषाकृतेरपि मुग्धतया माषतुषसदृशस्यापि दीक्षायां योग्यता ॥ ३ ॥

**देया दीक्षास्य विधिना नामादिन्यासपूर्वकम् । हन्तानुपप्लवश्चायं संप्रदायानुसारतः ॥ ४ ॥**

देयेति–अस्य योग्यस्य विधिना आगमोक्तेन दीक्षा देया नामादिन्यासपूर्वकं । अयं च नामादिन्यासः सम्प्रदायानुसारतो हन्तानुपप्लयो विघ्नरहितः । प्रवचनप्रसिद्धनामादिन्यासेनैव निर्विघ्नदीक्षानिर्वाहात् । कृतप्रशान्तादिनाम्नः प्रशमादिस्वरूपोपलम्भात् । तन्नाम्नैव तद्गुणस्मरणाद्युपलब्धेः । जात्यादिसंपन्नानां प्रतिपन्नपालनोपपत्तेः । तदुक्तं–" तन्नामादिस्थापनमविप्लुत स्वगुरुयोजनतः ॥ १ ॥ नामनिमित्तं तत्त्वं तथा तथा चोद्भूत पुरा यदिह तत्स्थापना तु दीक्षा तस्येनान्यस्तदुपचारः ॥ १ ॥ " ४ ॥

नाम्नान्वर्थेन कीर्त्तिः स्यात् स्थापनारोग्यकारिणी । द्रव्येण च व्रतस्थैर्यं भाव. सत्पददीपनः ॥ ५ ॥

नाम्नेति–नाम्नाऽन्वर्थेन गुणनिष्पन्नेन कीर्त्तिः स्यात् । तत्कीर्तनमात्रादेव शब्दार्थप्रतिपत्तेर्विदुषां प्राकृतजनस्य च मनःप्रसादात् । यथा जम्बूसुधर्मस्वामिप्रभृतीनां । स्थापनाकारविशेषरूपा रजोहरणमुखवस्त्रिकादिधारणद्वारेण भावगर्जया प्रवृत्त्या आरोग्यकारिणी भावरोगोपमर्दनात् । द्रव्येण चाचारादिश्रुतरूपेण सकलसाधुक्रियारूपेण वा व्रतस्थैर्यं प्रतिपन्नविरतिदार्ढ्यं भवति । भावः सम्यग्दर्शनादिप्रकर्षरूपः सत्पददीपन आचार्यत्वादिविशिष्टावस्थितावस्थाप्रकाशकः । सामस्त्येनाप्येषां प्रकृष्टानां कीर्त्यादिहेतुत्वं सम्भवत्येवेत्यूहनीयं । तदुक्तं–" कीर्त्यारोग्यध्रुवपदसंप्राप्तेः सूचकानि नियमेन । नामादीन्याचार्या वदन्ति सत्त्वेषु यतिवृत्त्यम् ॥ १ ॥ " अत्र ध्रुवपदं भावप्रधाननिर्देशात् स्थैर्यवाचकमिति वदन्ति ॥ ५ ॥

श्राद्धो वचनक्षान्तिर्धर्मक्षान्तिरनन्तरम् । अनुष्ठानं च वचनानुष्ठानात् स्यादसंगतम् ॥ ६ ॥

इहेति–इह दीक्षायामादौ प्रथमं वचनक्षान्तिः । अनन्तरं धर्मक्षान्तिर्भवति । अनुष्ठानं च वचनानुष्ठानादध्ययनाद्यभिरतिलक्षणादनन्तरं तन्मयीभावेन स्पर्शासौ सत्यामसंगकं स्यात् ॥ ६ ॥

**उपकारापकाराभ्यां विपाकाद्वचनात्तथा । धर्माच्च समये क्षान्तिः पञ्चधा हि प्रकीर्तिता ॥ ७ ॥**

उपकारेति–उपकारेण क्षान्तिः उपकारिप्रोक्तदुर्वचनाद्यपि सहमानस्य । अपकारेण क्षान्तिः मम दुर्वचनाद्यसहमानस्यायमपकारी भविष्यतीत्याशयेन क्षमां कुर्वतः । विपाकाच्चेहपरलोकगतानर्थपरंपरालक्षणादालोच्यमानात् क्षान्तिर्विपाकक्षान्तिः । तथा वचनात् क्षान्तिरागममेवालंबनीकृत्योपकारित्वादिनैरपेक्ष्येण क्षमां कुर्वतः । धर्माच्चात्मशुद्धस्वभावलक्षणाज्जायमाना क्षान्तिश्चन्दनस्येव शरीरस्य छेददाहादिषु सौरभ्यादिस्वधर्मकल्पा परोपकारिणी सहजत्वेनावस्थिताऽविकारिणी । एवं पंचधा क्षान्तिः समये प्रकीर्तिता । यदुक्तं–"उपकार्यपकारिविपाकवचनधर्मोत्तरा मता क्षान्तिरिति" ॥ ७ ॥

**प्रीतिभक्तिवचोऽसंगैरनुष्ठानं चतुर्विधम् । आद्यद्वये क्षमास्तिस्रोऽन्तिमे द्वे चान्तिमद्वये ॥ ८ ॥**

प्रीतीति–प्रीतिभक्तिवचोऽसंगैर्निमित्तैश्चतुर्विधमनुष्ठानं । प्रीत्यनुष्ठानं, भक्त्यनुष्ठानं, वचनानुष्ठानं, असंगानुष्ठानं चेति । तत्र सुन्दरतामात्राद्हितरुचिपूर्वकानुष्ठानमाद्यं, गौरवाद्हितरुचिपूर्वकानुष्ठानं द्वितीयं, सर्वत्राप्तवचनपुरस्कारप्रवृत्तमनुष्ठानं तृतीयं, अभ्यासादात्मसाद्भूतं परद्रव्यानपेक्षमनुष्ठानं चतुर्थं । यदाहुः–" तत्प्रीतिभक्तिवचनासंगोपपदं चतुर्विधं गीतम् । तत्त्वाभिज्ञैः परमपदसाधनं सर्वमेवैतत् ॥ १ ॥ यत्रादरोऽस्ति परमः प्रीतिश्च हितोदया भवति कर्तुः । शेषत्या-

गेन करोति यत्र तत्प्रीत्यनुष्ठानम् ॥ २ ॥ गौरवविशेषयोगाद्बुद्धिमतो यद्विशुद्धतरयोगम् । क्रिययेतरतुल्यमपि ज्ञेयं तद्भक्त्यनुष्ठानम् ॥ ३ ॥ अत्यन्तवल्लभा खलु पत्नी तद्वद्धिता च जननीति । तुल्यमपि कृत्यमनयोर्ज्ञातं स्यात्प्रीतिभक्तिगतम् ॥ ४ ॥ वचनात्मिका प्रवृत्तिः सर्वत्रौचित्ययोगतो या तु । वचनानुष्ठानमिदं चारित्रवतो नियोगेन ॥ ५ ॥ यत्त्वभ्यासातिशयात्सात्मीभूतमिव चेष्टते सद्भिः । तदसंगानुष्ठानं भवति त्वेतत्तदावेधात् ॥ ६ ॥ चक्रभ्रमणं दण्डात्तदभावे चैव यत्परं भवति । वचनासंगानुष्ठानयोस्तु तज्ज्ञापकं ज्ञेयम् ॥ ७ ॥ " आद्यद्वये प्रीतिभक्त्यनुष्ठानलक्षणे तिस्रः क्षमा भवन्ति उपकारापकारविपाकोत्तराः । अन्तिमद्वये च वचनासंगानुष्ठानलक्षणे द्वे क्षमे भवतो वचनधर्मोत्तरे । तदुक्तं—" आद्यद्वये त्रिभेदा चरमद्वितये द्विभेदेति " ॥ ८ ॥

सूक्ष्माश्च विरलाश्चैवातिचारा वचनोदये । स्थूलाश्चैव घनाश्चैव ततः पूर्वममी पुनः ॥ ९ ॥

सूक्ष्माश्चेति—सूक्ष्माश्च लघवः प्रायशः कादाचित्कत्वात् । विरलाश्चैव सन्तानाभावात् । अतिचारा अपराधाः । वचनोदये भवन्ति । ततो वचनोदयात्पूर्वममी अतिचाराः पुनः स्थूलाश्च बादराश्च घनाश्च निरन्तराश्च भवन्ति । तदुक्तं—" चरमाद्याया सूक्ष्मा अतिचाराः प्रायशोऽतिविरलाश्च । आद्यत्रये त्वमी स्युः स्थूलाश्च तथा घनाश्चैव" ॥ ९ ॥

ततो निरतिचारेण धर्मक्षान्त्यादिना किल । सर्वं संवत्सरादूर्ध्वं शुक्लमेवोपजायते ॥ १० ॥

तत इति—ततो वचनोदयात् किल निरतिचारेण धर्मक्षान्त्यादिना, आदिपदेन धर्ममार्दवशुक्लमध्यादिमहः । सर्वं दशविधमपि क्षान्त्यादि संवत्सरादूर्ध्वं क्रियामलत्यागाच्छुक्लमेवोपजायते ॥ १० ॥

मासादौ व्यन्तरादीनां तेजोलेश्याव्यतिक्रमः । पर्याये युज्यते चेदं गुणश्रेणिप्रवृद्धितः ॥ ११ ॥

मासादाविति–इदं च संवत्सरादूर्ध्वं सर्वशुक्लापत्तौ च मासादौ पर्याये व्यन्तरादीनां तेजोलेश्याव्यतिक्रमः प्रज्ञप्त्युक्तो युज्यते गुणश्रेणिप्रवृद्धितः ॥ ११ ॥

दिनानि पक्षा मासा वा गण्यन्ते शरदोऽपि च । नास्यां गुणाविघातस्य गण्यतेऽवसरः पुनः ॥ १२ ॥

नैहिकार्थानुरागेण यस्यां पापविषव्ययः । वसन्तनृपचेष्टेव सा दीक्षानर्थकारिणी ॥ १३ ॥

इन्द्रियाणां कषायाणां गृह्यते मुण्डनोत्तरम् । या शिरोमुण्डनव्यंग्या तां सद्दीक्षां प्रचक्षते ॥ १४ ॥

दिनानीति श्लोकत्रयमदः कंठ्यम् ॥ १२-१३-१४ ॥

विहाय पूर्वसंयोगमस्यामुपशमं व्रजन् । मनाक्कायं प्रकर्षेण निश्चयेन च पीडयेत् ॥ १५ ॥

विहायेति–अस्यां सद्दीक्षायां पूर्वसंयोगं मातापित्रादिसंयोगं विहायोपशमं व्रजन् प्राप्नुवन् कायं स्वदेहं मनागध्ययनादिकालेऽविकृष्टेन तपसा प्रकर्षेण तदुत्तरं विकृष्टेन तपसा निश्चयेन चान्त्येऽनशनादिरूपेण पीडयेत् ॥ १५ ॥

वीराणां दुश्चरः पन्था एषोऽनागमगामिनाम् । आदानीयाभिधानानां भिन्दतां स्वसमुच्चयम् ॥ १६ ॥

शरीरेणैव युध्यन्ते दीक्षापरिणतौ बुधाः । दुर्लभं वैरिणं प्राप्य व्यावृत्ता बाह्ययुद्धतः ॥ १७ ॥

सर्वो यदर्थमारंभः क्रियतेऽनन्तदुःखकृत् । सर्पलालनमङ्गस्य पालनं तस्य वैरिणः ॥ १८ ॥

शरीराद्यनुरागस्तु न गतो यस्य तत्त्वतः । तेषामेकाकिभावोऽपि क्रोधाविनियत. स्मृतः ॥ १९ ॥
नन्वेवं तं विना साधोः कथं भिक्षाटनाद्यपि । न तस्य मोहजन्यत्वादसंगप्रतिपत्तितः ॥ २० ॥
ससंगप्रतिपत्तिर्हि ममता वासनात्मिका । असंगप्रतिपत्तिश्च मुक्तिवाञ्छानुरोधिनी ॥ २१ ॥
अनादिकालानुगता महती संगवासना । तत्त्वज्ञानानुगतया दीक्षयैव निरस्यते ॥ २२ ॥
यः समः सर्वभूतेषु त्रसेषु स्थावरेषु च । अत एव च तस्यैव दीक्षा सामायिकात्मिका ॥ २३ ॥
नारत्यानन्दयोरस्यामवकाशः कदाचन । प्रचारो नानुमत्यत्रे न तमस्तारकत्विषोः ॥ २४ ॥

वीराणामित्याद्यारभ्य नवश्लोकी प्रायो व्यक्तार्था ॥ १६-१७-१८-१९-२०-२१-२२-२३-२४ ॥

शुद्धोपयोगरूपेयमित्थं च व्यवतिष्ठते । व्यवहारेऽपि नैवास्या व्युच्छेदो वासनात्मना ॥ २५ ॥

शुद्धेति–इत्थं च ममत्वारत्यानन्दाद्यनाक्रान्तसच्चिदानन्दमयशुद्धात्मस्वभावाचरणरूपत्वे । इयं दीक्षा शुद्धोपयोगरूपा व्यवतिष्ठते । कषायक्लेशस्याप्यशुद्धतापादकस्याभावात् । व्यवहारेऽपि आहारविहारादिक्रियाकालेऽपि नैवास्याः शुद्धोपयोगरूपाया दीक्षाया वासनात्मना व्युच्छेदः । न च वासनात्मनाऽविच्छिन्नस्य तस्फलविच्छेदो नाम यथा मतिश्रुतोपयोगयोरन्यतरकालेऽन्यतरस्येति ध्येयम् ॥ २५ ॥

फले न तुल्यकक्षत्वं शुभशुद्धोपयोगयोः । येषामन्त्यक्षणे तेषां शैलेश्यामेव विश्रमः ॥ २६ ॥

फल इति—येषां वादिनां फले मोक्षलक्षणे शुभशुद्धोपयोगयोर्न तुल्यकक्षत्वं साधारण्येन प्रधानहेतुत्वं । तेषा शैलेश्यामन्त्यक्षण एव विश्रमः स्यात् तदैव सर्वसंवरोपपत्तेः । तदुपकारकत्वस्य चोभयत्राविशेषात्, तत्सन्निहितोपकारकत्वस्य च शुद्धोपयोगमात्राविश्रान्तत्वात्, आक्षेपिकस्य च तस्य शुद्धोपयोगेऽप्यबाधादुचितगुणवृत्तित्वेन न्याय्यत्वाच्चेति॥ २६ ॥

एतदेव भावयति—

अध्यात्मादिकयोगानां ध्यानेनोपक्षयो यदि । हन्त वृत्तिक्षयेण स्यात्तदा तस्याप्युपक्षयः ॥ २७ ॥

अध्यात्मादिकेति—भावितार्थः ॥ २७ ॥

एतच्च व्यवहारे ध्यानाभावमभिप्रेत्योक्तं वस्तुतः तदा ध्यानमप्यनपायमेवेत्याह—

व्यवहारेऽपि च ध्यानमक्षतप्रसरं सदा । मनोवाक्काययोगानां सुव्यापारस्य तत्त्वतः ॥ २८ ॥

व्यवहारेऽपि चेति—न हि चित्तनिरोधमात्रमेव ध्यानमभ्युपेमः, किं तु करणदृढसुव्यापारमपीति । तदापि तदक्षतमिति तात्पर्यम् ॥ २८ ॥

शुभं योगं प्रतीत्यास्यामनारंभित्वमागमे । व्यवस्थितमितश्चांशात् स्वभावसमवस्थितिः ॥ २९ ॥

शुभमिति—शुभं योगं प्रतीत्यास्यां सद्दीक्षायामागमे प्रज्ञप्त्यादिरूपेऽनारंभित्वं व्यवस्थितं " तत्थ णं जे ते पमत्तसंजया

ते सुहं जोगं पजुंच सो आयारंजा" इत्यादिवचनात्। इतश्चांशात् स्वभावसमवस्थितिरनारंभित्वस्य चरमगुणस्थानभावित्वात्। ज्ञानाद्यप्रकर्षोऽपि ज्ञानचारित्रयोस्तारतम्ययोग्यतया तदुपपत्तेरप्रमादेन विशुद्धत्वाच्चेति ॥ २९ ॥

व्युत्थानं व्यवहारश्चेन्न ध्यानाप्रतिबन्धतः। स्थितं ध्यानान्तरारंभे एकध्यानान्तरं पुनः ॥ ३० ॥

व्युत्थानमिति—व्यवहार आत्ममात्रप्रतिबन्धशून्यं ध्यानमप्रतिबन्धेन व्युत्थानं चेत्, न, ध्यानाप्रतिबन्धतः सुव्यापारत्वात् तस्य करणनिरोधेऽनुकूलत्वादेव चित्तविक्षेपाणामिव तदप्रतिबन्धकत्वात्। एकध्यानान्तरं पुनः ध्यानान्तरारंभे मैत्र्यादिपरिकर्मणि स्थितं। तथा च तावन्मात्रेण व्युत्थानत्वे समाधिप्रारंभस्यापि व्युत्थानत्वापत्तिरिति न किंचिदेतत् ॥ ३० ॥

विचित्रत्वमनालोच्य बकुशत्वादिना श्रुतम्। दीक्षाशुद्धैकरूपेण वृथा भ्रान्तं दिगंबरैः ॥ ३१ ॥

विचित्रत्वमिति—बकुशत्वादिना श्रुतं प्रवचनादाकर्णितं विचित्रत्वमनालोच्य दीक्षाया यच्छुद्धमेकं रूपं परमोपेक्षामात्रलक्षणं तेन। वृथा दिगंबरैर्भ्रान्तं। यैः प्रतिक्षिप्यते व्यवहारकाले दीक्षापारम्यं। शुद्धदीक्षाकारणावष्टम्भने उपरितनोत्कर्षाभावेऽपि दीक्षामात्राप्रतिक्षेपे च धर्मोपकरणधारणेऽपि तेषां तदव्याघातः स्यात्। बुद्धिपूर्वकममत्वपरिहारस्याप्याहारादिवदुपपत्तेरित्यन्यत्र विस्तरः ॥ ३१ ॥

चित्रा क्रियात्मना चेयमेका सामायिकात्मना। तस्मात् समुच्चयेनार्यैः परमानन्दकृन्मता ॥ ३२ ॥

चित्रेति—क्रियात्मना चेयं सद्दीक्षा चित्रा नानाप्रकारा। सामायिकात्मना समतापरिणामेनैका। तस्मात्समुच्चयेन ज्ञानक्रिययोस्तुल्यबलत्वेनार्यैः शिष्टैः परमानन्दकृन्मता ॥ ३२ ॥ इति दीक्षाद्वात्रिंशिका ॥ २० ॥

## ॥ अथ विनयद्वात्रिंशिका ॥ २९ ॥



अनन्तरं दीक्षा निरूपिता तस्याश्च विनयगर्भाया एव सफलत्वमिति विनयं निरूपयन्नाह—

**कर्मणां द्राग्विनयनाद्विनयो विदुषां मतः । अपवर्गफलाढ्यस्य मूलं धर्मतरोरयम् ॥ १ ॥**

कर्मणामिति—कर्मणां ज्ञानावरणीयादीनां द्राक् शीघ्रं विनयनादपनयनात् विदुषां विनयो मतः । अयमपवर्गफलेनाढ्यस्य पूर्णस्य धर्मतरोर्मूलम् ॥ १ ॥

**ज्ञानदर्शनचारित्रतपोभिरुपचारतः । अयं च पञ्चधा भिन्नो दर्शितो मुनिपुंगवैः ॥ २ ॥**

ज्ञानेति—ज्ञानादीनां विनयत्वं पूर्वकर्मविनयनादुत्तरकर्माबन्धाच्च द्रष्टव्यम् ॥ २ ॥

**प्रतिरूपेण योगेन तथानाशातनात्मना । उपचारो द्विधा तत्रादिमो योगत्रयात्त्रिधा ॥ ३ ॥**

प्रतिरूपेणेति—प्रतिरूपेणोचितेन योगेन । तथाऽनाशातनात्मना आशातनाऽभावेन उपचारो द्विधा । तत्रादिमः प्रतिरूपयोगात्मको योगत्रयात्त्रिधा कायिको वाचिको मानसश्चेति ॥ ३ ॥

**अभिग्रहासनत्यागावभ्युत्थानाञ्जलिग्रहौ । कृतिकर्म च शुश्रूषा गतिः पश्चाच्च संमुखम् ॥ ४ ॥**

अभिग्रहेति—अभिग्रहो गुरुनियोगकरणाभिसन्धिः । आसनत्याग आसनदानं पीठकाद्युपनयनमित्यर्थः । अभ्युत्थानं

तिषयस्य सहसार्द्धदर्शनेन । अञ्जलिप्रग्रहः प्रभावो । कृतिकर्म च वन्दनं । शुश्रूषा विधिवददूरासन्नतया सेवनं । पश्चादनुगमनं, संमुखं च गतिरागच्छतः । इति ॥ ४ ॥

कायिकोऽष्टविधश्चायं वाचिकश्च चतुर्विधः । हितं मितं चापरुषं ब्रुवतोऽनुविचिन्त्य च ॥ ५ ॥

कायिक इति—अयं चाष्टविधः कायिक उपचारः । वाचिकस्तु चतुर्विधः । हितं परिणामसुन्दरं ब्रुवतः प्रथमः । मितं स्तोकाक्षरं ब्रुवतो द्वितीयः । अपरुषं चानिष्ठुरं ब्रुवतस्तृतीयः । अनुविचिन्त्य स्वालोच्य च ब्रुवतश्चतुर्थ इति ॥ ५ ॥

मानसश्च द्विधा शुभप्रवृत्त्याऽसन्निरोधत । छद्मस्थानामयं प्रायः सकलोऽन्यानुवर्त्तितः ॥ ६ ॥

मानसश्चेति—मानसश्चोपचारो द्विधा, शुभप्रवृत्त्या धर्मध्यानादिप्रवृत्त्या, असन्निरोधत आर्तध्यानादिप्रतिषेधात् । अयं च सकलः प्रायः प्रतिरूपो विनयश्छद्मस्थानामन्यानुवर्त्तित आत्मव्यतिरिक्तप्रधानानुवृत्तेः । प्रायोग्रहणादुत्पन्नकेवलज्ञानदशायां केवलिनामपि । अन्यदा तु तेषामप्रतिरूप एव विनयस्तथैव तत्कर्मविनयनोपपत्तेः । तदुक्तं—"पडिरूवो खलु विणओ पराणुअत्तिमइओ मुणेअव्वो । अप्पडिरूवो विणओ णायव्वो केवलीणं तु ॥ १ ॥" ॥ ६ ॥

अर्हत्सिद्धकुलाचार्योपाध्यायस्थविरेषु च । गणसंघक्रियाधर्मज्ञानज्ञानिगणिष्वपि ॥ ७ ॥

अर्हदिति—अर्हन्तस्तीर्थकराः । सिद्धाः क्षीणाष्टकर्ममलाः । कुलं नागेन्द्रादि । आचार्यः पञ्चविधाचारानुष्ठाता तत्प्ररूपकश्च । उपाध्यायः स्वाध्यायपाठकः । स्थविरः सीदतां स्थिरीकरणहेतुः । गणः कौटिकादिः । संघः साध्व्यादिसमुदायः । क्रियाऽस्तिवादरूपा । धर्मः श्रुतधर्मादिः । ज्ञानं मत्यादि । ज्ञानिनस्तद्वन्तः । गणिर्गणाधिपतिः ॥ ७ ॥

**अनाशातनया भक्त्या बहुमानेन वर्णनात् । द्विपंचाशद्विधः प्रोक्तो द्वितीयश्चौपचारिकः ॥ ८ ॥**

अनाशातनयेति–अनाशातनया सर्वथाऽहीलनया । भक्त्या उचितोपचाररूपया । बहुमानेनान्तरभावप्रतिबन्धरूपेण । वर्णनात् सद्भूतगुणोत्कीर्तनात् । द्वितीयश्चानाशातनात्मक औपचारिकविनयो द्विपञ्चाशद्विधः प्रोक्तः । त्रयोदशपदानां चतुर्भिर्गुणने यथोक्तसंख्यालाभात् ॥ ८ ॥

**एकस्याशातनाप्यत्र सर्वेषामेव तत्त्वतः । अन्योऽन्यमनुविद्धा हि तेषु ज्ञानादयो गुणाः ॥ ९ ॥**

एकस्येति–अत्रार्हदादिपदेषु एकस्यापि आशातना तत्त्वतः सर्वेषां । हि यतस्तेषु ज्ञानादयो गुणा अन्योन्यमनुविद्धाः । यदेव ह्येकस्य शुद्धं ज्ञानं तदेवापरस्यापि । इत्थं च हीलना विपर्यीभूतज्ञानादिसंबन्धस्य सर्वत्राविशेषादेकहीलने सर्वहीलनापत्तेर्दारुणविपाकत्वमवधार्य न कस्यापि हीलना कार्येति भावः ॥ ९ ॥

**नूनमल्पश्रुतस्यापि गुरोराचारशालिनः । हीलना भस्मसात्कुर्याद्गुणं वह्निरिवेन्धनम् ॥ १० ॥**

नूनमिति–नूनं निश्चितमल्पश्रुतस्याप्यनधीतागमस्यापि कारणान्तरस्थापितस्य गुरोराचार्यस्याचारशालिनः पञ्चविधाचारनिरतस्य हीलना गुणं स्वगतचारित्रादिकं भस्मसात् कुर्यात् । इन्धनमिव वह्निः ॥ १० ॥

**शक्त्यग्रज्वलनव्यालसिंहक्रोधातिशायिनी । अनन्तदुःखजननी कीर्तिता गुरुहीलना ॥ ११ ॥**

शक्त्यग्रेति–शक्तिः प्रहरणविशेषस्तदग्रं शक्त्यग्रं, ज्वलनोऽग्निः, व्यालसिंहयोः सर्पकेसरिणोः क्रोधः कोपः, तदतिशायिनी तेभ्योऽप्यधिका अनन्तदुःखजननी गुरुहीलना कीर्तिता दशवैकालिके ॥ ११ ॥

पठेद्यस्यान्तिके धर्मपदान्यस्यापि सन्ततम् । कायवाङ्मनसां शुद्ध्या कुर्याद्विनयमुत्तमम् ॥ १२ ॥

पठेदिति—यस्यान्तिके धर्मपदानि धर्मफलानि सिद्धान्तपदानि पठेत् । अस्य सन्ततमपि निरन्तरमपि, न तु सूत्रग्रहणकाल एव, कुशलानुबन्धव्यवच्छेदप्रसंगात् । कायवाङ्मनसां शुद्ध्या उत्तम विनयं कुर्यात् ॥ १२ ॥

पर्यायेण विहीनोऽपि शुद्धज्ञानगुणाधिकः । ज्ञानप्रदानसामर्थ्याद्तो रत्नाधिकः स्मृतः ॥ १३ ॥

पर्यायेणेति—अतो धर्मपाठकस्य सदा विनयार्हत्वात् पर्यायेण चारित्रपर्यायेण विहीनोऽपि शुद्धज्ञानगुणेनाधिको ज्ञानप्रदानसामर्थ्यमधिकृत्य रत्नाधिकः स्मृत आवश्यकादौ । स्वापेक्षितरत्नाधिक्येन तत्त्वव्यवस्थितेः । विवेचितमिदं सामाचारीप्रकरणे ॥ १३ ॥

शिल्पार्थमपि सेवन्ते शिल्पाचार्यं जनाः किल । धर्माचार्यस्य धर्मार्थं किं पुनस्तदतिक्रमः ॥ १४ ॥

शिल्पार्थमिति—व्यक्तः ॥ १४ ॥

ज्ञानार्थं विनयं प्राहुरपि प्रकटसेविनः । अत एवापवादेनान्यथा शास्त्रार्थबाधनम् ॥ १५ ॥

ज्ञानार्थमिति—अत एव ज्ञानादिग्रहणे विनयपूर्वकरणनियमस्य सिद्धान्तसिद्धत्वादेवापवादेन ज्ञानार्थं प्रकटसेविनोऽपि विनयमाहुः, पर्यायादिकारणेष्वेतदन्तर्भावात् । अन्यथा तथाविधकारणेऽपि तद्विनयानादरे शास्त्रार्थबाधनं शास्त्राज्ञाव्यतिक्रमः । तदुक्तं—"पयाई अकुव्वंतो जहारिहं अरिहदेसिए मग्गे । ण हवइ पवयणभत्ती अभत्तिमंतादओ दोसा ॥१॥"१९

नन्वेवमपवादतोऽपि प्रकटप्रतिषेविणोऽग्रहितग्रहिलनृपन्यायेन द्रव्यवन्दनमेव यदुक्तं तद्भंगापत्तिज्ञानगुणबुद्ध्या तद्वन्दने भाववन्दनावतारादित्याशंक्य तदुक्तिप्रायिकत्वाभिप्रायेण समाधत्ते—

न चैवमस्य भावत्वाद्द्रव्यत्वोक्तिर्विरुध्यते । सद्भावकारणत्वोक्तेर्भावस्याप्यागमाख्यया ॥ १६ ॥

न चैवमिति—न चैवं ज्ञानार्थं प्रकटप्रतिषेविणोऽपि विनयकरणेऽस्य ज्ञानार्थविनयस्य भावत्वाद्द्रव्यत्वोक्तिरापवादिकविनयस्योपदेशपदादिप्रसिद्धा विरुध्यते, भावस्यापि आगमाख्यया आगमनाम्ना सद्भावकारणत्वोक्तेः । पुष्टालंबनत्ववचनादस्वारसिककारणस्थल एवोक्तनियमादिति । भावलेशस्तु मार्गानुसारी यत्र क्वचिदपि मार्गोद्भासनार्थं वन्दनादिविनयार्हतानिमित्तमेव श्रूयते । यदुक्तं बृहत्कल्पभाष्ये—"दंसणनाणचरित्तं तवविणयं जत्थ जत्तियं पासे । जिणपन्नत्तं भत्तीइ पूयए तं तहिं भावं" ॥ १ ॥ १६ ॥

विनयेन विना न स्याज्जिनप्रवचनोन्नतिः । पयःसेकं विना किं वा वर्धते भुवि पादपः ॥ १७ ॥

विनयं ग्राह्यमाणो यो मृदूपायेन कुप्यति । उत्तमां श्रियमायान्तीं दण्डेनापनयत्यसौ ॥ १८ ॥

त्रैलोक्येऽपि विनीतानां दृश्यते सुखमंगिनाम् । त्रैलोक्येऽप्यविनीतानां दृश्यतेऽसुखमंगिनाम् ॥ १९ ॥

ज्ञानादिविनयेनैव पूज्यत्वाप्तिः श्रुतोदिता । गुरुत्वं हि गुणापेक्षं न स्वेच्छामनुधावति ॥ २० ॥

विनये च श्रुते चैव तपस्याचार एव च । चतुर्विधः समाधिस्तु दर्शितो मुनिपुंगवैः ॥ २१ ॥

शुश्रूषति विनीतः सन् सम्यगेवावबुध्यते । यथावत् कुरुते चार्थं मदेन च न माद्यति ॥ २२ ॥
श्रुतमेकाग्रता वा मे भवितास्मानमेव वा । स्थापयिष्यामि धर्मेऽन्यं मेस्यध्येति सदागमम् ॥ २३ ॥
कुर्यात्तपस्तथाचारं नैहिकामुष्मिकाशया । कीर्त्याद्यर्थं च नो किं तु निष्कामो निर्जराकृते ॥ २४ ॥
इत्थं समाहिते स्वान्ते विनयस्य फलं भवेत् । स्पर्शाख्यं स हि तत्त्वाप्तिबोधमात्रं परः पुनः ॥२५॥
अक्षेपफलद स्पर्शस्तन्मयीभावतो मतः । यथा सिन्दूरसस्पर्शस्ताम्रे सर्वानुवेधतः ॥ २६ ॥
इत्थं च विनयो मुख्यः सर्वानुगमशक्तितः । मिष्टान्नेष्विव सर्वेषु निपतन्निक्षुजो रसः ॥ २७ ॥
दोषाः किल तमांसीव क्षीयन्ते विनयेन च । प्रसृतेनांशुजालेन चण्डमार्तण्डमण्डलात् ॥ २८ ॥
श्रुतस्याप्यतिदोषाय महर्षीं विनयं विना । यथा महानिधानस्य विमाग्य( न )धनसन्निधिम् ॥२९॥
विनयस्य प्रधानत्वद्योतनायैव पर्षदि । तीर्थं तीर्थपतिर्नत्वा कृतार्थोऽपि कथां जगौ ॥ ३० ॥
छिद्यते विनयो यैस्तु शुश्रूषोऽपि(षणा)परैरपि । तैरप्यग्रेसरीभूय मोक्षमार्गो विलुप्यते ॥ ३१ ॥
नियुङ्क्ते यो यथास्थानमेनं तस्य तु सन्निधौ । स्वयंवराः समायान्ति परस्य रतिसंपदः ॥ ३२ ॥
शिष्टमर्थं स्पष्टम् ॥ ३२ ॥ इति विनयद्वात्रिंशिका ॥ २९ ॥

# अथ केवलिभुक्तिव्यवस्थापनद्वात्रिंशिका ॥ ३० ॥

अनन्तरं विनय उक्तस्तत्पालनेन च महात्मा केवली भवति, स च कवलभोजित्वान्न कृतार्थ इति दिगंबरमतिभ्रमनिरासार्थमाह—

**सर्वथा दोषविगमात् कृतकृत्यतया तथा । आहारसंज्ञाविरहादनन्तसुखसंगतेः ॥ १ ॥**

सर्वथेति—सर्वथा सर्वप्रकारैर्दोषविगमात् क्षुधायाश्च दोषत्वात्तदभावे कवलाहारानुपपत्तेः । तथा कृतकृत्यतया केवलिनः कवलभोजित्वे तद्भान्त्यापत्तेः । आहारसंज्ञाविरहात् तस्याश्चाहारहेतुत्वात् । अनन्तसुखस्य संगतेः केवलिनः कवलभुक्तौ तत्कारणक्षुद्वेदनोदयावश्यंभावात्तेनानन्तसुखविरोधात् ॥ १ ॥

**दग्धरज्जुसमत्वाच्च वेदनीयस्य कर्मणः । अदोऽभवतया देहगतयोः सुखदुःखयोः ॥ २ ॥**

दग्धेति—च पुनर्वेदनीयकर्मणो दग्धरज्जुसमत्वात्सादृशेन तेन स्वकार्यस्य क्षुद्वेदनोदयस्य जनयितुमशक्यत्वात् । देहगतयोः शरीराश्रितयोः सुखदुःखयोरदोऽभवतयेन्द्रियाधीनतयाऽतीन्द्रियाणां भगवतां तदनुपपत्तेः ॥ २ ॥

**मोहात्परप्रवृत्तेश्च सातवेद्यानुदीरणात् । प्रमादजननाद्भूयैराहारकथयापि च ॥ ३ ॥**

मोहादिति—मोहान्मोहनीयकर्मणः परप्रवृत्तेः परद्रव्यप्रवृत्तेर्निर्मोहस्य सत आहारादिपरद्रव्यप्रवृत्त्यनुपपत्तेः । सातवे-

यस्य सातवेदनीयस्यानुदीरणात् सातासातमनुजायुषामुदीरणायाः सप्तमगुणस्थान एव निवृत्तेः केवलिनः कथमुक्तौ तज्जन्यसातोदीरणप्रसंगात्। च पुनराहारकथयाप्युक्तेरस्पर्शं प्रमादजननादाहारस्य सुतरां तथात्वात् ॥ ३ ॥

भुक्त्या निद्रादिकोत्पत्तेस्तथा ध्यानतपोव्ययात्। परमौदारिकांगस्य स्यात्सुत्वाचां विनापि च ॥ ४ ॥

भुक्त्येति–भुक्त्या कवलाहारेण निद्रादिकस्योत्पत्तेः, आदिना रासनमतिज्ञानेर्यापथपरिग्रहः। केवलिनां च निद्राद्यभावात्तन्नाप्यभुक्तेरप्ययोगात्। तथा भुक्तौ सत्यां ध्यानतपसोर्व्ययात्, केवलिनश्च तयोः सदातनत्वात्। तां विनापि च भुक्तिं विनाऽपि च परमौदारिकांगस्य स्यात्सु ( स्तु ) स्वाचिरकालमवस्थितिशीलत्वात् तदर्थं केवलिनस्तत्कल्पनाऽयोगात् ॥ ४ ॥

परोपकारहानेश्च पुरीषादिजुगुप्सया। व्याध्युत्पत्तेश्च भगवान् भुंक्ते नेति दिगम्बराः ॥ ५ ॥

परेति–परोपकारहानेश्च भुक्तिकाले धर्मदेशनाऽनुपपत्तेः, सदा परोपकारस्वभावस्य भगवतस्तद्व्याघातायोगात्। पुरीषादिजुगुप्सया, भुक्तौ तदौचित्यात्। व्याध्युत्पत्तेश्च भुक्तेस्तन्निमित्तत्वात्। भगवान् केवली भुंक्ते नेति दिगंबरा वदन्ति॥५॥

सिद्धान्तश्चायमधुना लेशेनास्माभिरुच्यते। दिगम्बरमतव्यालपलायनकलागुरुः ॥ ६ ॥

सिद्धान्तश्चायमिति–व्यक्तः ॥ ६ ॥

हन्ताज्ञानादिका दोषा घातिकर्मोदयोद्भवाः। तदभावेऽपि किं न स्याद्वेदनीयोद्भवा क्षुधा ॥ ७ ॥

हन्तेति–हन्त अज्ञानादिका घातिकर्मोदयोद्भवा दोषाः प्रसिद्धाः । तदभावेऽपि वेदनीयोद्भवा क्षुधा किं न स्यात् । न हि वयं भवन्तमिव तत्त्वमनालोच्य क्षुत्पिपासादीनेव दोषानभ्युपेमो येन निर्दोषस्य केवलिनः क्षुधाद्यभावः स्यादिति भावः ॥ ७ ॥

**अव्याबाधविघाताच्चेत्सा दोष इति ते मतम् । नरत्वमपि दोषः स्यात्तदा सिद्धत्वदूषणात् ॥ ८ ॥**

अव्याबाधेति–अव्याबाधस्य निरतिशयसुखस्य विघातात् सा क्षुधा दोषो गुणदूषणस्यैव दोषलक्षणत्वादिति चेद्यदि ते तव मतं, तदा नरत्वमपि भवतो दोषः स्यात् सिद्धत्वदूषणात् । तस्मात् केवलज्ञानप्रतिबन्धकत्वेन घातिकर्मोदयोद्भवानामज्ञानादीनामेव दोषत्वं, न तु क्षुधादीनामिति युक्तमुत्पश्यामः ॥ ८ ॥

**घातिकर्मक्षयादेवाक्षता च कृतकृत्यता । तदभावेऽपि नो बाधा भवोपग्राहिकर्मभिः ॥ ९ ॥**

घातीति–घातिकर्मक्षयादेव अक्षताऽहीना च कृतकृत्यता भवोपग्राहिकर्मभिर्वेदनीयादिभिः सद्भिः । तदभावेऽपि कृतकृत्यत्वाभावेऽपि नो नैव बाधा । सर्वथा कृतकृत्यत्वस्य सिद्धेष्वेव संभवात् । उपादित्साभावेऽपि उपादेयस्य मोक्षस्य सयोगिकेवलित्वकालेऽसिद्धेः । रागाद्यभावमात्रेण कृतकृत्यत्वस्य च भुक्तिपक्षेऽप्यबाध एवेति कथितप्रायमेव ॥ ९ ॥

**आहारसंज्ञा चाहारतृष्णाख्या न मुनेरपि । किं पुनस्तदभावेन स्वामिनो मुक्तिबाधनम् ॥ १० ॥**

आहारसंज्ञा चेति–आहारसंज्ञा चाहारतृष्णाख्या मोहाभिव्यक्तचैतन्यस्य संज्ञापदार्थत्वात् न मुनेरपि भावसाधो

रपि, किं पुनस्तद्भावेनाहारसंज्ञाभावेन स्वामिनो भगवतो मुक्तिबाधनं ? । तथा चाहारसामान्ये तद्विशेषे वा आहारसंज्ञाया हेतुत्वमेव नास्तीत्युक्तं भवति । न च तद्विशेषे तद्धेतुत्वमेवाप्रमत्तादीनां चाहाराभावाच्च व्यभिचार इति कुचोद्यमाशंकनीयं, आहारसंज्ञाया अतिचारनिमित्तत्वेन कदापि निरतिचाराहारस्य साधूनामप्राप्तिप्रसंगात् ॥ १० ॥

अनन्तं च सुखं भर्तुर्ज्ञानादिगुणसंगतम् । क्षुधादयो न बाधन्ते पूर्णं स्वस्ति महोदये ॥ ११ ॥

अनन्तं चेति–अनन्तं च सुखं भर्तुर्भगवतो ज्ञानादिगुणसंगतं तन्मयीभूतमिति यावत् । अज्ञानादिजन्यदुःखनिवृत्तेः सर्वेषामेव कर्मणां परिणामदुःखहेतुत्वाच्च क्षुदादयो न बाधन्ते स्वभावनियतसुखानामेव तैर्बाधनं । पूर्णं तु निरवशेषं तु सुखं महोदये मोक्षेऽस्ति । तत्रैव सर्वकर्मक्षयोपपत्तेः ॥ ११ ॥

दग्धरज्जुसमत्वं च वेदनीयस्य कर्मणः । वदन्तो नैव जानन्ति सिद्धान्तार्थव्यवस्थितिम् ॥ १२ ॥

दग्धेति–दग्धरज्जुसमत्वं च वेदनीयस्य कर्मणो वदन्तः सिद्धान्तार्थव्यवस्थितिं नैव जानन्ति ॥ १२ ॥

पुण्यप्रकृतितीव्रत्वादसाताद्यनुपक्षयात् । स्थितिशेषाद्यपेक्षं वा तद्वचो व्यवतिष्ठते ॥ १३ ॥

पुण्येति–पुण्यप्रकृतीनां तीर्थकरनामादिरूपाणां तीव्रत्वात्तीव्रविपाकत्वात्तदन्यसातप्रायस्ये वेदनीयमात्रस्य दग्धरज्जुसमत्वासिद्धेरसातादीनामनुपक्षयादसातवेदनीयस्यापि तदसिद्धेः । पापप्रकृतीनां भगवति रसघातेन नीरसत्वाभ्युपगमे स्थितिघातेन निःस्थितिकत्वस्याप्यापत्तेः, अपूर्वकरणादौ बध्यमानप्रकृतिविषयकस्यैव तस्य व्यवस्थितेः । ननु तर्हि कथं

भवोपग्राहिकर्मणां केवलिना दग्धरज्जुकल्पत्वाभिधानमावश्यकवृत्त्यादौ श्रूयते? उच्यत आह–स्थितिशेषाद्यपेक्षं वा तद्वचो दग्धरज्जुकल्पत्ववचो व्यवतिष्ठते, न तु रसापेक्षया, अन्यथा सूत्रकृद्वृत्तिविरोधप्रसंगात्, असातादिप्रकृतीनामसुखदत्वाभिधानमप्यावश्यकनिर्युक्त्यादौ घातिकर्मजन्यबहुतरासुखविलयेनाल्पस्या ( नाल्पस्या ) विवक्षणात् । अन्यथा भवोपग्रहायोगादिति विभावनीयं सुधीभिः ॥ १३ ॥

**इन्द्रियोद्भवताध्रौव्यं बाह्ययोः सुखदुःखयोः । चित्रं पुनः श्रुतं हेतुः कर्माध्यात्मिकयोस्तयोः ॥ १४ ॥**

इन्द्रियेति–इन्द्रियोद्भवताया ध्रौव्यमावश्यकत्वं बाह्ययोरिन्द्रियार्थसंबन्धापेक्षयोर्विलक्षणयोरेव सुखदुःखयोराध्यात्मिकयोस्तयोः सुखदुःखयोः पुनश्चित्रं कर्म हेतुः श्रुतं । कश्चिद्बहिरिन्द्रियव्यापाराभावेऽपि मनोमात्रव्यापारेण सदसच्चिन्ताभ्यामेव तयोरुत्पत्तेः । कश्चिच्च तस्याप्यभावे आध्यात्मिकक्षयोपशमोद्रेकाभ्यामेव तदुत्पत्तेर्देशनाद्भगवत्यपि द्विविधवेदनीयोदयध्रौव्ये तयोः सुवचत्वादिति । वस्तुतो बाह्ययोरपि सुखदुःखयोरिष्टानिष्टार्थशरीरसंपर्कमात्रं प्रयोजकं, न तु बहिरिन्द्रियज्ञानमपीति भगवति तृणस्पर्शादिपरीषहाभिधानं सांप्रदायिकं संगच्छत इति न किंचिदेतत् ॥ १४ ॥

**आहारादिप्रवृत्तिश्च मोहजन्या यदीष्यते । देशनादिप्रवृत्त्यापि भवितव्यं तदा तथा ॥ १५ ॥**

आहारादीति–आहारादिप्रवृत्तिश्च यदि मोहजन्येष्यते भवता बुद्धिपूर्वकपरद्रव्यविषयकप्रवृत्तेर्मोहजन्यत्वनियमात् । तदा देशनादिप्रवृत्त्यापि भगवतस्तथा मोहजन्यत्वेन भवितव्यम् ॥ १५ ॥

इष्टसाधनतया नास्त्येव देशनाप्रवृत्तिः, स्वभावत एव च तेषां नियतदेशकाला देशना इतीष्टापत्तावाह–

**यत्नं विना निसर्गाच्चेद्देशनादिकमिष्यते । भुक्त्यादिकं तथैव स्याद्दृष्टबाधा समोभयोः ॥ १६ ॥**

यत्नमिति–यत्नं ताल्वोष्ठादिव्यापारजनकप्रयत्नं विना निसर्गात्स्वभावाच्चेद्देशनादिकमिष्यते भगवतः, तदा भुक्त्यादिकं तथैव यत्नं विनैव स्यात् । दृष्टबाधोभयोः पक्षयोः समा । भुक्तेरिव देशनाया अपि यत्नं विना क्वाप्यदर्शनात् । चेष्टाविशेषे यत्नहेतुत्वकल्पनस्य चोभयत्र साम्यात् । ननु प्रयत्नं विना चेष्टामात्रं न भवत्येव, देशना च भगवतामव्यापृतानामेव ध्वनिमयी संभवत्यन्तरमध्यामेव तस्यां यत्नजन्यत्वे ( ने ) च्छाजन्यत्वादिनियमावधारणादिति न साम्यं । यदाह समन्तभद्रः–"अनात्मार्थं विना रागैः शास्ता शास्ति सतो हितम् । ध्वनन् शिल्पिकरस्पर्शान्मुरजः किमपेक्षते ॥ १ ॥" इति, नैवम्, शब्दस्य शब्दान्तरपरिणामकल्पनस्य साजात्येन न्याय्यत्वेऽपि ध्वनेस्तत्कल्पनस्यातिशयतोऽप्यन्याय्यत्वात्, भगवद्देशनाया ध्वनिरूपत्वेऽपि वाग्योगापेक्षत्वेन तादृशशब्दमात्रे पुरुषप्रयत्नानुसरणध्रौव्यात् । अन्यथाऽपौरुषेयमागमं वदतो मीमांसकस्य दुर्जयत्वापत्तेरिति न किंचिदेतत् । अथ शुद्धभावेन पृच्छामः–बुद्धिपूर्वकप्रवृत्तावितराया हेतुत्वात् कथं केवलिनो देशनाव्यापारादौ च प्रवृत्तिरिति चेत्, शुद्धभावेन ब्रूमः–बुद्धिः स्वेष्टसाधनताधीरन्यस्यातिप्रसक्तत्वात्तत्पूर्वकत्वं च यदीष्टसाधनताधीजन्यतावच्छेदकं तदाप्यबुद्धिपूर्वकप्रवृत्तेर्जीवनयोनिभूताया इव भवोपग्राहिकर्मवशादुपपत्तेर्न कश्चिद्दोष इति । प्रवृत्तिसामान्ये तु योगानामेव हेतुत्वादिच्छापूर्वकत्वमार्थसमाजसिद्धमेव । यदवदाम–" परवघम्मि पवित्तीए मोहजणिया व मोहजण्णा वा । जोगकया उ पवित्ती फलकंखा रागदोसकया ॥ १ ॥" इत्यधिकमन्यत्र ॥ १६ ॥

भुक्त्या या सातवेद्यस्योदीरणापाद्यते त्वया । सापि देशनयाऽसातवेद्यस्यैतां तथाक्षिपेत् ॥ १७ ॥

भुक्त्येति–भुक्त्या कवलाहारेण । या सातवेद्यस्य सातवेदनीयस्योदीरणा त्वयापाद्यते । भुक्तिव्यापारेण सातोत्पत्तेः । सापि देशनयाऽसातवेद्यस्यैतां उदीरणां तथाक्षिपेत्, ततोऽपि परिश्रमदुःखसंभवात् प्रयत्नजन्यत्वस्य तत्र व्यवस्थापितत्वादिति भावः ॥ १७ ॥

सुहृद्भावेन समाधत्ते–

उदीरणाख्यं करणं प्रमादव्यंग्यमत्र यत् । तस्य तत्त्वमजानानः खिद्यसे स्थूलया धिया ॥ १८ ॥

उदीरणाख्यमिति–उदीरणाख्यं करणं यदान्तरशक्तिविशेषलक्षणं प्रमादव्यंग्यं वर्तते, तस्य तत्त्वं स्वरूपमजानानः स्थूलया धिया बहिर्योगमात्रव्यापारगोचरया खिद्यसे त्वं । योगव्यापारमात्रस्य तदाक्षेपकत्वे ततो मनोयोगेनाप्यप्रमत्ते सुखोदीरणप्रसंगात्, तदीयसुखस्य ज्ञानरूपत्वे सुखान्तरस्यापि तथात्वप्रसंगात् । सुख्यहमित्यनुभवस्य चाप्रमत्तेऽप्यक्षतत्वादिति ॥ १८ ॥

आहारकथया हन्त प्रमादः प्रतिबन्धतः । तदभावे च नो भुक्त्या श्रूयते सुमुनेरपि ॥ १९ ॥

आहारकथयेति–आहारकथया हन्त प्रतिबन्धतस्तथाविधाहारेच्छासंस्कारप्रवृत्तेः प्रमादो भवति, न त्वन्यथापि । अकथाविकथानां विपरिणामस्य परिणामभेदेन व्यवस्थितत्वात् । तदभावे च प्रतिबन्धाभावे च नो नैव भुक्त्या श्रूयते

सुमुनेरपि छद्मस्थसाधोरपि प्रमादः, किं पुनर्भगवत इति भावः । बहिर्योगव्यापारमात्रोपरम एवाप्रमत्तत्वसाध्य इति तु न युक्तं, आरब्धस्य तस्य तत्रासंगतया निद्राया अविरोधादिति ॥ १९ ॥

निद्रा नोत्पाद्यते भुक्त्या दर्शनावरणं विना । उत्पाद्यते न दण्डेन घटो मृत्पिण्डमन्तरा ॥ २० ॥

निद्रेति—स्पष्टं ॥ २० ॥

रासनं च मतिज्ञानमाहारेण भवेद्यदि । घ्राणीयं स्यात्तदा पुष्पं घ्राणतर्पणयोगतः ॥ २१ ॥

रासनं चेति—स्पष्टः ॥ २१ ॥

ईर्यापथप्रसङ्गश्च समोऽत्र गमनादिना । अहते ध्यानतपसी स्वकालासंभवे पुनः ॥ २२ ॥

ईर्येति—ईर्यापथप्रसंगश्चात्र भगवतो भुक्तौ गमनादिना समस्तेनापि तत्प्रसंगस्य तुल्ययोगक्षेमत्वात्, स्वाभाविकस्य च तद्गमनस्य दृष्टबाधेन कल्पयितुमशक्यत्वादिति भावः । स्वकालासम्भवे भुक्तिकालासंभविनी ध्यानतपसी पुनरहते । योगनिरोधदेशापवर्गकालयोरेव तत्संभवात् ( तत्स्वभावात ) । स्वभावसमवस्थितिलक्षणयोश्च तयोर्गमनादिनेव भुक्त्यापि न व्याघात इति द्रष्टव्यम् ॥ २२ ॥

परमौदारिकं चाङ्गं भिन्नं चेत्तत्र का प्रमा । औदारिकादभिन्नं चेद्विना भुक्तिं न तिष्ठति ॥ २३ ॥

परमौदारिकं चेति—परमौदारिकं चांगं शरीरं भिन्नं चेदौदारिकादिभ्यः छद्मस्थशरीरेभ्यः, तर्हि तत्र का प्रमा किं प्रमाणं ?

न किंचिदित्यर्थः। औदारिकादन्नं चेत्तत्केवलमतिशयितरूपाद्युपेतं तदेव तदा भुक्तिं विना न तिष्ठति । चिरकालीनौदारिकशरीरस्थितेर्भुक्तिप्रयोज्यत्वनियमात्। भुक्तेः सामान्यतः पुद्गलविशेषोपचयव्यापारकत्वेनैवोपयोगात्। वनस्पत्यादीनामपि जलाद्यभ्यादानेनैव चिरकालस्थितेः। शरीरविशेषस्थितौ विचित्रपुद्गलोपादानस्यापि हेतुत्वेन तं (विना )केवलिशरीरस्थितेः कथमप्यसंभवात् तत्र परमौदारिकभिन्नत्वस्य कैवल्याकालीनत्वपर्यवसितस्य विशेषणस्याप्रामाणिकत्वादिति ॥२३॥

**भुक्त्याद्यदृष्टसंबन्धमदृष्टं स्थापकं तनोः । तत्त्यागे दृष्टबाधा त्वत्पक्षभक्षणराक्षसी ॥ २४ ॥**

भुक्त्यादीति–भुक्त्याद्यदृष्टेन भोजनादिफलहेतुभावविपाककर्मणा संबंधं तनोश्शरीरस्य स्थापकमदृष्टं । दृष्टमिति शेषः । तत्त्यागे केवलिन्यनभ्युपगम्यमाने त्वत्पक्षभक्षणराक्षसी दृष्टबाधा समुपतिष्ठते। तथा च तद्भयादपि तव नेत्थं कल्पना हितावहेति भावः ॥ २४ ॥

ननु तनुस्थापकादृष्टस्य भुक्त्याद्यदृष्टनियतत्वेऽपि भुक्त्याद्यदृष्टस्य तनुत्वाद्भुक्त्याद्युपपत्तिर्भगवतो भविष्यतीत्यत आह–

**प्रतिकूलानिवर्त्यत्वात्तत्तनुत्वं च नोचितम् । दोषजन्मतनुत्वं च निर्दोषे नोपपद्यते ॥ २५ ॥**

प्रतिकूलेति–तस्य भुक्त्याद्यदृष्टस्य तनुत्वं च नोचितं । प्रतिकूलेन विरोधिपरिणामेनानिवर्त्यत्वात् । न हि वीतरागत्वादिपरिणामेन रागादीनामिव क्षुधादीनां तथाविधपरिणामेन निवर्त्यत्वमस्ति, येन ततस्तज्ज्ञानकादृष्टतनुत्वं स्यात् । अस्त्येवाभोजनभावनातारतम्येन क्षुन्निरोधतारतम्यदर्शनादिति चेन्न । ततो भोजनादिगतस्य प्रतिबन्धमात्रस्यैव निवृत्तेः, शरी-

रादिगतस्येव शरीरादिभावनया । अन्यथाऽऽत्मभावनात्यन्तोत्कर्षेण मुक्तिनिवृत्तिवच्छरीरभावनात्यन्तोत्कर्षेण शरीरनिवृत्तिरपि प्रसज्येतेति महत्सङ्कटमायुष्मतः । ननु मुक्त्यादिविपरीतपरिणामेन मुक्त्याद्यदृष्टस्य मोक्षरूपफलजनकसामग्रीं विना स्वकार्याक्षमत्वलक्षणं तनुत्वमेव क्रियते । तनुस्थापकादृष्टस्यापि अशरीरभावनया तज्जघन्ययोगक्रिया निरुध्यत एव । शरीरं तु प्रागेव निष्पादितं न बाधितुं क्षमत इति अस्माकं न कोऽपि दोष इति चेन्न, विपरीतपरिणामनियत्ये मुक्त्यादेस्तददृष्टस्य रागाद्यर्जकादृष्टवद्योगप्रकर्षवति भगवति निर्मूलनाशापत्तेर्विशेषाभावात् । घात्यघातिकृतविशेषाभ्युपगमे तु अघातिनां भवोपग्राहिणां यथाविपाकोपक्रममेव निवृत्तिसंभवादिति न किंचिदेतत् । दोषजन्म अभिमानादिदोषजनितं तनुत्वं च चिरकालविच्छेदलक्षणं निर्दोषे भगवति नोपपद्यते । नियतविच्छेदश्च नियतकालभुक्त्याद्याक्षेपक एवेति भावः ॥ २५ ॥

परोपकारहानिश्च नियतावसरस्य न । पुरीषादिजुगुप्सा च निर्मोहस्य न विद्यते ॥ २६ ॥

परोपकारेति—परोपकारस्य हानिश्च नियतावसरस्य भगवतो न भवति, तृतीययाममुहूर्तमात्र एव भगवतो भुक्तेः, शेषमशेषकालमुपकारावसरात् । पुरीषादिजुगुप्सा च निर्मोहस्य क्षीणजुगुप्सामोहनीयकर्मणो न विद्यते भगवतः ॥ २६ ॥

ततोऽन्येषां जुगुप्सा चेत्सुरासुरनृपर्षदि । नाक्ष्येऽपि न कथं तस्यातिशयश्चोजयोः समः ॥ २७ ॥

तत इति—ततः पुरीषादेरन्येषां लोकानां जुगुप्सा चेत् सुरासुरनृपर्षदि । उपविष्टस्येति शेषः । नाक्ष्येऽपि तेषां कथं न

जुगुप्सा ? अतिशयश्चोभयोः पक्षयोः समः । ततो भगवतो नाड्यादर्शनवत् पुरीषाद्यदर्शनस्याप्युपपत्तेः । सामान्यकेवलिभिस्तु विविक्तदेशे तत्करणान्न दोष इति वदन्ति ॥ २७ ॥

स्वतो हितमिताहाराद्व्याध्युत्पत्तिश्च कापि न । ततो भगवतो भुक्तौ पश्यामो नैव बाधकम् ॥ २८ ॥

स्वत इति–स्वतः पुण्याक्षिप्तनिसर्गतः हितमिताहारात् व्याध्युत्पत्तिश्च कापि न भवति । ततो भगवतो भुक्तौ कवलभोजने नैव बाधकं पश्यामः । उपन्यस्तानां तेषां निर्दलनात् । अन्येषामप्येतज्जातीयानामुक्तजातीयतर्केण निर्दलयितुं शक्यत्वादिति । तत्त्वार्थिना दिगंबरमतिभ्रमध्वान्तहरणतरणिरुचिरध्यात्ममतपरीक्षा निरीक्षणीया सूक्ष्मधिया ॥ २८ ॥

तथापि ये न तुष्यन्ति भगवद्भुक्तिलज्जया । सदाशिवं भजन्तां ते नृदेहादपि लज्जया ॥ २९ ॥

दोषं वृथा पृथूकृत्य भवोपग्राहिकर्मजम् । बध्नन्ति पातकान्याप्तं दूषयन्तः कदाग्रहात् ॥ ३० ॥

कलंकैः कल्पितैर्दुष्टैः स्वामी नो नैव दूष्यते । चौराद्युत्क्षिप्तधूलीभिः स्पृश्यते नैव भानुमान् ॥३१॥

परमानन्दितैरित्थं दिगम्बरविनिग्रहात् । प्राप्तं सिताम्बरैः शोभां जैनं जयति शासनम् ॥ ३२ ॥

शिष्टा चतुःश्लोकी स्पष्टा ॥ २९-३०-३१-३२ ॥

॥ इति केवलिभुक्तिव्यवस्थापनद्वात्रिंशिका ॥ ३० ॥

# ॥ अथ मुक्तिद्वात्रिंशिका ॥ ३१ ॥

अनन्तरं कवलभोजित्वेऽपि कृतार्थत्वं केवलिनो व्यवस्थापितं । सर्वथा कृतार्थत्वं चास्य मुक्तौ व्यवतिष्ठत इति वस्तुविप्रतिपत्तिनिरासेन मुक्तिरत्र व्यवस्थाप्यते—

**दुःखध्वंसः परो मुक्तिर्मानं दुःखत्वमत्र च । आत्मकालान्यगध्वंसप्रतियोगिन्यवृत्तिमत् ॥ १ ॥**

दुःखध्वंस इति–परो दुःखध्वंसो मुक्तिः । परत्वं च समानकालीनसमानाधिकरणदुःखप्रागभावासमानदेशत्वं वर्धमानग्रन्थे श्रूयते । तत्र च स्वपरस्वसमानकालीनस्वसमानाधिकरणदुःखप्रागभावसमानदेशमिदानीतनदुःखध्वंसादि तदच्छेदो निवेश्यः । अन्यथा चरमदुःखध्वंससमानकालीनसमानाधिकरणदुःखप्रागभावाप्रसिद्धेः । वस्तुतः समानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसो मुक्तिरित्येकं लक्षणं । अपरं च समानकालीनदुःखप्रागभावसमानाधिकरणो दुःखध्वंस इति । लक्षणद्वये तात्पर्यम् । तेन नासमानदेशत्वविवेचनेऽन्यतरविशेषणवैयर्थ्यम् । मानं प्रमाणं चात्र मुक्तौ दुःखत्वमिति पक्षः । आत्मकालान्यग आत्मकालान्याकाशादिवृत्तियों ध्वंसः शब्दादेस्तत्प्रतियोगिनि शब्दादावप्रवृत्तिमदवर्तमानं । शब्दादिवृत्तित्वेनार्थान्तरवारणार्थमेतत् पक्षविशेषणं, बाधास्फूर्तिदशायां तत्सिद्धिप्रसंगात्, नियतबाधस्फोरणेनैतत्साफल्यात् । अवृत्तिदुःखत्वमित्युक्तावसिद्धिः । दुःखत्वस्य दुःखवृत्तित्वात्ध्वंसेत्याद्युक्तावपि ध्वंस-

प्रतियोगिनि । कालान्यवृत्तीत्याद्युक्तावपि कालान्यात्मवृत्तिदुःखध्वंसप्रतियोगिनि । कालान्यत्वत्यागे चात्मान्यकालवृत्तिप्रतियोगिनि दुःखध्वंसप्रतियोगिनि दुःखे विद्यमानत्वात् सैवेति संपूर्णे । आत्मकालपदेन तदुपाध्योरपि ग्रहाच्च न तस्यास्तादवस्थ्यम्॥१॥

**सत्कार्यमात्रवृत्तित्वात् प्रागभावोऽसुखस्य यः । तदनाधारगध्वंसप्रतियोगिनि वृत्तिमत् ॥ २ ॥**

सदिति–असुखस्य दुःखस्य यः प्रागभावस्तदनाधारो महाप्रलयस्तत्र गच्छति यो ध्वंसो दुःखीयस्तत्प्रतियोगिनि दुःखे वृत्तिमदिति साध्यं । वृत्तिमदित्युक्तौ सिद्धसाधनं, दुःखत्वस्य दुःखे विद्यमानत्वात् । प्रतियोगिवृत्तित्वोक्तावपि दुःखात्यन्ताभावप्रतियोगिवृत्तित्वेन, तद्ध्वंसेत्याद्युक्तावपि दुःखध्वंसांगीकारात्तदेव । प्रागभावानाधारवृत्तित्वस्य ध्वंसविशेषणत्वे दृष्टान्तासिद्धिः । प्रदीपावयवानां प्रदीपप्रागभावाधारत्वात्तदर्थं दुःखेत्यादि । प्रदीपावयवास्तु दुःखप्रागभावा ( ना ) धारभूता इति दृष्टान्तसंगतिः । दुःखानधिकरणेत्यादिकरणे खंडप्रलयेनार्थान्तरता स्यादिति दुःखप्रागभावनिवेशः । सत्कार्यमात्रवृत्तित्वादिति हेतुः । वृत्तित्वमात्रत्वे व्यभिचारिकार्यवृत्तित्वमनन्तत्वे ध्वंसाप्रतियोगित्वरूपस्य तस्याकार्ये आत्मादौ कार्ये ध्वंसे च सत्त्वात् । कार्यमात्रवृत्तित्वमपि ध्वंसत्वे व्यभिचारवृत्तित्वे ( व्यभिचारि तदर्थं भाववृत्ते ) सतीति विशेषणे, दीयमानेऽपि न तदुद्धारः । प्रागभावध्वंसस्य प्रतियोगितध्वंसस्वरूपत्वेन ध्वंसत्वस्यापि भाववृत्तित्वात् । ततः सदिति कार्यविशेषणम् ॥ २ ॥

**दीपत्ववदिति प्राहुस्तार्किकास्तदसंगतम् । बाधाद्वृत्तिविशेषेष्टावन्यथार्थान्तराव्ययात् ॥ ३ ॥**

दीपत्ववदिति–दीपत्ववदिति दृष्टान्त इति माधुस्तार्किका नैयायिकाः । इत्थ सर्वमुक्तिसिद्धौ चैतन्ड्खत्वादिक पक्षी-कृत्य तत्सन्मुक्तिसाधनोपपत्तेः। तत्तार्किकमतमसंगत न्यायापेत । वृत्तिविशेषस्याजातीयविशेषणतया दुःखसमागजाधानाधारवृत्तित्वस्येष्टौ साध्यकोटिनिवेशोपगमे बाधात् । दुःखध्वंसस्य दुःखसमवायिन्येव तथा वृत्तित्वस्य स्वयोपगमात् । अन्यथा संबन्धसात्रेण तदिष्टौ अर्थान्तराध्ययादर्थान्तरानुद्धारात् आकाशादावपि दुःखध्वंसस्य व्यभिचारितादिसंबन्धेन वृत्तित्वा-प्रकृतान्यसिद्धेः । कालिकदैशिकविशेषणतान्यतरसंबन्धेन वृत्तित्वोक्तावपि कालोपाधिवृत्तित्वेन तदनपायात् । कालिकेन दुःखसमागजायानाधारस्यनिवेशो च दृष्टान्तासंगतेः । मुख्यकालवृत्तित्वविशिष्टकालिकसंबन्धेन सन्निवेशेऽप्यात्मनस्तथात्वात् । उक्तान्यतरसंबंधेन तन्निवेशेऽपि तथासंबन्धगर्भव्याप्यमप्रादिति चायः ॥ ३ ॥

विपक्षबाधकाभावान्नाभिप्रेतसिद्धितः । अन्तरैतदयोग्यत्वाशंका (त्वाशंका) योगापत्तेति चेत् ॥ ४ ॥

विपक्षेति–विपक्षे हेतुसत्त्वेऽपि साध्यासत्त्वे बाधकस्यानुकूलतर्कस्याभावात् । तथा चानभिप्रेतसिद्धितोऽनिष्टसिद्धि-प्रसंगात् । कालान्यत्वगर्भसाध्ये प्रत्यपि उक्तहेतोरविशेषात् । एवमुक्तसाध्यमन्तरा सर्वमुक्त्यसिद्धौ अयोग्यत्वाशंका । य एव न कदापि मोक्ष्यते तद्भवं यदि स्यां, तदा मम विफलं परिव्राजकत्वमित्याकारा । योगापत्ता योगप्रतिबन्धकेत्यर्थ एव विपक्षबाधकमिति चेत् ॥ ४ ॥

नैवं शमादिसंपत्त्या स्वयोग्यत्वविनिश्चयात् । न चान्योऽन्याश्रयस्तस्याः संभवात् पूर्वसेवया ॥ ५ ॥

नैवमिति—एवं न यथोक्तं विपक्षबाधकं भवता शमादीनां शमदमभोगानभिष्वंगादीनां मुमुक्षुचिह्नानां संपत्त्या। स्वयोग्यत्वस्य विनिश्चयात् तेषां तद्व्याप्यत्वात्। न चान्योन्याश्रयो योगप्रवृत्तौ सत्यां शमादिसंपत्तिस्ततश्चाधिकारविनिश्चयात्सेति संभावनीयं, तस्याः शमादिसंपत्तेः पूर्वसेवया योगप्रवृत्तेः प्रागपि संभवात् योगप्रवृत्तेरतिशयितशमादिसंपादकत्वेनैव फलवत्त्वात्। सामान्यतस्तु तत्र कर्मविशेषक्षयोपशम एव हेतुरिति न किञ्चिदनुपपन्नम् ॥ ५ ॥

शमाद्युपहिता हन्त योग्यतैव विभिद्यते। तदवच्छेदकत्वेन संकोचस्तेन तस्य न ॥ ५ ॥

शमादीति—शमादिभिर्मुमुक्षुलिंगैरुपहिता हन्त योग्यतैव विभिद्यते सामान्ययोग्यतातः समुचितयोग्यतायाः प्राग् भेदसमर्थनात्। तेन कारणेन तदवच्छेदकत्वेन योग्यतावच्छेदकत्वेन तस्य शमादेः संकोचो न योग्यतावच्छेदकत्वलक्षणः, योग्यताविशेषस्यैव अतिशयितशमादौ तद्द्वारा च मोक्षे हेतुत्वात् ॥ ६ ॥

ननु शमादावपि संसारित्वेनैव हेतुतेति सर्वमुक्त्याक्षेप इत्यत आह—

संसारित्वेन गुरुणा शमादौ च न हेतुता। भव्यत्वेनैव किं त्वेपेत्येतदन्यत्र दर्शितम् ॥ ७ ॥

संसारित्वेनेति—संसारित्वेन नित्यज्ञानादिमद्भिन्नत्वरूपेण गुरुणा नानापदार्थघटितेन शमादौ च हेतुता न तव कल्पयितुमुचितेति शेषः। किं तु भव्यत्वेनैवैषा हेतुता, शमाद्यनुगतकार्यजनकतावच्छेदकतयात्मत्वव्याप्यजातिविशेषस्य कल्पयितुमुचितत्वात्। भव्यत्वादावप्यनुगतकार्यस्यैव मानत्वात्। आत्मत्वेनैव शमादिहेतुत्वे विशेषसामग्र्यभावेनेश्वरेऽतिप्रसंगाभावे

समर्थनीयेऽन्यत्रापि तेन तस्य सुखत्वाज्ञव्यत्वाज्ञव्यस्वरूपैव ज्ञव्यस्यनिश्चयेन प्रवृत्त्यप्रतिबन्धादिति । एतदन्यत्र न्यायालोकादौ दर्शितम् ॥ ७ ॥

परमात्मनि जीवात्मलय. सेति त्रिदण्डिनः । लयो लिङ्गव्ययोऽत्रेष्टो जीवनाशश्च नेष्यते ॥ ८ ॥

परमात्मनीति–परमात्मनि जीवात्मलयः सा मुक्तिरिति त्रिदण्डिनो वदन्ति । अत्रैतन्मते लयो लिंगव्यय इष्टोऽस्माकमप्यभिमतः । एकादशेन्द्रियाणि पञ्चमहाभूतानि च सूक्ष्ममात्रया संभूयावस्थितानि जीवात्मनि सुखदुःखादिवेदकानि लिंगशब्देनोच्यन्ते, तत्क्षयश्च परमार्थतो नामकर्मक्षय एवेति । जीवनाशस्तु नेष्यते, उपाधिशरीरनाशे औपाधिकजीवनाशस्याप्यकाम्यत्वात् ॥ ८ ॥

बौद्धास्त्वालयविज्ञानसन्तति. सेत्यकीर्तयन् । विनान्वयिनमाधारं तेषामेषा कदर्थना ॥ ९ ॥

बौद्धास्त्विति–बौद्धास्तु आलयविज्ञानसन्ततिः प्रवृत्तिविज्ञानोपप्लवरहिता संवृतज्ञेयाकारा ज्ञानक्षणपरंपरा सा मुक्तिरित्यकीर्तयन् । यथोक्तं–"चित्तमेव हि संसारो रागादिक्लेशवासितम् । तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥ १ ॥" न च शरीरादिनिमित्ताभावे तदनुपपत्तिः, पूर्वपूर्वविशिष्टक्षणानामेव तद्धेतुत्वाद्विशिष्टभावनात एव तेषां विसभागपरिक्षये प्रवृत्तेः । तेषामन्वयिन त्रिकालानुगतात्मलक्षणमाधारं विना एषा मुक्तिः कदर्थना । सन्तानस्यावास्तवत्वेन बन्धमुक्तव्यवस्थानुपपत्तेः । सर्वथाऽभावीभूतस्य क्षणस्योत्तरसदृशक्षणजननासामर्थ्यादिति ॥ ९ ॥

**विवर्तमानज्ञेयार्थापेक्षायां सति चाश्रये । अस्यां विजयतेऽस्माकं पर्यायनयदेशना ॥ १० ॥**

विवर्तमानेति–विवर्तमानाः प्रतिक्षणमन्यान्यपर्यायभाजो ये ज्ञेयार्थास्तदपेक्षायामाश्रये चान्वयिद्रव्यलक्षणे सति । अस्यामुक्तमुक्तौ । अस्माकं पर्यायनयदेशना विजयते । प्रतिक्षिप्तद्रव्यस्य बौद्धसिद्धान्तस्य परमार्थतः पर्यायार्थिकनयान्तःपातित्वात् । तदुक्तं संमतौ–"सुद्धो अणण्यस्स उ परिसुद्धो पज्जवविअप्पो" ॥ १० ॥

**स्वातंत्र्यं मुक्तिरित्यन्ये प्रभुता तन्मदः क्षयी । अथ कर्मनिवृत्तिश्चेत् सिद्धान्तोऽस्माकमेव सः ॥११॥**

स्वातंत्र्यमिति–स्वातंत्र्यं मुक्तिरित्यन्ये वदन्ति । तत् स्वातंत्र्यं यदि प्रभुता तदा मदः, स च क्षयी । अथ चेत् कर्मनिवृत्तिस्तदाऽस्माकमेव स सिद्धान्तः ॥ ११ ॥

**पुंसः स्वरूपावस्थानं सेति सांख्याः प्रचक्षते । तेषामेतदसाध्यत्वं वज्रलेपोऽस्ति दूषणम् ॥ १२ ॥**

पुंस इति–पुंसः पुरुषस्य स्वरूपावस्थानं प्रकृतितद्विकारोपधानविलये चिन्मात्रप्रतिष्ठानं सा मुक्तिरिति सांख्याः प्रचक्षते । तेषामेतस्या मुक्तेरसाध्यत्वं दूषणं वज्रलेपोऽस्ति । एकान्तनित्यात्मरूपायास्तस्या नित्यत्वादुपचरितसाध्यत्वस्याप्रयोजकत्वात् ॥ १२ ॥

**पूर्वचित्तनिवृत्तिः साग्रिमानुत्पादसंगता । इत्यन्ये श्रयते तेषामनुत्पादो न साध्यताम् ॥ १३ ॥**

पूर्वेति—अभिमानुत्पादसंगताऽभिमविषयानुत्पादविशिष्टा पूर्वचित्तनिवृत्तिः सा मुक्तिरित्यन्ये । तेषामनुत्पादः साध्यतो न श्रेयस इति मुक्तेरपुरुषार्थत्वापत्तिरेव दोषः ॥ १३ ॥

**सात्मज्ञानमिति प्राह चार्वाकस्तत्तु पाप्मने । तस्य ज्ञातुमशक्यत्वात्तदनुदेशतस्तथा ॥ १४ ॥**

सेति—आत्मज्ञानं सा मुक्तिरिति चार्वाकः प्राह । तत्तु वचनं श्रूयमाणमपि पाप्मने भवति । तस्यात्मनो ज्ञातुमशक्यत्वादसतो नित्यनिवृत्तत्वात्, सतश्च वीतरागजन्मादर्शनन्यायेन नित्यत्वात्, सर्वथा ज्ञानासिद्धेः । तथा पर्यायार्थतया सञ्ज्ञानादपि तदनुदेशात आत्मज्ञानानभिधानात् । मुक्तिपदार्थस्य च निरुपधीच्छाविषयत्वात् ॥ १४ ॥

**नित्योत्कृष्टसुखव्यक्तिरिति तौतातिता जगुः । नित्यत्वं चेदनन्तत्वमत्र तत्संमतं हि नः ॥ १५ ॥**

नित्येति—नित्यमुत्कृष्टं च निरतिशयं यत्सुखं तदभिव्यक्तिर्मुक्तिरिति तौतातिता जगुः । अत्र मते नित्यत्वमनन्तत्वं चेत्तदा नोऽस्माकं हि निश्चितं संमतं । सिद्धसुखस्य साद्यपर्यवसितत्वाभिधानात् । तस्य च मुक्तावभिव्यक्तेः ॥ १५ ॥

**अथानादित्वमेतच्चेत्तथाप्येष नयोऽस्तु नः । सर्वथोपगमे च स्यात्सर्वदा तदुपस्थितिः ॥ १६ ॥**

अथेति—अथैतन्मुक्तिसुखे नित्यत्वमनादित्वं चेत्तथापि न एष नयोऽस्तु संसारदशाया कर्माछन्नस्यापि सुखस्य द्रव्यार्थतया शाश्वतात्मस्वभावत्वात् । सर्वथोपगमे चैकान्ततोऽनादित्वाभ्युपगमे च सर्वदा संसारदशायामपि तदुपस्थितिर्मुक्तिसुखाभिव्यक्तिः स्यात् । अभिव्यञ्जकाभावेन तदा तदनभिव्यक्तत्वभावसमर्थने च घटादेरपि दण्डाद्यभिव्यङ्ग्यत्वस्य सुवचत्वे सांख्यमतप्रवेशापातात् ॥ १६ ॥

वेदान्तिनस्त्वविद्यायां निवृत्तायां विविक्तता । सेत्याहु सापि नो तेषामसाध्यत्वादवस्थितेः ॥ १७ ॥

वेदान्तिनस्त्विति–वेदान्तिनस्तु अविद्यायां निवृत्तायां विविक्तता केवलात्मावस्थानं सा मुक्तिरित्याहुः, सापि नो तेषां युक्तेति शेषः । अवस्थितेर्विज्ञानसुखात्मकस्य ब्रह्मणः प्रागप्यवस्थानादसाध्यत्वात् । कंठगतचामीकरन्यायेन भ्रमादेव नात्र प्रवृत्तिरिति तु भ्रान्तपर्षदि वक्तुं शोभत इति भावः ॥ १७ ॥

कृत्स्नकर्मक्षयो मुक्तिरित्येष तु विपश्चिताम् । स्याद्वादामृतपानस्योद्गारः स्फारनयाश्रयः ॥ १८ ॥

कृत्स्नेति–कृत्स्नानां कर्मणां ज्ञानावरणादीनां क्षयो मुक्तिरित्येष तु विपश्चितामेकान्तपंडितानां स्याद्वादामृतपानस्योद्गारः । स्फारा ये नयास्तत्तंत्रप्रसिद्धार्थास्तदाश्रयः षड्दर्शनसमूहमयत्वस्य जैनदर्शने संमतत्वात् ॥ १८ ॥

नयानेवात्राभिव्यनक्ति–

ऋजुसूत्रादिभिर्ज्ञानसुखादिकपरम्परा । व्यङ्ग्यमावरणोच्छित्त्या सङ्ग्रहेणेष्यते सुखम् ॥ १९ ॥

ऋजुसूत्रादिभिरिति–ऋजुसूत्रादिभिर्नयैर्ज्ञानसुखादिकपरंपरा मुक्तिरिष्यते । शुद्धनयैस्तैरुत्तरोत्तरविशुद्धपर्यायमात्राभ्युपगमात् ज्ञानादीनां क्षणरूपतायाः क्षणसत्तयापि सिद्धेः, तस्याः क्षणतादात्म्यनियतत्वात्, क्षणस्वरूपे तथादर्शनात् । संग्रहेण संग्रहनयेनावरणोच्छित्त्या व्यंग्यं सुखं मुक्तिरिष्यते । तद्धि जीवस्य स्वभावः सेन्द्रियदेहाद्यपेक्षाकारणस्वरूपावरणेनाच्छाद्यते । प्रदीपस्यापवरकावस्थितपदार्थप्रकाशकत्वस्वभाव इव तदावारकशरावादिना । तदपगमे तु प्रदीपस्येव


। १०३ ॥

जीवस्यापि विशिष्टप्रकाशस्वभावोऽयत्नसिद्ध एवेति । शरीराभावे ज्ञानसुखाद्यभावोऽप्येवं एव । अन्यथा शरावाद्यभावे प्रदीपादेरभावप्रसंगात् । शरावादेः प्रदीपाद्यजनकत्वाच्चोक्तप्रसंग इति चेत्, तथाभूतप्रदीपपरिणत्यजनकत्वे शरावादेस्तदनाधारकत्वप्रसंगादिति ॥ १९ ॥

क्षयः प्रयत्नसाध्यस्तु व्यवहारेण कर्मणाम् । न चैवमपुमर्थत्वं द्वेषयोनिप्रवृत्तितः ॥ २० ॥

क्षय इति–व्यवहारेण तु प्रयत्नसाध्यः कर्मणां क्षयो मुक्तिरिष्यते, अन्वयव्यतिरेकानुविधानेन तत्प्रवृत्तेः ज्ञानादीनां कर्मक्षये तदनुविधानात् । न चैवं कर्मक्षयस्य मुक्तित्वाभ्युपगमेऽपुमर्थत्वं, मुक्तेर्द्वेषयोनिप्रवृत्तितः साक्षाद्दुःखहेतुनाशोपायेच्छाविषयत्वेन परमपुरुषार्थत्वाविरोधात् ॥ २० ॥

दुःखद्वेषे हि तद्धेतून् द्वेष्टि प्राणी नियोगतः । जायतेऽस्य प्रवृत्तिश्च ततस्तन्नाशहेतुषु ॥ २१ ॥

दुःखद्वेषे हीति–दुःखद्वेषे हि सति प्राणी तद्धेतून् दुःखहेतून् नियोगतो निश्चयतो द्वेष्टि । अस्य दुःखहेतुद्विषश्च ततस्तन्नाशहेतुषु दुःखोपायनाशहेतुषु ज्ञानादिषु प्रवृत्तिर्जायते । दुःखद्वेष्य( षेऽ )स्य दुःखहेतुनाशोपायेच्छा दुःखहेतुद्वेषयोस्तयोश्च दुःखहेतुनाशहेतुप्रवृत्तौ स्वभावतो हेतुत्वात् । अनुस्यूतैकोपयोगरूपत्वेऽपि क्रमानुवेधेन हेतुहेतुमद्भावाविरोधात् । क्रमिकाक्रमिकोभयस्वभावोपयोगस्य तत्र तत्र व्यवस्थापितत्वात् ॥ २१ ॥

इयं चात्र दुःखं मा भूदित्युद्देशो दुःखहेतुनाशविषयकत्वं फलितमित्येतदन्यत्राप्यतिदिशन्नाह–

अन्यत्राप्यसुखं मा भून्माभोऽर्थेऽत्रान्वयः स्थितः । दुःखस्यैवं समाश्रित्य स्वहेतुप्रतियोगिताम् ॥२२॥

अन्यत्रापीति–अन्यत्रापि प्रायश्चित्तादिस्थलेऽपि असुखं मा भूत्। अत्र माङोऽर्थे ध्वंसे। एवमुक्तरीत्या दुःखस्य स्वहेतुप्रतियोगितामाश्रित्यान्वयः स्थितः। तत्पापजन्यदुःखाप्रसिद्ध्या तद्ध्वंसस्यासाध्यत्वात्। अस्तु वा दुःखद्वेषस्यैवायमुल्लेखः। मुख्यप्रयोजनाविषयकेच्छाविषयत्वेन च मुख्यप्रयोजनत्वमविरुद्धमिति भावः ॥ २२ ॥

**स्वतोऽपुमर्थताप्येवमिति चेत् कर्मणामपि। शक्त्या चेन्मुख्यदुःखत्वं स्याद्वादे किं नु बाध्यताम् ॥२३॥**

स्वत इति–एवमपि स्वतोऽपुमर्थता निरुपधिकेच्छाविषयत्वेन सुखदुःखहान्यन्यतरस्यैव स्वतः पुमर्थत्वादिति चेत् कर्मणामपि शक्त्या चेन्मुख्यदुःखत्वं तदा स्याद्वादे किं नु बाध्यतां? दुःखहेतोरपि कथंचिद्दुःखत्वात्, दुःखक्षयत्वेन रूपेण कर्मक्षयस्य त्वन्नीत्यापि मुख्यप्रयोजनत्वानपायाद् रूपान्तरेण तत्त्वस्य चाप्रयोजकत्वात् ॥ २३ ॥

**स्वतः प्रवृत्तिसाम्राज्यं किं चाखंडसुखेच्छया। निराबाधं च वैराग्यमसंगे तदुपक्षयात् ॥ २४ ॥**

स्वत इति–किं च स्वतो निरुपधिकतया प्रवृत्तिसाम्राज्यमखंडसुखेच्छयाऽखंडसुखसंवलितत्वात् कर्मक्षयस्य। नन्वेवं सुखेच्छया वैराग्यव्याहतिरित्यत आह–असंगेऽसंगानुष्ठाने तदुपक्षयात् सुखेच्छाया अपि विरमान्निराबाधं च वैराग्यं "मोक्षे भवे च सर्वत्र निःस्पृहो मुनिसत्तमः" इति वचनात्। न चेदेवं सुखेच्छया वैराग्यस्यैव दुःखद्वेषात् प्रशान्तत्वस्यापि व्याहतिरेवेति भावः ॥ २४ ॥

**समानायव्ययत्वे च वृथा मुक्तौ परिश्रमः। गुणहानेरनिष्टत्वात्ततः सुष्ठूच्यते ह्यदः ॥ २५ ॥**

समानेति—समानायव्ययत्वे च सुखदुःखाभावाभ्यामभ्युपगम्यमाने मुक्तौ वृथा परिश्रमः। गुणहानेरनिष्टत्वात्तदनुबिद्ध-दुःखनाशोपायेऽनिष्टानुबन्धित्वज्ञानेन प्रेक्षावत्प्रवृत्तेरयोगात्। ततो व्यदः सुदूष्यते ॥ २५ ॥

दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते। न हि मूर्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः ॥ २६ ॥

दुःखाभावोऽपीति—दुःखाभावोऽपि न अवेद्यः स्वसमानाधिकरणसमानकालीनसाक्षात्काराविषयः पुरुषार्थतयेष्यते। न हि मूर्छाद्यवस्थार्थं सुधीः प्रवृत्तो दृश्यते। अन्यथा तदर्थमपि प्रवृत्तिः स्यात्। अतो गुणहानेरनिष्टत्वेन दुःखाभावरूपाया मुक्तौ तदर्थप्रवृत्तिव्याघात एव दूषणमिति भावः ॥ २६ ॥

एतेनैतदपास्तं हि पुमर्थत्वेऽप्रयोजकम्। तज्ज्ञानं दुःखनाशश्च वर्तमानोऽनुभूयते ॥ २७ ॥

एतेनेति—एतेन गुणहानेरनिष्टत्वेन हि निश्चितं एतदपास्तं। यदुक्तं महानैयायिकेन पुमर्थत्वे तज्ज्ञानं पुमर्थज्ञानमप्रयोजकं, दुःखनाशश्च वर्तमानोऽनुभूयते, विनश्यदवस्थेन योगिसाक्षात्कारेणेति ॥ २७ ॥

गुणहानेरनिष्टत्वं वैराग्याच्चाथ वेद्यते। इच्छाद्वेषौ विना नैवं प्रवृत्तिः सुखदुःखयो ॥ २८ ॥

गुणहानेरिति—अथ गुणहानेरनिष्टत्वं वैराग्याच्च वेद्यते कामान्धस्यापि पारदार्ये बलवद्दुःखानुबन्धित्वं, ततः प्रवृत्त्यव्याघात इति भावः। एवं सति इच्छाद्वेषौ विना सुखदुःखयोः प्राप्यनाश्ययोरिति शेषः। प्रवृत्तिर्न स्यात्। परवैराग्ये प्रवृत्ति-

करणयोस्तयोर्निवृत्तेरपरवैराग्ये च गुणवैतृष्ण्यस्यैवाभावाद्गुणहानेरनिष्टत्वाप्रतिसन्धानानुपपत्तेर्गुणहानेरनिष्टत्वे प्रतिसंहिते प्राक्तनप्रवृत्त्यनुपपत्तौ तत्संस्कारतोऽप्यसंगप्रवृत्तेर्दुर्वचत्वमिति न किंचिदेतत् ॥ २८ ॥

ननु श्रुतिबाधान्न मुक्तौ सुखसिद्धिरित्यत आह—

**अशरीरं वा वसन्तमित्यादिश्रुतितः पुनः । सिद्धो हन्त्युभयाभावो नैकसत्तां यतः स्मृतम् ॥ २९ ॥**

अशरीरमिति—अशरीरं वावसन्तमित्यादिश्रुतितोऽशरीरं वावसन्तं प्रियाप्रिये न स्पृशत इति श्रुतेः पुनरुभयाभावः सुखदुःखोभयाभावः सिद्धः, एकसत्तां सुखसत्तां न हन्ति । एकवत्यपि द्वित्वावच्छिन्नाभावप्रत्ययात् । अस्तु वा तत्राप्रियपदसन्निधानात् प्रियपदस्य वैषयिकसुखपरत्वमेवेत्यपि द्रष्टव्यं । यतः स्मृतम् ॥ २९ ॥

**सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियम् । तं वै मोक्षं विजानीयाद्दुःष्प्रापमकृतात्मभिः ॥३०॥**

सुखमिति—स्पष्टः ॥ ३० ॥

**उपचारोऽत्र नाबाधात् साक्षिणी चात्र दृश्यते । नित्यं विज्ञानमानन्दं ब्रह्मेत्यप्यपरा श्रुतिः ॥ ३१ ॥**

उपचार इति—अत्र मुक्तिसुखप्रतिपादिकायामुक्तस्मृतौ उपचारो न दुःखाभावे सुखपदस्य लाक्षणिकत्वं । अबाधाद्बाधाभावात्, जन्यस्याप्यभावस्येव भावस्यापि कस्यचिदनन्तत्वसंभवात् । अत्र मुक्तिसुखे 'नित्यं विज्ञानमानन्दं ब्रह्मेति' अपरापि श्रुतिः साक्षिणी वर्तते, तया नित्यज्ञानानन्दब्रह्माभेदबोधनादिति ॥ ३१ ॥

परमानं वक्षयतां परमानं दयावताम् । परमानन्दपीनाः स्मः परमानन्दचर्चया ॥ ३२ ॥

परमानमिति—परेषामेकान्ताभिनिविष्टानां मानं कुहेतुं वक्षयतां स्याद्वादमुजरोष । किं वर्त ? परः प्रकृष्टो मानो दर्पो यस्मात्तत्तथा । दयावतामनेकान्तप्रणयितया जगद्धितैषीपीयवतां सितांबरसाधूनां परमानन्दचर्चया महोदयमीमांसया वयं परमेणोत्कृष्टेनानन्देन पीनाः पुष्टाः स्मः ॥ ३२ ॥

॥ इति मुक्तिद्वात्रिंशिका ॥ ३१ ॥

पू० भगवानदास ...
मोतीसिंह भोमियों का रास्ता,
जयपुर सिटी (राजस्थान)

## ॥ अथ सज्जनस्तुतिद्वात्रिंशिका ॥ ३२ ॥

नाम सज्जन इति त्रिवर्णकं, कर्णकोटरकुटुंबि चेद्भवेत्। नोल्लसन्ति विषशक्तयस्तदा, दिव्यमंत्रनिहताः खलोक्तयः ॥ १ ॥ स्याद्बली बलमिह प्रदर्शयेत्, सज्जनेषु यदि सत्सु दुर्जनः। किं बलं नु तमसोऽपि वर्ण्यते, यद्भवेदसति भानुमालिनि ॥ २ ॥ दुर्जनस्य रसना सनातनीं, संगतिं न परुषस्य मुंचति। सज्जनस्य तु सुधातिशायिनः, कोमलस्य वचनस्य केवलम् ॥ ३ ॥ या द्विजिह्वदलना घनादराद्यात्मनीह पुरुषोत्तमस्थितिः। याप्यनन्तगतिरेतयेष्यते, सज्जनस्य गरुडानुकारिता ॥ ४ ॥ सज्जनस्य विदुषां गुणग्रहे, दूषणे निविशते खलस्य धीः। चक्रवाकदृगहर्पतेर्द्युतौ, घूकदृक् तमसि संगमंगति ॥ ५ ॥ दुर्जनैरिह सतामुपक्रिया, तद्वचोविजयकीर्तिसंभवात्। व्यातनोति जिततापविप्लवां, वह्निरेव हि सुवर्णशुद्धताम् ॥ ६ ॥ याकलंकिवसतेन सत्कथा, या कदापि न भुजंगसंगता। गोत्रभित्सदसि या न सा सतां, वाचि काचिदतिरिच्यते सुधा ॥ ७ ॥ दुर्जनोग्रमतपर्तुपूर्तिजात्तापतः श्रुतलता क्षयं-व्रजेत्। नो भवेद्यदि गुणांबुवर्षिणी, तत्र सज्जनकृपा तपात्ययः—(या) ॥ ८ ॥ तन्यते सुकविकीर्ति

संगरंगवदहो महोत्सवः ॥ ९ ॥
वारिधौ दुर्जनेन वडवानलव्यथा । सज्जनेन तु शशांककौमुदी संगरंगवदहो महोत्सवः ॥ ९ ॥ यद्यनुग्रहपरं सतां मनो दुर्जनात् किमपि नो भय तदा । सिंह एव तरसा वशीकृते किं जयं भुवि शृगालबालकात् ॥ १० ॥ खेदमेव तनुते जडात्मनां सज्जनस्य तु मुदं कवेः कृतिः । स्मेरता कुवलये- ऽजपीमनं(ऽम्बुजे व्यथा) चन्द्रभासि भवतीति हि स्थितिः ॥ ११ ॥ न त्यजन्ति कवयः श्रुतश्रमं संमुदेव खलपीडनादपि । स्वोचिताचरणवद्धबुद्धयः साधवः शमदमक्रियामिव ॥ १२ ॥ नव्यतंत्ररचनं सतां रतेस्त्यज्यते न खलखेदतो बुधैः । नैव भारभयतो विमुच्यते शीतरक्षणपटीयसी पटी ॥ १३ ॥ आगमे सति नवः श्रमो मदाश्च स्थितेरिति खलेन दूष्यते । नौरिवेह जलधौ प्रवेशकृत् सोऽयमि- त्यथ सतां सदुत्तरम् ॥ १४ ॥ पूर्वपूर्वतनसूरिहीलना नो तथापि निहतेति दुर्जनः । तातवागनुवि- धायिबालवदिदं यदित्यथ सतां सुभाषितम् ॥ १५ ॥ किं तथापि पलिमंथमंथरैरत्र साध्यमिति दुर्जनो- दिते । स्वान्ययोरुपकृतिर्नवा मतिश्चेति सज्जननयोक्तिरर्गला ॥ १६ ॥ सप्रसंगमिदमाध्वविंशिकोपक्रमे मतिमतोपवा(पा)दितम् । चारुतां भजति सज्जनस्थितिर्नादृतासु नियतं खलोक्तिषु ॥ १७ ॥ न्याय-

तंत्रशतपत्रभानवे लोकलोचनसुधाञ्जनत्विषे। पापशैलशतकोटिमूर्त्तये सज्जनाय सततं नमोनमः ॥१७॥ भूषिते बहुगुणे तपागणे श्रीयुतैर्विजयदेवसूरिभिः। भूरिसूरितिलकैरपि श्रिया पूरितैर्विजयसिंहसूरिभिः ॥ १८ ॥ धाम भास्वदधिकं निरामयं रामणीयकमपि प्रसृत्वरम्। नाम कामकलशातिशायिनामिष्टपूर्तिषु यदीयमश्नुति ॥ २० ॥ यैरुपेत्य विदुषां सतीर्थ्यतां स्फीतजीतविजयाभिधावताम्। धर्मकर्म विदधे जयन्ति ते श्रीनयादिविजयाभिधा बुधाः ॥ २१ ॥ उद्यतैरहमपि प्रसह्य तैस्तर्कतंत्रमधिकाशि पाठितः। एष तेषु धुरि लेख्यतां ययौ सद्गुणस्तु जगतां सतामपि ॥ २२ ॥ येषु येषु तदनुस्मृतिर्भवेत्तेषु धावति च दर्शनेषु धीः। यत्र यत्र मरुदेति लभ्यते तत्र तत्र खलु पुष्पसौरभम् ॥२३॥ तद्गुणैर्मुकुलितं रवेः करैः शास्त्रपद्ममिह मन्मनोह्रदात्। उल्लसन्नयपरागसंगतं सेव्यते सुजनषट्पदव्रजैः ॥ २४ ॥ निर्गुणो बहुगुणैर्विराजितांस्तान् गुरूनुपकरोमि कैर्गुणैः। वारिदस्य ददतो हि जीवनं किं ददातु बत चातकार्भकः ॥ २५ ॥ प्रस्तुतश्रमसमर्थितैर्नयैर्योग्यदानफलितैस्तु तद्यशः। यत्प्रसर्पति सतामनुग्रहादेतदेव मम चेतसो मुदे ॥ २६ ॥ आसते जगति सज्जनाः शतं तैरुपैमि नु समं कमञ्जसा।

किं न सन्ति गिरयः परःशता मेरुरेव तु बिभर्तु मेदिनीम् ॥ २७ ॥ तत्पदांबुरुहषट्पद. स च ग्रंथमेनमपि मुग्धधीर्व्यधाम् । यस्य भाग्यनिलयोऽजनि श्रियां सद्म पद्मविजयः सहोदरः ॥ २८ ॥ मत्त एव मृदवश्च ये तेष्वतोऽप्युपकृतिश्च भाविनी । किं च भालवचनानुभापणानुस्मृतिः परमबोधशालिनाम् ॥ २९ ॥ अत्र पद्यमपि पांक्तिकं क्वचिद्वर्तते च परिवर्तितं क्वचित् । स्वान्ययोः स्मरणमात्रमुद्दिशंस्तत्र नैष तु जनोऽपराध्यति ॥ ३० ॥ ख्यातिमेष्यति परामयं पुनः सज्जनैरनुगृहीत एव च । किं न शंकरशिरोनिवासतो निम्नगा सुविदिता सुरापगा ॥ ३१ ॥ यत्र स्याद्वादविद्या परमततिमिरध्वान्तसूर्यांशुधारा निस्ताराज्जन्मसिन्धोः शिवपदपदवीं प्राणिनो यान्ति यस्मात् । अस्माकं किं च यस्माद्भवति शमरसैर्नित्यमाकंठतृप्तिर्जैनेन्द्रं शासनं तद्विलसति परमानन्दकन्दांबुवाहः ॥ ३२ ॥

॥ शिष्टा द्वात्रिंशिका सज्जनगुणवर्णनमयी ग्रन्थाविच्छेदहेतुर्मंगलरूपा स्पष्टा ॥

॥ इति सज्जनस्तुतिद्वात्रिंशिका ॥ ३२ ॥

प्रतापार्के येषां स्फुरति विहिताकब्बरमनःसरोजप्रोल्लासे भवति कुमतध्वान्तविलयः ।
विरेजुः सूरीन्द्रास्त इह जयिनो हीरविजया दयावल्लीवृष्टौ जलदजलधारायितगिरः ॥ १ ॥
प्रमोदं येषां सद्गुणगणभृतां बिभ्रति यशःसुधां पायं पायं किमिह निरपायं न विबुधाः ।
अमीषां षट्तर्कोदधिमथनमन्थानमतयः सुशिष्योपाध्याया बभुरिह हि कल्याणविजयाः ॥ २ ॥
चमत्कारं दत्ते त्रिभुवनजनानामपि हृदि स्थितिर्हैमी यस्मिन्नधिकपदसिद्धिप्रणयिनी ।
सुशिष्यास्ते तेषां बभुरधिकविद्यार्जितयशःप्रशस्तश्रीभाजः प्रवरविबुधा लाभविजयाः ॥ ३ ॥
यदीया दृग्लीलाभ्युदयजननी मादृशि जने जडस्थानेऽप्यर्कद्युतिरिव जवात् पंकजवने ।
स्तुमस्तच्छिष्याणां वलमविकलं जीतविजयाभिधानां विज्ञानां कनकनिकषस्निग्धवपुषाम् ॥ ४ ॥
प्रकाशार्थं पृथ्व्यास्तरणिरुदयाद्रेरिह यथा यथा वा पाथोभृत्सकलजगदर्थं जलनिधेः ।
तथा वाणारस्याः सविधमभजन् ये मम कृते सतीर्थ्यास्ते तेषां नयविजयविज्ञा विजयिनः ॥ ५ ॥
यशोविजयनाम्ना तच्चरणांभोजसेविना । द्वात्रिंशिकानां विवृतिश्चक्रे तत्त्वार्थदीपिका ॥ ६ ॥
महार्थे व्यर्थत्वं क्वचन सुकुमारे च रचने बुधत्वं सर्वत्राप्यहह महतां कुव्यसनिताम् ।
नितान्तं मूर्खाणां सदसि करतालैः कलयतां खलानां साम्मुख्ये क्वचिदपि न दृष्टिर्निविशते ॥ ७ ॥

अपि न्यूनं दत्वाऽप्यधिकमपि समीक्ष्य सुनयैर्वितत्य व्याख्येयं वितथमपि सगोप्य विधिना ।
अपूर्वग्रन्थार्थग्रथनपुरुषार्थाद्विखसतां सतां दृष्टिः सृष्टिः कविकुलविपिन्नपोदयविधौ ॥ ८ ॥
अधीत्य सुगुरोरेनां सुहृदं ज्ञापयन्ति ये । ते प्रजन्ते श्रुतार्थज्ञाः परमानन्दसंपदम् ॥९॥
प्रत्यक्षरं ससूत्राया अस्या मानमनुष्टुभां । शतानि च सहस्राणि पंचपंचाशदेव च ॥ १० ॥

इति श्रीमहामहोपाध्यायन्यायविशारदन्यायाचार्यश्रीमद्यशो-
विजयगणिविरचिता द्वात्रिंशद्द्वात्रिंशिका ।

समाप्त.

